# श्रीलक्ष्मणा परिणयं

## महाकाव्यं



राधाप्रिया ट्रिक्षण्डतत्वावधारकेण

प्रकाशितं ।

# श्रीलक्ष्मणा परिणयं ।

## महाकाव्यं ।



कविचन्द्रोपाधिकेन

पण्डित श्री भुवनेश्वर रथ शर्म्मणा

विरचितं ।

तेनैव कृतया सरल व्याख्यया समेतं ।



राधाप्रिया ट्रष्टिफण्ड तत्वावधारकेण

प्रकाशितं ।



कलिकाता नगर्य्यां सुलभ प्रेसाख्य यन्त्रालये

महाराणोपाधिकेन श्रीमणिलालेन मुद्रितं ।

इं १९२४ ।

## Office of the Principal Sanskrit College.

CALCUTTA, 25th January 1921.

---

This to certify that Laxman Parinaya by Pandit Bhubaneswar Ratha Kabyatirtha is an excellant poem and it has been composed, to a great extent in compliance with the requirments of para VII of Draft Deed of Radhapriya Trust Fund. The author is fairly entitled to the reward mentioned in the deed.

(Sd.) Ashutosh Shastri,
Principal.
Sanskrit College.

# निवेदनं ।

भूतपूर्वेण स्वर्गतेनाष्टदुर्गाधीश्वरेण विश्वनाथदेववर्म्मणा प्रोत्साहितेन मयैतत्काव्य मलेखि ।

पण्डितकुलतिलकेन वकुलकविना वृहत्पण्डितोपाधिकेन त्रिदिवस्थेन भुवनेश्वरमिश्र शर्म्मणा च संशोधितं ।

कलिकता संस्कृतकलेजाध्यक्षेण श्रीमताशुतोष शास्त्रिणा चानुमोदितं । प्रोक्तेन राज्ञा सञ्चितस्य राधाप्रिया ट्रष्टफण्डे-त्यभिहितस्य धनराशेः कियदंशेन श्रीयुक्तस्याधुनाष्टदुर्ग सुपरिण्टेण्डेण्ट महोदयस्यानुकूल्येन च मुद्रितं जातं । तस्यैव राज्ञः श्रीविश्वनाथदेववर्म्मणोऽनुरोधवशात् मयाप्यस्य काव्यस्य सरलव्याख्या कृता ।

प्रबन्धस्यास्य निर्म्माणानन्तरं पञ्चदशवर्षाण्यतीतानि । संप्रति श्रीमद्भिः सहृदयैर्व्विद्वद्भिः सानुग्रह मेतत्काव्यमामूलचूलं परिदर्शनीयं चेत्, तर्हिसफल श्रमोभविष्यामि ।

यद्यस्मिन् प्रबन्धे क्वापिकोऽपि दोषः स्यात्, तर्हिमन्निकटे कृपया प्रकाश्य मार्ज्जनीय । इति ॥

विनीतः—

२८।३।२४ पण्डितः श्रीभुवनेश्वर रथ शर्म्मा ।

राधानाथ पुर, आठगड, कटक ।

# श्रीलक्ष्मणापरिणयं ।

## प्रथमः सर्गः ।

श्रीसद्म वृन्दारकपाणिपद्म,
मुद्रां च नाशं तमसो मुनीनां ।
हृच्चन्द्रकान्त द्रुति मादधानं
वन्दे मुकुन्दाङ्घ्रि नखेन्दु वृन्दं ॥१॥

तत्रभवतः कवेः श्रीविष्णुरथशर्म्मणः पुत्रोऽहं "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये; सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे" इत्याद्यालङ्कारिक वचन प्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां; काव्यालापांश्च वर्ज्जयेदिति निषेधशास्त्रस्य असत्काव्यविषयता ञ्च पश्यन् लक्ष्मणापरिणयाख्यं काव्यं चिकीर्षुः चिकीर्षितार्थस्य निर्विघ्न परिसमाप्तये "आशीर्नमस्क्रिया वस्तुनिर्द्देशोवापि तन्मुखमिति आभिरान्यतमस्य प्रवन्धमुखलक्षणत्वात् आदौ श्रीमद्गोबिन्द-देवस्य चरणारबिन्द नखचन्द्र वन्दनरूपं मङ्गलमारभे ।

श्रीसद्मेति ॥ श्रियः शोभायाः लक्ष्म्याश्च सद्म स्थानभूतं वृन्दारकाणां देवानां पाणय एव पद्मानि तेषां मुद्रां मुद्रणञ्च पुनः तमसः अज्ञानस्य अन्धकारस्य च नाशं पुनः मुनीनां हृन्द्येव चन्द्रकान्ताः तेषां द्रुतिं क्षरणं प्रेम्णेतिभावः, आदधानं उत्पादयत् मुकुन्दस्य अङ्घ्रि नखा एव इन्दवः चन्द्राः तेषां

श्रीकृष्णलीलाविहृति प्रसङ्गा
द्वाचं पुनामीति मनीषयाहं ।
करोमि काव्यं न कवित्वकीर्त्त्यै
मृत्पात्र माज्यैः शुचि नातिमूल्यं ॥२॥
विधोः कदाचिद् यदुपुङ्गवोडु,
व्रातावृतस्याधिसभं स्थितस्य ।

छन्दं वन्दे, प्रणमामि रूपकालङ्कारः, अस्मिन्सर्गे इन्द्रवज्रोपेन्द्र वज्रयोः मिलनादुपजातिवृत्तं; स्यादिन्द्रवज्रायदितौजगौगः, उपेन्द्रवज्रा प्रथमे लघौसा, अनन्तरोदीरित लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । १ ॥

अथ कविः स्वाभिमानं परिहरन्नाह—

श्रीकृष्णेति । अहं श्रीकृष्णस्य लीलानां रासादिविलासानां विहृति प्रसङ्गात् विवरण प्रसङ्गात् वाचं स्ववाक्यं पुनामि पवित्रीकरोमि, इति मनीषया बुद्ध्या काव्यं करोमि रचयामि कवित्वकीर्त्त्यै, कविताजनितयशसे, न काव्यं करोमि, हि मृत्पात्रं मृण्मयभाजनं आज्यैः घृतैः शुचि भवति ॥ किन्तु अतिमूल्यं बहुमूल्यं न भवति। किन्तु विशुद्धं भवतीत्यर्थः। अत्र वैधर्म्येण दृष्टान्तालङ्कारः । २ ॥

अथ काव्यवर्ण्य बीजभूतं श्रीकृष्णान्तिकं नारदागमनरूपं वस्तु निर्दिशन् कथां प्रस्तौति। विधोरिति कदाचित् कस्मिन्नपि काले यदुपुङ्गवाः यादवश्रेष्ठाः सात्यक्यादय एव उडवः तारकाः तेषां व्रातेन समूहेन आवृतस्य वेष्टितस्य अधिसभं सभायां स्थितस्य विधोः श्रीकृष्णस्य चन्द्रस्येति च गम्यते। पुरः

सम्पादयत्सम्पतदर्कतर्कं
तेजः पुरोऽवातरदम्बरान्तः ॥३॥
तदास्य तेजःपटलस्य भाभिः
सहस्रभानुर्मलिनीवभूव ।
लोकावलीलोचनपद्मवृन्दं
द्राङ्मुद्रया दुःखमतः किमाप ॥४॥

पुरोभागे सम्पतन् यः अर्कः सूर्य्यः तस्य तर्कं तद्विषयकतर्कणां सम्पादयत् जनयत् तेजः अम्बरान्तः आकाशमध्यात् "अम्बरं व्योम्निवाससीत्यमरः" अवातरत् अवतीर्णं बभूव। रूपकोत्प्रेक्षे । ३ ॥

नारदागमनप्रकारमाह। तदेति। तदा तस्मिन् तेजोऽवतरण, समये सहस्रं भानवः किरणाः यस्य स तथोक्तः सूर्य्यः अस्य अवतीर्णस्य तेजःपटलस्य तेजःपुञ्जस्य भाभिः दीप्तिभिः "स्युः प्रभारुग्रुचिस्त्विड्भा भास्छविद्युतिदीप्तय इत्यमरः मलिनीबभूव, विवर्णो बभूव इत्यर्थः। अवतीर्णतेजः प्रभाभिभूतं सूर्य्यमण्डलं निस्तेजस्कमिव ददृश इत्यर्थः। अतः सूर्य्यमलिनत्वाद्धेतोः किं कार्यं इति हेतूत्प्रेक्षा। लोकावली लोचनान्येव पद्मानि तेषां वृन्दं द्राक् झटिति द्राक्झटित्यञ्जसाह्नयेत्यमरः; मुद्रयेव दुःखं क्लेशं आप प्राप तेजःप्रभाभिः जनता लोचनानि मुद्रितानि बभूवुरित्यर्थः, रूपकोत्प्रेक्षे। ४ ॥

नाग्निर्नभस्यर्कगतिर्न बाधः,
प्रवर्त्तमाना किमिदं त्व कस्मात् ।
इत्यूहमाना जनता क्षणेन,
तत्तेजसोऽन्तः पुरुषं ददर्श ॥५॥
कैलासशृङ्गो परिदीप्तदाव—
ज्वालातुला मुष्यजटा रुरुत्वक् ।
नितम्बलग्नाभ्रनिभा हिमाद्रे
मौञ्जीयुगाह स्म च तापसत्वं ॥६॥

नाग्निरिति । नभसि आकाशे निरवलम्ब इत्यर्थः, अग्निः वह्निः,न नसम्भवेदित्यर्थः तथा अर्कस्य,सूर्य्यस्य गतिः गमनं अधः प्रवर्त्ततेति अधःप्रवर्त्तमाना निम्नप्रसृता नभवेदितिशेषः, तिर्य्यक् प्रसृतत्वादिति भावः । अतः इदं वह्निसूर्य्यविलक्षणं एतत्तेजः अकस्मात् किं कथम्भूतं इति ऊहमाना तर्कयन्ती सन्दिहाना इत्यर्थः । जनता तत्रत्य लोकसमूहः क्षणेन तस्य अवतीर्णस्य, तेजसः अन्तः मध्ये पुरुषं कञ्चित्पुमांसं ददर्श दृष्टवती । सन्देहालङ्कारः । ५ ॥

कैलासेति । कैलासस्य तदाख्य पर्व्वतस्य शृङ्गोपरि शिखराग्रे दीप्ता या दावज्वाला वनाग्निशिखा तया तुला तुलना यस्याः सा अमुष्य पूर्व्वदृष्ट पुरुषस्य जटा च पुनः हिमाद्रेः हिमालयस्य नितम्बलग्नं कटकप्रदेशस्थं यत् अभ्रं तेन सदृशी तन्निभा मौञ्ज्या मुञ्जमयमेखलया युज्यत इति तद्युक् मौञ्जीसङ्गिनी इत्यर्थः रुरोः कृष्णमृगस्य त्वक् चर्म्म च एतद्द्वयमित्यर्थः तापसत्वं तपस्विभाव माहस्म व्यञ्जयामासे- त्यर्थः । उपमालङ्कारो । ६ ॥

कोऽयं मुनिर्ष्वित्य नुयोगवाञ्छा—
वतां जनानां प्रतिवाचिकं किं ?
वाताभिघातान्महती क्वणन्ती
सप्तस्वरैरस्य चकार वीणा ॥७॥

ततः शरत् पार्व्वण चन्द्रिकाभै
स्तेजोभिराराज्जिजनारदत्वं ।
स दर्शयित्वेव चकार लोकान्
तद्गौरवोद्यानिव दुग्धदिग्धान् ॥८॥

कोयमिति। मुनिषु ऋषिषु मध्ये निर्द्धारणे सप्तमी, अयं पुरोदृष्टः कः किं नामधेय इति अनुयोगवाञ्छावतां प्रश्नेच्छूनां जनानां प्रतिवाचिकं प्रत्युत्तरं कर्म्म ; वातस्य वायोः अभिघातात् ताड़नात् क्वणन्ती स्वनन्ती महती तदाख्या अस्य ऋषेः वीणा सप्तस्वरैः पञ्चमादिभिः चकार किंइति उत्प्रेक्षा। वायुताड़नाद् यदृच्छया स्वनन्त्या महत्या वीणया परिचिचीषूणां जनानां अस्य नारदत्वं सूचितमभूदित्यर्थः। ७॥

तत इति। सः नारद इत्यनुमितः मुनिः शरत्पार्व्वण-चन्द्रिकाभैः शरत्पूर्णिमा ज्योत्स्ना सदृशैः तेजोभिः स्वतनु कान्तिभिः तस्य ऋषेः गौरवेण सम्मानेन उद्यान् लोकान् जनान् आरात् समीपे निजस्य नारदत्वं नारदभावं दर्शयित्वा इव प्रदर्श्येव दुग्धैः क्षीरैः दिग्धान् लिप्तानिव चकार कृतवान्। निकटे स्व तनुकान्तिभिः तत्रत्य जनान् धवलयित्वा मुनिः स्वनारदभावं प्रकटयामासेत्यर्थः। उत्प्रेक्षालङ्कारः। ८॥

सदःसदां मौलिभिरानतानां
च्युतावतंसैः सह नारदीयौ ।
पादौ तदा दैवतवन्द्यमानौ
विभूषयामासतु राशु भूमीं ॥६॥
आशीर्व्वचोभिः श्रुतिसोदरैस्ते
ब्रह्माङ्ग-सम्भूत-मुनेः सदस्याः ।
उत्थाय तद्भाहृतदृक्प्रसारा
स्तस्थुस्तदा स्वर्य्यमुदन्तराले ॥१०॥

सदःसदामिति । तदा दैवतैः इन्द्रादिभिः वन्द्यमानौ नमस्करणीयौ नारदीयौ नारदसम्बन्धिनौ पादौ चरणौ आनतानां नम्राणां सदःसदां सभास्थितानां च्युताः गलिताः अवतंसाः शिरोभूषणानि येभ्य स्तैः मौलिभिः मस्तकैः सह आशु शीघ्रं भूमिं पृथ्वीं विभूषयामासतुः अलञ्चक्रतुः । तत्कालं नारदस्य भूमि संस्पर्शात् प्राक् सभास्था तद्गौरवेण नमस्क्रियाञ्चक्रुरित्यर्थः । सह्योक्त्यतिशयोक्त्यलङ्कारैः । ६ ॥

आशीर्व्वचोभिरिति । तदा प्रणिपातावसरे सदस्याः सभ्याः ब्रह्माङ्ग सम्भूत मुनेः ब्रह्मपुत्रस्य नारदस्य श्रुतिसोदरैः वेदतुल्यैः तथ्यै रित्यर्थः आशीर्वचोभिः आशीर्वादैः उत्थाय प्रणिपातादितिशेषः, तद्भाहृतदृक्प्रसाराः रुचिकान्त्या प्रतिहृत दृष्टिशक्तयः सन्तः आश्चर्य्यैः विस्मयः आकस्मिकागमनादितिभावः । मुत् हर्षः महनीय दर्शनादित्यर्थः तयोरन्तराले मध्ये तस्थुः स्थितवन्तः । तदा मुनिं दृष्ट्वा सर्वे सभ्याः विस्मिता हृष्टाश्च बभूवुरित्यर्थः । अतिशयोक्तिरलङ्कारः । १० ॥

प्रत्युद्गतस्यामल नील भाभिः
शौरेः शरच्चन्द्र मरीचि गौराः ।
मुनिप्रभा भानुसुतातरङ्गै
र्गङ्गोर्मिमाला मिलिता इवा सन् ॥११॥

मुनिं यथोक्ता धिकयार्च्चयातं
संपूजयन्नापि हरिस्तुतोष ।
एतादृशायाऽतिथयेऽप्ययोग्या
स्वदक्षिणाप्राणभृतां सपर्य्या ॥१२॥

प्रत्युद्गतस्येति । प्रत्युद्गतस्य मुनिगौरवात् प्रत्युत्तिष्ठतः शौरेः श्रीकृष्णस्य अमलनीलभाभिः निर्मलश्यामलकान्तिभिः मिलिताः सङ्गताः शरच्चन्द्रस्य शरत्कालीनस्य इन्दोः मरीचयः किरणा इव गौराः शुभ्राः मुनेः नारदस्य प्रभाः कान्तयः भानुसुतायाः यमुनायाः तरङ्गैः लहरीभिर्मिलिताः गङ्गोर्मिमाला इव गङ्गातरङ्गश्रेणयइव आसन् अभवन् । उपमालङ्कारः । ११ ।

मुनिमिति । हरिः श्रीकृष्णः तं मुनिं नारदं यथोक्तायाः यथोचितायाः अधिकया विशिष्टया अर्च्चया पूजया सम्पूजयन् सत्कुर्व्वन्नपि न तुतोष न तृप्तिं जगाम हि यतः एतादृशाय एवम्बिधाय नारदसदृशायेत्यर्थः अतिथये अभ्यागताय प्राणभृतां प्राणिनां स्वं निजमेव दक्षिणा यस्यां सापि सपर्य्या पूजा अयोग्या अननुरूपा भवतीतिशेषः अर्थान्तरन्यासः । १२ ॥

अथो हृषीकेश ऋषिं स्मितेन
पीयूषसेकाति सुखं विधाय ।
जगाद देवर्षि वचः श्रुतीच्छ,
त्सभ्याशयज्ञो मितमिष्टवाणीं ॥१२॥
जगन्ति वाचा शुभवन्ति यस्य
न युज्यते तत्कुशलानुयोगः ।

अथोदिति । अथो नारद सत्कारानन्तरं हृषीकाणां इन्द्रियाणां ईशः अध्यक्षः श्रीकृष्णः ऋषिं नारदं स्मितेन मन्दहासेन हेतुना पियूषसेकेन अमृतसेचनेन अतिसुखं अधिकानन्दो यस्य तथोक्तं विधाय कृत्वा देवर्षेः नारदस्य वचः श्रुतिं वचनश्रवणं इच्छन्तः ये सभ्याः सभासदः तेषां आशयं अभिप्रायं जानातीति तद्ज्ञःसन् मिता अल्पाक्षरा मिष्टा मधुरा या वाणी वचनं तां जगाद उवाच इत्यर्थः। श्रीकृष्णः नारदवचन श्रवणेच्छूनां सभ्यानां अभिप्रायं ज्ञात्वा स्मितपूर्वं मधुरमुवाच इति भावः। अनुप्रासालङ्कारः । १२ ॥

जगन्तीति । श्रीकृष्णवाक्यं विवृणोति । यस्य भवत इतिशेषः वाचा वचनेन जगन्ति भुवनानि तत्स्था इत्यर्थः;शुभवन्ति कुशल-युक्तानि भवन्ति । तस्य कुशलानुयोगः कुशलप्रश्नः नयुज्यते न सङ्गच्छते । पुनः हे महात्मन् निरीहतायाः निष्कामत्वाद्धेतोः भवतः

निरीक्षताया विहता: महात्मन्,
मम त्वदीयागमहेतुपृच्छा ॥१४॥
जाने भवद्वक्त्रनिरीक्षकाणां
पूर्णानि नः कर्णविलानि सूक्तैः ।
सुधाभिषिक्तैर्विदधातु मैषि
परोपकारव्रतिनो हि सन्तः ॥१५॥
यथामलाक्ता परिशोध्यकेशा-
नपेक्षते कङ्कतिका शलाकां ।

इतिशेषः मम त्वदीयस्य भवत्सम्बन्धिनः आगमनस्य योहेतुः तस्य पृच्छा प्रश्नः विहता निवृत्ता भवतीतिशेषः भवते स्वागतस्य आगमनहेतोश्च प्रश्नः न संघटते; इत्यर्थः युक्त्यलङ्कारः ॥१४॥

जान इति । भवतः वक्त्रनिरीक्षकाणां सुखापेक्षिणां नः अस्माकं कर्णबिलानि सुधाभिः अमृतैरिव अभिषिक्तानि तन्मयानीत्यर्थः तैः सूक्तैः सुवचनैः पूर्णानि भृतानि विदधातुं कर्त्तुं ऐषि आगच्छसि त्वमितिशेषः । हि यतः सज्जनाः परोपकार एव व्रतं विद्यते येषां तथोक्ताः परोपकारनिरताः भवन्तीति शेषः अर्थान्तरन्यासः । १५ ॥

यथेति । कङ्कतिका प्रसाधनी केशान् परिशोध्य संशोध्य मलाक्ता मलपूर्णा सती शलाकां कणिकां अपेक्षते केशसंस्पृष्ट स्वमलापकर्षार्थमित्यर्थः । तीर्थानि गङ्गादीनि पापात्मनां

पापात्मसङ्गोद्भव पापहत्यै
तीर्थानुशन्त्यङ्घ्रि रजस्तथाने ॥१६॥
त्रिकालसिद्धा जनिपात्रतामे
यतः पदन्यास पवित्रिताशाः।
यान्त्यालयं प्राक्चितपुण्यराशे
र्भवाहृशा भावि सुखोदयाय ॥१७॥
विश्वं भवांल्लोक महोपकार
व्रतीपुनानोऽटति दृष्टिपातैः।

पापिनां सङ्गात् संसर्गात् उद्भव उत्पत्तिर्येषां तेषां पापानां हत्यै नाशाय ते अङ्घ्रि रजः पादधूलिं उशन्ति कामयन्ते। उपमालङ्कारः। १६ ॥

त्रिकालसिद्धेति। मे त्रिकालेषु भूतभवद्भविष्यत्सु सिद्धा प्रसिद्धा पात्रता योग्यता अजनि कालत्रय प्रसिद्धं योग्योऽह मित्यर्थः यतः पदन्यासेन पादविन्यासेन पवित्रिताः पवित्रीकृताः आशाः दिशः सञ्चारदेशा इत्यर्थः यैस्ते भवन्तः प्राक्चितः पूर्व्व-सञ्चितः पुण्यराशिः सुकृतपुञ्जः येन तस्य प्रारब्धसत्कर्मण आलयं गृहं भाविनां भविष्यतां सुखानां उदयाय उत्पत्त्यै भविष्यच्छुभफलप्रदानार्थे मित्यर्थः यान्ति प्रविशन्तीत्यर्थः। युक्तिरलङ्कारः। १७ ॥

विश्वमिति। लोकानां जनानां महोपकार एव व्रतं संकल्प इति यावत् अस्तीति तथोक्तः नित्यपरोपकारनिरत

किं श्रावयित्वा जगतामुदन्तं
भृशाद्भुतं नो न मुदं तनोति ॥१८॥
दिग्दन्तिदन्ताहतितो हिमाद्रे
र्यथा त्रिमार्गावततार शुद्धा ।
तथैतदुक्तिश्रवणान्महर्षे
र्निरर्गला वागगलन्मुखाब्जात् ॥१९॥

इत्यर्थः भवान् दृष्टिपातैः अवलोकनैः विश्वं जगत् पुनानः पवित्रीकुर्व्वन् अटति भ्रमति स्वेच्छाविहारीत्वादितिभावः अतः भृशाद्भुतं अत्याश्चर्य्यान्वितं जगतां भुवनानां उदन्तं वार्त्तां श्रावयित्वा अस्मानितिशेषः नः अस्माकं मुदं आनन्दं किं कथं न तनोति न विस्तारयतीत्यर्थः। काव्यलिङ्गालङ्कारः ।१८॥

दिग्दन्तीति । शुद्धा विशुद्धा त्रिमार्गा गङ्गा दिग्दन्तिनः ऐरावतस्य दन्ताहतितः दन्तघाताद्धेतोः हिमाद्रेः हिमालयात् यथा अवततार अवतीर्णाभूत् तथा एतस्य श्रीकृष्णस्य उक्तिश्रवणात् वचनश्रुतेः हेतोः शुद्धा निरर्गला निष्प्रतिबन्धा उपमानपक्षेऽपि योज्यं वाक् वक्ष्यमाणेतिशेषः वचनं महर्षेः नारदस्य मुखाब्जात् वदनात् अगलत् निरगात् श्रीकृष्णवाक्यश्रवणानन्तरं नारदीवक्ष्यमाणां जगादेत्यर्थः। उपमालङ्कारः। १९।

न वेद किं वेदनिधे भवान् वा
ब्रूते तु शिक्षार्थमिदं जनानां।
यतो जगत्पङ्क निमग्नमेत-
दुद्धर्त्तुमाविर्भवतीह भूमौ ॥२०॥
गोलोक वैकुण्ठ पयोनिधिश्री-
श्वेताभिध द्वीपभुवां विलोक्य।

नारदोक्तं विशिनष्टि। नेति। वेदनिधे! सकल वेद निधान! भवान् वा किं न वेद जानाति सर्व्वं जानातीत्यर्थः तु किन्तु पुनः जनानां शिक्षार्थं इदं मादृशेषु जगदुदन्त प्रश्नरूपं ब्रूते कथयति सर्व्वज्ञस्य भवतः जगद्वार्त्ताप्रश्नो निष्प्रयोजनं इत्यर्थः यतः पङ्कनिमग्नं पापमग्नं एतज्जगत् उद्धर्त्तुं इहभूमौ आविर्भवति अवतीर्णोऽसि। अतः सर्व्वथा जनशिक्षार्थंमयि प्रश्न इति भावः। रूपकालङ्कारः। २० ॥

गोलोकेति। अहं गोलोकः नित्यस्थलं वैकुण्ठं ऐश्वर्य्य-स्थलञ्च पयोनिधौ क्षीरसमुद्रे या श्री-श्वेताभिधाद्वीपभूः श्वेतद्वीपश्च समाधिस्थलमित्यर्थः तासां वनस्य काननस्यैव निर्माधवत्वेन विष्णुशून्यत्वेन अन्यत्र वसन्तशून्यत्वेन "विष्णौ वसन्ते वैशाखे माधवः;" इति कोषः। प्रचितां सञ्जातां शोच्यां

निर्माधवत्व प्रथितामवस्थां
शोच्यां वनस्येव मनागसीदं ॥२१॥
चक्रं कुलालः कलयन् घटादीन्
यथा विधत्ते द्रुहिणं तथा या।
कृत्वा विधेयं विदधाति विश्वं
ते योगमाया स्मि तया स्म मूढ़ः ॥२२॥
भूभार संहार कृते ततस्त्वं
जातः क्षितौ मे स्मृति वर्त्मवर्त्ती।

शोचनीयां अवस्थां दशां विलोक्य मनाक् किञ्चित् असीदं अवसन्नोऽभूवं अहमितिशेषः। गोलोकादिषु कुत्रापि भवन्तमदृष्ट्वाऽईषद्दुःखितः आसमित्यर्थः। श्लिष्टोपमालङ्कारः। २१ ॥

उपक्रमात् ममावतारं सविशेषं जानतोऽपि युक्तयोगिनो भवतः कथमीदृगज्ञानमित्याशङ्क्याह। चक्रमिति। कुलालः कुम्भकारः चक्रं कलयन् भ्रमयन् यथा घटादीन् विधत्ते निर्माति तथा या ते योगमाया; मायाशक्तिः द्रुहिणं ब्रह्माणं मत्पितरमपीत्यर्थः विधेयं आयत्तं "विधेयो विघ्न आयत्त इत्यमरः" कृत्वा विश्वं प्रपञ्चं विदधाति निर्माति तया ब्रह्मसम्मोहकारिण्या जगद्धेतुभूतया मूढ़ः तिरोहितज्ञानोऽस्मि अभूवं अतोभवदवतारं विस्मृतवान्। उपमालङ्कारः। २२।

भूभारेति। ततः विस्मरणानन्तरं भूभारसंहारकृते दुष्टविनाशार्थं क्षितौ जातः अवतीर्णः त्वं मे स्मृतिवर्त्मवर्त्ती स्मरण-

स्वकृष्णा संज्ञां सफलां विधातुं
आकृष्य मां दर्शयसि स्वरूपं ॥२३॥
कदाचिदभ्यर्णचरो विरिञ्चि
मपृच्छ मालापविनोदकाले।
दारानुदारान् भवतोऽङ्गलक्ष्म्याः
सुयोग्यहारानिव भूमिसारान् ॥२४॥

पयारूढ़: सन् स्वानुग्रहेण मद्योगबलेन वेतिभाव:स्वस्य कृष्णासंज्ञां कर्षतीति कृष्णा इति व्युत्पत्तिसिद्धां आख्यां सफलां सार्थांविधातुं कर्त्तुं मां आकृष्य भवद्दर्शनोत्सुक्येन भूलोकमाहृत्येत्यर्थः स्वरूपंदर्शयसि। गम्योत्प्रेक्षा। भूभारसंहारार्थं अवतीर्णो-भवान् स्मृतः सन् भवद्दर्शनोत्कण्ठाकृष्टं भूलोकमागतं मां दयया स्वस्वरूपं दर्शयसीत्यर्थः। २३ ॥

अथ स्वागमन प्रयोजनं वक्तुं उपोद्घातं करोति। कदाचिदिति। कदाचित् कस्मिंचित् समये अभ्यर्णे निकटे-चरतीति तथोक्तः ब्रह्मनिकटस्थ इत्यर्थः अहं आलापविनोद-काले आभाषणावसरे विरिञ्चिं ब्रह्माणं उदारानुत्कृष्टान् भूमौ भूलोके सारान् प्रसिद्धान् भवतः अङ्गलक्ष्म्याः अवयवशोभायाः सुयोग्यहारान् समुचित मुक्तामालाइव स्थितान् दारान् भार्याः अपृच्छं अप्राक्षं। कदाचिदहं कथाप्रसङ्गे ब्रह्माणं श्रीमतः भूलोके कतिभार्याभविष्यन्तीति पृष्टवानिति भावः। उत्प्रेक्षालङ्कारः। २४ ॥

चतुर्मुखो वेदसखैर्मुखेन्दो
र्विनिर्गतै र्वागमृतै रथो मे ।
शुश्रूषुताशेषतृषं विनाश्य
भवद्दिदृक्षां वलयां चकार ॥२५॥

ब्राह्मीभवद्भक्तमुदेऽभ्युदेतुं
ब्राह्मीक्षितौ सा गल मग्रहीन्मे ।
तवाधुना साध्वनुयोगयोगात्
सोद्वेग निर्गत्वरता मुपैति ॥२६॥

चतुर्मुख इति । अथ प्रश्नानन्तरं चतुर्मुखः ब्रह्मा वेदसखैः वेदसदृशैः तथैवरीतिभावः मुखेन्दोः मुखचन्द्रात् विनिर्गतैः निःसृतैः वागमृतैः वचनामृतैः प्रत्युत्तरवचनैरितिभावः मे मम शुश्रूषुता एव अशेषतृट् अधिकतृषातां विनाश्य विनिवर्त्त्य ब्रह्मवाक्यानां. एतत्प्रश्नानुरूपत्वादितिभावः, भवद्दिदृक्षां भवद्दर्शनेच्छां बलयाञ्चकारः बर्द्धयामास । मत्प्रश्नानुरूपं ब्रह्मणः प्रत्युत्तर वचनं श्रुत्वा भवन्तंद्रष्टुं समुत्सुकोऽभवमितिभावः । रूपकालङ्कारः । २५ ।

ब्राह्मीति । सा पूर्वोक्ता ब्राह्मी ब्रह्मसम्बन्धिनी ब्राह्मी बाणी "ब्राह्मीतु भारती भाषागीर्वाग्वाणी सरस्वतीत्यमरः" क्षितौ भूलोके भवद्भक्तानां मुदे आनन्दनाय अभ्युदेतुं आविर्भवितुं मे गलं कण्ठदेशं अग्रहीत् गलग्रहणं कृतवती । तदा ब्रह्मवचनानि भूलोके प्रकाशयितुं ममेच्छा आसीदितिभावः । अधुना तव साध्वनुयोगस्य सत्प्रश्नस्य योगात् हेतोः सोद्वेगं यथात्तथा निर्गत्वरतां निर्गमनशीलतां उपैति प्राप्नोति अधुना भवत्प्रश्नेन तद्ब्रह्मवचनानि शीघ्रं प्रकाशयामीतिभावः । समासोक्तिरलङ्कारः । २६ ।

ब्रह्मागमास्ते व्यभिचारहीना
स्तदध्वनीना मुनयोऽप्यनीहाः।
वगाहितुं ते सुषमा सुधायां
पत्नीत्वमीषुः किमुतान्यकन्याः ॥२७॥
श्रीभीष्मकन्या प्रमुखा महिष्यः
स्वप्राक् तपःकल्पतरोः फलं याः।
प्रापाभवत्पाद सरोजसेवां
सर्वात्मनस्ता स्तव पूर्ब्बपत्न्यः ॥२८॥

ब्रह्मेति। व्यभिचारहीनाः तथ्याः अव्यभिचारिणश्चेति ध्वन्यते ते प्रसिद्धाः ब्रह्म ब्रह्मभूताः आगमाः बेदाः अपि तदध्वनीनाः बेदमार्गगामिनः अनीहाः निरभिलाषाः मुनयोऽपि ते सुषमा-सुधायां सौन्दर्य्यामृते वगाहितुं प्रवेष्टुं सौन्दर्य्यमनुभवितुमित्यर्थः पत्नीत्वं ईषुः चकमिरे। अन्याः इतराः कन्याः विवोढोत्सुकाः किमुत, कन्याः चकमिरे इति किमुवक्तव्यं। बेदाः मुनयोऽपि भवत्पत्नीत्वं कामयामासुरितिभावः। अर्थापत्त्यलङ्कारः। २७।

श्रीति। याः श्रीभीष्मकन्या प्रमुखाः रुक्मिण्याद्याः महिष्यः देव्यः स्वप्राक्तपसः निजप्राक्तनपुण्यस्यैव कल्पतरोः कल्पवृक्षस्य फलं फलभूतां भवतः पादसरोजसेवां पादपद्मशुश्रूषां प्रापाः प्राप्तवत्यः। ताः रुक्मिण्यादयः सर्वात्मनः ब्रह्मविष्णुशिवादि-मयस्य तव पूर्ब्बपत्न्यः प्राग्भवभार्य्याः अभवन्नितिशेषः ब्रह्मविष्णुशिवाद्यवस्थासु याया भवतः नित्यपत्न्यः ता एवाधुना रुक्मिण्यादिरूपिण्यः भवन्तीतिभावः। रूपकालङ्कारः। २८।

निर्मथ्यमानादरणेरिवाग्नि—
ज्वाला धरापाल पयोधिमध्यात् ।
आनीयमाना भजते भवन्तं
श्री रुक्मिणी-रूपपटावृतेयं ॥२८॥
त्वद्रूपसम्पच्चलचित्तवृत्ति
गौरी शरीरार्द्धहरस्य पत्युः ।

अथ क्रमशः रुक्मिण्यादीनां पूर्व्वावस्थां वर्णयति । निर्म्मथ्यमानादिति । निर्म्मथ्यमानात् मथितात् अरणेः अग्निज्वालेव निर्म्मथ्यमानात् मथितात् युद्धादिनापीड़िताच्च धरापालाः राजान एव पयोधिः समुद्रः तन्मध्यात् आनीयमाना आनीता रुक्मिण्याःरूपमेव पटः तेन आवृता अवगुण्ठिता इयं भवदङ्कान्तवर्त्तिनी श्रीः लक्ष्मीः भवन्तं भजते सेवते रुक्मणीरूपेण श्रीरवतीर्णेतिभावः। राघवत्वे भवेत्सीता रुक्मणीकृष्णजन्मनि इति विष्णुपुराणात् । उवाच कमलांकृष्णः स्मेराननसरोरुहः। त्वं गच्छ भीष्मकगृहं नानारत्नसुमण्डितं, वैदर्भ्या उदरेजन्म लभ देवि सनातनि। इति ब्रह्मवैवर्त्ते । उपमारूपकोऽलङ्कारौ । २८ ॥

त्वदिति । तव भवतः रूपसम्पदा सौन्दर्य्येण चला चञ्चला चित्तवृत्ति र्यस्या सा गौरी पार्व्वती शरीरार्द्धं देहार्द्धभागं हरतीति तथोक्तस्य अर्द्धनारीश्वरस्य स्वहृदयवेदिन इतिभावः पत्युः स्वामिनः शिवस्य भक्त्या हेतोः अनुमत्या स्वीकारेण जाम्बवत्या मूर्त्त्या जाम्बवतीस्वरूपेण स्वमात्रां स्वांशं अपलप्य निह्नुय भाति शोभते । भवद्यासक्ता गौरी शिवानुमत्या



4693

भक्त्यानुमत्या खलु जाम्बवत्या
मूर्त्यास्वमान्या मपरापय भाति ॥२०॥
भवत्पदाम्भोज मधुस्वरूपा,
नदीजगत्पङ्क विशोष हेतुः।
निःश्रेणिका स्वः सगरात्मजानां
त्वामेति कालिन्द्यभिधान माप्ता ॥२१॥
पयोधिवस्त्राखिलवीजधानी
धरैं र्दैं तागन्धं गुणाधुना किं।

कालयावतीयं जाम्बवतीरूपेण वर्त्तत इति भावः। दुर्गांशांशा जाम्बवती महिषीणां तथाखृता। अर्द्धांशेन शैलपुत्री यातुजाम्बवतोग्रहं। कैलाशेशङ्कराज्ञाच बभूव पार्व्वतीं प्रति इति ब्रह्मवैवर्त्ते। २० ॥

भवदिति। भवतः पदाम्भोजस्य पादपद्मस्य मधुस्वरूपा मकरन्दभूता विष्णुपदीत्वात् जगतां पङ्कविशोषे पापकर्द्दमशोषणे हेतुः तीर्थत्वात् सगरात्मजानां स्वः स्वर्गं प्रति निःश्रेणिका अधिरोहिणी भूता सगरपुत्राणां स्वर्गप्रापिकेतिभावः नदी, गङ्गा कालिन्द्याः तदाख्यायाः पट्टमहिष्याः अभिधानं नाम आप्ता प्राप्तासती त्वां भवन्तं एति प्राप्नोति। गङ्गादेवी कालिन्दी रूपेणास्त इति भावः। कालिन्दी सूर्य्य तनया गङ्गांशेन महीतले। इति ब्रह्मवैवर्त्ते। अत्र पङ्कस्य कर्द्दमत्वे विरोधः श्लेषमहिम्ना पापत्वे तत्परिहारः। अतोविरोधाभासालङ्कारः रूपकञ्च।२१॥

पयोधिवस्त्रेति। पयोधयः समुद्रा एव वस्त्रं यस्याः सा सागराम्बरा इत्यर्थः अखिलानां वीजानां धात्री उत्पत्तिस्थान

निधान गर्भा तव विश्वधात्री
न सत्यभामोपधिना प्रियास्ति ॥३२॥
वेदाधिदेवी कविकल्पवल्ली,
विद्यामयी सत्वगुणा स्वरूपा ।
सङ्गीत साहित्य सुकण्ठ भूषा
शैव्यावपुर्भाति च भारतीयं ॥३३॥

मित्यर्थः धरैः पर्व्वतैः धृता अवष्टब्धा गन्धः गुणो यस्याः सा गन्धवती तत्रक्षितिर्गन्धवतीति प्रमाणात् निधानगर्भा रत्नगर्भेत्यर्थः विश्वधात्री धरादेवी अधुना सत्यभामायाः उपधिः कपटं तेन सत्यभामाख्य महिषीछद्मना "कपटोऽस्त्रीव्याजदम्भोपधयः छद्मकैतवे" इत्यमरः तवप्रिया प्रियतमा नास्ति किमु भवतीत्यर्थः सत्यभामारूपेण धरादेवी अवतीर्णेतिभावः । वसुन्धरा सत्यभामा शैव्यादेवी सरस्वतीति ब्रह्मवैवर्त्त प्रमाणात् । रूपकालङ्कारः । ३२ ।

वेदाधिदेवीति । वेदानां ऋगादीनां अधिदेवी अधिष्ठात्री वागधिष्ठातृत्वात् कवीनां वाल्मिक्यादीनां कल्पवल्ली कल्पलता स्वरूपा विद्यामयी सकलविद्यास्वरूपा सत्वगुणास्वरूपा सङ्गीतानि च साहित्यानि च तान्येव सुकण्ठभूषाः कण्ठभूषणानि यस्याः सा इयं, भारती वाग्देवी शैव्यायाः तदाख्य महिष्याः वपुः शरीरं यस्याः सा शैव्यारूप धारिणीसती भाति शोभते सरस्वती शैव्यारूपेणावतीर्णेतिभावः । प्रमाणं पूर्व्वमुक्तं रूपकालङ्कारः । ३३ ।

श्रुतिप्रसूः श्रोत्रियसेव्यमाना
शास्त्राम्बुधीना मम्रतं विदन्ती।
त्वत्सेवनं साधयितुं प्रसूता
पत्नयाश्चमूर्त्त्यां तव नाग्नजित्याः ॥२४॥

रहस्य भङ्गो द्भवमन्द वादो
माभूच्च मे नारद नाम भाजः।
अतो रसज्ञा विरता मदीया
त्वत्पार्षदाना मवतार वादात् ॥२५॥

श्रुतिप्रसूरिति। श्रोत्रियैः वैदिकैः सेव्यमाना प्रत्यह-मुपास्यमाना शास्त्राणामेव अम्बुधीनां समुद्राणां अमृतं सारमित्यर्थः विदन्ती श्रुतिप्रसूः वेदमाता सावित्रीदेवीत्यर्थः तव सेवनंसेवां साधयितुं कर्त्तुं तवनाग्नजित्याः पत्न्याः महिष्याः मूर्त्त्यां स्वरूपेण प्रसूता जाता अवतीर्णेत्यर्थः सावित्रीनाग्न-जिती रूपेणास्त इति भावः। सावित्रीवेदमाताच नाम्ना-नाग्नजितीसतीति ब्रह्मवैवर्त्तप्रमाणात्। रूपकालङ्कारः।२४॥

रहस्येति। च पुनः नारद इति नाम आख्यां भजतीति तथोक्तस्य नारदनाम्नः मे रहस्यस्य गोपनीयस्य विषयस्य भङ्गेन प्रकाशेन उद्भव उत्पत्तिर्य्यस्य रहस्यभङ्गजनितः मन्दवादः विप्रवादः माभूत् नास्तु नारदस्य सकलरहस्य प्रकाशकत्वे सिद्धे सत्यपि आत्मनि नर्मोक्ति रियमिति भावः अतः हेतोः मदीयारसज्ञा जिह्वा त्वत्पार्षदानां भवत्पार्श्ववर्त्तिनां अवतारवादात् अवतरण कथन व्यापारात् विरता निवृत्ता भवतीति शेषः। रहस्यभङ्गभयेन अन्येषां भवदनुचराणा-मवतरणं न वर्णयिष्यामीति भावः। २५।

तवोत्सवश्री र्हृदि मेऽवतीर्णा
सम्पत्स्यमानाल्पदिनान्तरे तु ।
संगोपनेच्छा घटितोष्ठमुद्रां
द्राक्पाटयत्यङ्कुरितै र्वचोभिः ॥३६॥
राधाङ्ग लावण्य सुधाकणात्मा
गोलोक गोपीगणनाग्र रेखा ।
शापेन धर्म्मध्वजराजकन्या
प्रधर्षिता या तुलसीत्वया मीत् ॥३७॥

तवेति । तु पुनः अल्पदिनान्तरे स्वल्पकालानन्तरमितिभावः सम्पत्स्यमाना भविष्यमाणा तव भवतः उत्सवश्रीः विवाहोत्सव शोभा मे हृदि मनसि अवतीर्णा उपस्थिता सती सङ्गोपनेच्छया रहस्यगोपनेच्छया घटितां ओष्ठयोः मुद्रां मुद्रणां अङ्कुरितैः उत्कण्ठया प्ररोहोन्मुखै र्वचोभिः द्राक् हठात् विपाटयति विघटयति स्वल्पकालानन्तर भाविनं भवद्विवाहं ज्ञात्वा रहस्य रक्षेच्छां अवधूय अन्यत् किञ्चिद्विवच्मि । अतिशयोक्तिरलङ्कारः ।३६ ।

राधेति । राधायाः गोलोकेश्वर्य्या अङ्गलावण्यं शरीर सौन्दर्य्यमेव सुधा अमृतं तस्याः कणालेशएव आत्मायस्याः सा राधाङ्गसम्भूतेत्यर्थः गोलोकगोपीनां या गणना सङ्ख्या तस्यां अग्ररेखा प्रथमलेखनं यस्याः सा गोप्यग्रगणनीया या तुलसी तदाख्या राधासखी शापेन राधिकाभिशापेन धर्म्मध्वजस्य तदाख्यस्य राज्ञः कन्या सुता शङ्खचूड़ पत्नी त्वया भवता प्रधर्षिता बलात्कारेणसम्भुक्ता आसीत् । अत्र ब्रह्मवैवर्त्ते प्रकृतिखण्ड चरित मनुसन्धेयं । ३७ ।

शापेन यस्या स्तव मूर्त्तिरन्या
शैलात्मिका कीट विकर्त्तितांशैः।
गाङ्गेय तोयैरिव भूरिशाल-
ग्रामैः समग्रां प्रपुनाति भूमीं ॥३८॥
गौर्य्यां यथेशोऽर्कइव प्रभायाः
श्रीवत्सतः कौस्तुभतो यथा वा।

शापेनेति। यस्याः तुलस्याः शापेन प्रधर्षणा हेतुकेन तव भवतः शैलात्मिका गण्डकीतीरवर्त्ति शैलरूपिणी तव अन्या अपरामूर्त्तिः तनुः कीटैः बज्रकीटैः बिकर्त्तिताः ये अंशाः भागाः तैः तत्स्वरूपैः भूरिभिः बहुभिः शालग्रामैः तदाख्यपाषाणैः गाङ्गेयतोयैः गङ्गाजलैरिव समग्रां भूमिं प्रपुनाति पवित्रीकरोति। यस्याः शापेन शैलमयस्य भवतः बज्रकीटकर्त्तित शालग्रामशिलाभिः जगत्पवित्रीभवतीति भावः। अहञ्च शैलरूपीच गण्डकीतीर सन्निधौ, अधिष्ठानं करिष्यामि भारते तवशापतः। बज्रकीटाश्चक्रमयो वज्रदंष्ट्राश्च तत्रवै। तच्छिलाकुहरे चक्रं करिष्यन्ति मदीयकमिति। ब्रह्मवैवर्त्तप्रमाणात्। उपमालङ्कारः। ३८।

गौर्य्येति। ईशः शिवः गौर्य्यां पार्व्वत्यां यथा, अर्कः सूर्य्यः प्रभायाः भास इव ते भवतः प्रतीकः अङ्ग श्रीवत्सतः तदाख्यश्वेतलोमचिह्नस्य वा कौस्तुभतः तदाख्यमणेः यथा (उभयत्रसार्व्वविभक्तिकस्तसिः) यस्याः तुलसीदेव्याः अङ्गसम्भूततरोः

यदङ्गसम्भूत तरोर्दलाल्या
न ते प्रतीकः सहते वियोगं ॥३९॥
वैकुण्ठपृष्ठे भवदोष्ठनिष्ठं
स्पष्टं च पीयूषरसं निपीय।
वाणी रमोच्छिष्टमपिप्रतुष्टा
विगर्हयामास विनायकं या ॥४०॥

केशाख्यावयवजात वृक्षविशेषस्येति यावत्। तुलसी केशसम्भूता तुलसीति ततः श्रुता इति वचनात् दलाल्याः पत्रसमूहस्य वियोगं विश्लेषं न सहते। सर्व्वत्र पञ्चमीत्वेऽपि न दोषः। तुलसीपत्र विच्छेदं शालग्रामं करोति यः। तस्यजन्मान्तरे कान्ते! स्त्रीविच्छेदो भविष्यतीति ब्रह्मवैवर्त्ते प्रकृतिखण्ड एकविंशाध्याये द्रष्टव्यं। मालोपमालङ्कारः। ३९।

वैकुण्ठेति। या तुलसी वैकुण्ठस्य तदाख्य विष्णुलोकस्य पृष्ठे उपरि वाणी सरस्वती रमा लक्ष्मीश्च ताभ्यां उच्छिष्टं भुक्तावशिष्टमपि भवतः ओष्ठनिष्ठं अधरस्थितं पीयूषरसं अमृतरसं स्पष्टं व्यक्तं निपीय भवत्पत्नीसतीत्वर्थः प्रतुष्टा सन्तुष्टा वहुजन्मतपःफल लाभादिति भावः सती विनायकं गणेशं विगर्हयामास निन्दितवती। अतिशयोक्तिरलङ्कारः। पुराकिल तुलसीदेवी तपश्चरणसमये गणेशं तिरस्कारेति ब्रह्मवैवर्त्तीय प्रकृतिखण्डकथात्रानु सन्धेया। तस्मात् न तुलस्या गणेश्वरमिति वाक्यानुसारेण व्यवहारश्च दृश्यते। ४०।

पद्मा पयोधेरिव शुक्तितो वा
मुक्तादिवश्चन्द्रकलेव भद्रे।
जाता त्रिलोकी ललना ललाम-
रत्नं वृहत्सेन वधूदरात्सा ॥४१॥
तज्जन्मकाले विमला दिगन्ताः
खात्पुष्पवृष्टिः सुरवाद्यनादः।
अभूत्तुषार स्तुलसीवनीय-
सौरभ्यवान् वायुरवात्समन्तात् ॥४२॥

पद्मेति। पद्मा लक्ष्मीः पयोधेः क्षीरसमुद्रादिव मुक्ता-फलं शुक्तितः मुक्तास्फोटादिव चन्द्रस्यकला दिवः आकाशादिव त्रिलोकीललनानां त्रिभुवनस्त्रीणां ललामरत्नं शिरोमणिभूता सा पूर्व्वोक्त यच्छब्दपरामृष्टा तुलसीदेवी भद्रे तदाख्य देश-विशेषे वृहत्सेनस्य भद्राधिपस्य वध्वाः भार्य्यायाः उदरात् कुक्षेः जाता उत्पन्ना। मालोपमालङ्कारः। अर्द्धांशेनैवतुलसी लक्ष्मणाराजकन्यका। इति ब्रह्मवैवर्त्ते श्रीकृष्णवचनात्। ४१ ॥

तदिति। तस्याः कन्यायाः जन्मकाले दिगन्ताः दिक्प्रान्ताः विमलाः निर्म्मलाः अभूवन्निति शेषः खात् आकाशात् पुष्पवृष्टिः अभूत् सुराणां देवानां वाद्यनादः वादित्रशब्दः अभूत् तुषारः शीतलः तुलसीवनीयं तुलसीवनसम्बन्धि यत्सौरभं सुगन्धः तद्वान् तुलसी गन्धविशिष्ट इत्यर्थः वायुः वातः समन्तात् अवात् ववौ पर्य्यायोक्तिरलङ्कारः। ४२ ॥

सर्व्वाङ्ग सन्मङ्गल लक्षणानां
खमृक्षसंघस्य यथा खनीयं।
दृष्टायतस्तज्जनकेन बाला-
भ्यधायि नाम्ना खलु लक्ष्मणेति ॥४३॥
यथा सरित्प्रावृषि वा पराह्णे
छायाकलेन्दोरिव शुक्लपक्षे।
विवर्द्धमाना स्वजन प्रमोद-
समुद्र मेषोद्दलयां चकार ॥४४॥

सर्वेति। ऋक्षसंघस्य नक्षत्र समूहस्य खं आकाश इव सर्वाणि यानि अङ्गानि तेषु सन्ति यानि मङ्गल लक्षणानि तेषां खनी आकरभूता इयं बाला तज्जनकेन तत्पित्रा दृष्टा यतः अतः लक्ष्मणा इति नाम्ना अभ्यधायि अभिहिता सर्व्वलक्षण सम्पन्नत्वात् लक्ष्मणा इति नाम प्राप सा कन्या इति भावः। उपमालङ्कारः। ४३।

यथेति। एषा लक्ष्मणा प्रावृषि वर्षासु सरित् यथा नदीव अपराह्णे छायावा अनातप इव शुक्लपक्षे इन्दोः चन्द्रस्य कला सेवा इव विवर्द्धमाना परिपुष्टा सती स्वजनानां पित्रादीनां प्रमोद आनन्द एव समुद्रः तं उद्दलयाञ्चकार। वर्द्धयामासेत्यर्थः क्रमशः परिवर्द्धितां लक्ष्मणां दृष्ट्वा पित्रादयो जहृषु इतिभावः। मालोपमालङ्कारः। रूपकञ्च। ४४॥

स्नेहस्य पात्रं स्वपितृ प्रधान
सद्बान्धवानामकृशां दशां च ।
प्राप्ताद्युतिज्वाल विभासिताशा
भृशं दिदीपे कुलदीपिकेयं ॥४५॥
सत्संप्रसूति जननी तयैव,
नान्यैरपत्यैश्च तथा विभाति ।
शशिश्रिया रम्यतरा यथाहि
नक्षत्र लक्षैर्नतथा त्रियामा ॥४६॥

स्नेहस्येति । स्वपितृ प्रधानाः स्वजनकमुख्याः ये सद्बान्धवाः बन्धवः तेषां स्नेहस्य वात्सल्यस्य च तैलादेश्च पात्रं आधारभूता अकृशां उत्तमां स्थूलाञ्च दशां अवस्थां वर्त्तीञ्च प्राप्ता द्युतिः कान्तिरेव ज्वाला तया विभासिता आलोकिता आशा दिशो यया तथोक्ता इयं कुलदीपिका वंशप्रकाशिकेत्यर्थः भृशमत्यन्तं दिदीपे दीप्ता बभूव श्लिष्टरूपकं । ४५ ॥

सदिति । जननी तन्माता तया लक्ष्मणाया हेतुना यथा यादृक् सत्संप्रसूतिः सुसन्ताना विभाति अन्यैः इतरैः अपत्यैः पुत्रादिभिः तथा तादृक् लक्ष्मणयेवेतिभावः न विभातीतिशेषः । लक्ष्मणैव स्वमातुः सुसन्ततिरितिभावः दृष्टान्तमाह, शशिश्रियेति हि त्रियामा रात्रिः शशिश्रिया चन्द्रशोभया यथा रम्य तरा मनोहरा तथा नक्षत्रलक्षैः तारका समूहैः न रम्य तरा भवतीतिशेषः । दृष्टान्तालङ्कारः । ४६ ।

ज्योत्स्ना चलन्ती तल जानु पातैः
सा कान्ति पीयूषरसैः स्वपित्रोः।
चक्षुश्चकोरोत्सव माद्धाना
हर्षाम्बुधिं प्रोच्छलयां चकार। ४७।

मामेति तस्याः प्रथमावतीर्णा
सरस्वती निन्द्रित वेणुवीणा।
पित्रोर्हृदौ स्नेह मधुप्रलिप्ते
प्रमोद पीयूषभुजौ चकार। ४८।

ज्योत्स्नेति। तलयोः करतलयोः जानुनोः पातैः न्यासैः चलन्तिरिङ्गमाणा शिश्वादितिभावः सा लक्ष्मणा ज्योत्स्ना कौमुदी व्यस्तरूपकं कान्तिपियूषरसैः शोभामृतैः स्वपित्रोः चक्षुंष्येव चकोराः तेषां उत्सवं आनन्दं आदधाना कुर्व्वाणा सती हर्षाम्बुधिं आनन्दसमुद्रं प्रोच्छलयाञ्चकार उच्छलयामास लक्ष्मणायाः तलजानुपात पुरःसर रिङ्गण दर्शनात् पित्रोः चक्षुः प्रीतिरानन्दातिशयश्च वभूव इतिभावः। रूपकालङ्कारः। ४७।

मेति। निन्द्रिताः तिरस्कृताः वेणवः वंशवाद्यविशेषाः वीणाः यया तथोक्ता तस्याः लक्ष्मणायाः मामेति मामा इत्याकारिका प्रथमं आदौ अवतीर्णा उच्चरिता सरस्वती वाणी पित्रोः जननीजनकयोः हृदौ हृदये स्नेहैः वात्सल्यैरेव मधुभिः प्रलिप्ते तथा प्रमोद आनन्द एव पीयूषं अमृतं तद्भुजौ जात इति तथोक्ते चकार कृतवती। लक्ष्मणायाः प्रथमोच्चारितां मामेति वाणीं श्रुत्वा पितरौ सानन्दौच वभूवतुरितिभावः। रूपकालङ्कारः। ४८॥

मृदं ग्रसन्त्याः परतर्जितायाः
सुल्पप्ररोह द्दशनाङ्कुरायाः ।
स्मेराख्यमाघ्राय पिता न तस्या
स्तुतोष निर्म्माल्यमिव त्वदीयं ॥४६॥
तां धूलिखेला निरतां समस्ताः
प्रागजन्मविद्याः सकलाः कलाश्च ।
सकृत्समाराधनतः प्रसन्नाः
स्वनाट्यशालां विदधुश्चिराय ॥५०॥

मृदमिति । मृदं मृत्तिकां मन्मृत्तिकाप्रशस्तेत्यमरः ग्रसन्त्याः भक्षयन्त्याः शिशुस्वभावादितिभावः अतः परितर्जितायाः मात्रादिभिः सक्रोधं भर्त्सितायाः स्वल्पं प्ररोहन्तः प्रादुर्भूताः दशनाङ्कुराः दन्ताग्राणि यस्याः तस्याः लक्ष्मणायाः स्मेरं ईषद्धासयुक्तं यत् आस्यं मुखं तत् त्वदीयं भवत्सम्बन्धिनं निर्माल्यमिव आघ्राय पिता वृहत्सेन इत्यर्थः न तुतोष नतुष्टो बभूव । पुनः पुनः आघ्रातवान् इत्यर्थः । उपमालङ्कारः । ४६ ॥

तामिति । समस्ताः सकलाः अष्टादशसंख्यकाः प्रागजन्मनः पूर्व्वजन्मनः विद्याः च पुनः सकलाः सर्वाः चतुःषष्ठी संख्यकाः कलाः सकृत्समाराधनतः एकवाराभ्यासेनेत्यर्थः प्रसन्नाः आयत्तीभूताः सत्यः धूलिखेलानिरतां धूलिक्रीड़ासक्तां तां लक्ष्मणां चिराय स्वेषां नाट्यशालां रङ्गभूमीं विदधुः विहित-वत्यः धूलिक्रिड़ावसरेऽपिलक्ष्मणायां प्राक्तनविद्याः कलाश्च एकवाराभ्यासेन स्थिरीभूताः सत्यः चिराय नन्तुरितिभावः । रूपकालङ्कारः । ५० ॥

शिशुः स्मरः कृत्रिम पुत्रिकाणां
विवाहकेलीषु पुरोहितस्तां।
मा द्रौं तदाध्यापयतिस्म लज्जां
साकूतहासं कुशहाव भावान्॥५१॥
तारुण्यमीष च्छिशुतामपास्या
प्यासीनमस्यां न करोति राज्यं।

शिशुरिति। शिशुः प्रथमाविर्भूत इत्यर्थः स्मरः कामः कृत्रिमपुत्रिकाणां पाञ्चालिकानां विवाहा एवकेल्यः क्रीड़ाः तासुपुरोहितः पुरोधाः प्रवर्त्तक इति यावत् सन् तां माद्रीं लक्ष्मणां तदाक्रीड़ावसरे लज्जां त्रपां साकूतहासं साभिप्राय-स्मितं कुशाः चीणाः ये भावाः मनोविकाराश्च हावाः अपाङ्ग-वीक्षणादयः तान् विकारोमानसोभाव इत्यमरः अध्यापयतिस्म शिक्षयामास॥ लक्ष्मणा क्रीड़ायां पाञ्चालिकाविवाह प्रसङ्गे ईषत्स्मराविर्भावेन प्रथमं लज्जासाकूतस्मितादिकं चकारेति भावः। रूपकालङ्कारः। एतेनास्यावयः सन्धिरुक्ता।५१॥

तारुण्यमिति। अस्यां लक्ष्मणायां तारुण्यं यौवनं शिशुतां शैशवं ईषत् स्वल्पमपास्य अपसार्य्य आसीनं वर्त्तमानं सदपि राज्यं 'राजत्वं' पूर्णाधिकारमितियावत् न करोति एतेनास्या वयः सन्धिरुक्ता ततः यौवनस्य पूर्णराजत्वाभावा-द्धेतोः अस्याः लक्ष्मणायाः कुचौ स्तनौ सङ्कुचतौ मुद्रिते ये

अथास्ततः संकुच दातपत्र
सुवर्ण दण्डाग्र युगं कुचौकिं ॥५२॥
सा रास पीयूषरसं श्रुतिभ्यां
निपीय राधाप्रणयेन्दु युक्तं ।
लीनेन्द्रियैः षट्चरणत्व मेति
त्वत्पादपद्मेऽत्र समाधिलब्धे ॥५३॥
सामन्मुखेनोद्ग्रथिते त्वदीये
गुणै र्विचित्रे प्रियवाक्य जाले।

आतपत्रे तयोः यत् सुवर्णदण्डाग्रयुगं तत् भवतः किमुद्गतमुत्प्रेक्षा अन्यथा आतपत्रयोः प्रसारणं स्यादितिभावः। ५२ ॥

सेति। सा लक्ष्मणा राधायाः वृषभानु सुतायाः यः प्रणयः भवद्गत इत्यर्थः स एवेन्दुः तेन युक्तं सम्वलितं रासोवृन्दावन सम्भूत एव पीयूषरसः तं श्रुतिभ्यां कर्णाभ्यां निपीय अत्यादरेण श्रुत्वेत्यर्थः समाधिना सततभावनयेत्यर्थः लब्धे प्राप्तेऽत्रास्मिन् तव भवतः पादपद्मे इन्द्रियैः सहलीना अत्यन्ता सक्ता सती षट्चरणत्वं भ्रमरभावं एति प्राप्नोति। लक्ष्मणाभवतः रासलीलां श्रुत्वा भवदासक्ता भवतीतिभावः। रूपकालङ्कारः। ।५३॥

सेति। सा कुरङ्गदृक् मृगाक्षी भवदासक्ता लक्ष्मणा त्वदीयैः भवत्सम्बन्धिभिः गुणैः सौन्दर्य्यादिभिरेव तन्तुभि-र्विचित्रे चित्ताकर्षके मन्मुखेन मम वदनेन कर्त्ता उद्ग्रथिते

कुरङ्ग दृक् संपतिता भृशोत्का
पाणिग्रहं प्रार्थयते तवैव ॥५४॥
मूर्त्त्याष्टमूर्त्तें र्यजमान मय्या
यथातनूनां भवदेक भक्त्या ।
तयाष्टसंख्या परिपूर्त्तिरस्तु
सम्मानिता त्वन्महिषी गणस्य ॥५५॥
शाल्वेन काशीशसुतेव माद्री
यथा हताशा भवता भवेन्न ।

विरचिते प्रिये प्रीतिकरे वाक्यजाले वाक्य समूहे आनय इतिगम्यते सम्पतिता अतः भृशोत्का अत्युत्कण्ठिता सती तवैव पाणिग्रहं विवाहं हस्तावलम्बनञ्चेति गम्यते प्रार्थयते कामयते पुनः लक्ष्मणा मद्वचनात् भवद्गुणगणं श्रुत्वा उत्कण्ठिता सती भवन्तं कामयत इतिभावः । रूपकालङ्कारः ।५४॥

मूर्त्त्येति । भवति त्वयि एका भक्तिः यस्याः तया यजमानस्य भगवद्भक्तत्वादितिभावः यजमानमय्या यजमान स्वरूपया मूर्त्त्या अष्टमूर्त्तेः शिवस्य तनूनां यथा मूर्त्तीना मिव भवदेकभक्त्या त्वदेकासक्तया तया लक्ष्मणया त्वन्महिषीगणस्य भवत्पत्नीसमूहस्य अष्ट सङ्ख्यायाः परिपूर्त्तिः पूरणं सम्मानिता सत्कृता सम्मताच अस्तु भवतु । प्रार्थनायां लोट् । लक्ष्मणां अष्टममहिषीत्वेनानुगृहाणेतिभावः । उपमालङ्कारः । ५५ ॥

शाल्वेनेति । काशीशसुता काशीराजदुहिता अम्बा शाल्वेन सौभपतिनेव माद्री लक्ष्मणा भवता हताशा निराशा

तथा विधेयं ननु रुक्मिणीव
ग्राह्यास्तु सा भक्तिवशं वदस्त्वं ॥५६॥

भूपानां दर्पभङ्गस्तवविजययशो लक्ष्मणाशाप्रपूर्त्तिः
प्रीतिर्मद्रस्यभर्त्तुर्मम कलिकुतुकालोकनं चैकबीजात्।
यस्मादुत्पद्य लोकोत्तरकृति पटलं हर्षयेत्पिष्टपालीं
तं वक्तुं मद्रभूपं कृतपण तनयोद्वाहमीहे प्रयाणं ॥५७॥

यथा येनप्रकारेण न भवेत् तथा विधेयं कर्त्तव्यं ननु भो रुक्मिणीव सा ग्राह्या स्वीकर्त्तव्या अस्तु प्रार्थनायां लोट्। यतः हे प्रभो! त्वं भक्तिवशं-वदः भक्त्यधीनः भवसि। काशीराजसुताम्बा भीष्मगृहीतत्वात् शाल्वेन निरस्तेति महाभारत कथावानुसन्धेया। उपमार्थान्तरन्यासौ। ५६॥

भूपानामिति। भूपानां राज्ञां दर्पभङ्गः अभिमानहानिः तव भवतः विजयेन सर्वोत्कर्षेण यद्यशः कीर्त्तिः लक्ष्मणायाः आशाप्रपूर्त्तिः मनोरथसिद्धिः मद्रस्य-भर्त्तुः वृहत्सेनस्य प्रीतिः अनुरूपजामातृ लाभादानन्दः मम कलिकुतूकालोकनं कलहकौतुकदर्शनञ्च एतत् लोकोत्तरं अलौकिकं यत् कृति-पटलं कार्य्यजातं तत् कर्त्तुं एकबीजात् एककारणभूतात् यस्मात् उत्पद्य उद्भूय पिष्टपालीं भुवनजातं हर्षयेत् आनन्दयेत् तं बीजभूतं कृतः पणो यस्मिन् तादृशं तनयोद्वाहं कन्याविवाहं मद्रभूपं वृहत्सेनं वक्तुं उपदेष्टुमित्यर्थः प्रयाणं गमनं ईहे इच्छामि यामीत्यर्थः पर्य्यायोक्तिरलङ्कारः। ५७॥

वृत्तं वर्त्तिष्यमाणं स द्युतिपिशुनयन्नाट्यविष्कम्भको वा
निर्विष्कम्भं नभो भाभरविततमृषिर्भासयन्नुत्पपात।
चेतोमीनं मुरारेर्नवरससुषमां लक्ष्मणां पङ्कजास्यां,
व्याकोषेन्दीवराक्षीं स्मितकुमुदवतीं—
दीर्घिकां संगमय्य ॥५८॥

वृत्तमिति। सः ऋषिः नारदः नाट्ये नाटकादौ विष्कम्भकोवा वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शक इत्यादि लक्षणलक्षितो यः प्रविभागः स इव वृत्तं अतीतं रुक्मण्यवतरणादिकं वर्त्तिष्यमाणं भविष्यत् सपत्नलक्ष्मणोद्वाहहेतुकं राजदर्पभङ्गादि इति एतत्पूर्वोक्तं पिशुनयन् सूचयन् मुरारेः श्रीकृष्णस्य चेत एव मीनः मत्स्यः तं नवरसेन नवानुरागेण जलेन च सुषमा शोभा यस्या स्तां पङ्कजास्यां पद्ममुखीं व्याकोषेन्दीवराक्षीं विकचोत्पल-नयनां लक्ष्मणापक्षे उपमित समासः दीर्घिका पक्षे रूपक समासः स्मितानि मन्दहासा एव कुमुदानि कैरवाणि अन्यत्र उपमितसमासः तद्वतीं हासकैरव-युक्तां लक्ष्मणां दीर्घिकां वापीं व्यस्तरूपकं सङ्गमय्य प्रापय्य भाभरविततं कान्तिपुञ्जव्याप्तं नभः आकाशं भासयन् प्रकाशयन् निर्विष्कम्भं निरर्गलं अप्रतिबन्धकमित्यर्थः तद्विष्कम्भोऽर्गलं न नेत्यमरः उत्पपात उद्दतिष्ठत्। उपमारूपकालङ्कारौ। ५८।

योऽभूद्विष्णुरथस्य चित्ररचनादक्षस्य तूर्णं कवेः
धीरः श्रीभुवनेश्वरः सुविदुषामग्रस्य पुत्रो रथः ।
तस्य श्रीमति लक्ष्मणापरिणये काव्ये कृतावादिमः,
सर्गोऽयं कविचन्द्रतामुपगतस्यागाद्दशामन्तिमां ॥५६॥

यइति । सुविदुषां सुपण्डितानां अग्रस्य अग्रगण्यस्य तूर्णं शीघ्रं चित्ररचनायां पद्मबन्धादिकवितायां दक्षस्य प्रवीणस्य कवे विष्णुरथस्य तन्नाम्नः पुत्रः धीरः पण्डितः यः श्रीभुवनेश्वरः रथः अभूत् । कविचन्द्रतां कविचन्द्रोपाधिमित्यर्थः उपगतस्य प्राप्तस्य तस्य कृतौ प्रयत्नभूते श्रीमति शोभासम्पन्ने लक्ष्मणा-परिणये लक्ष्मणायाः तदाख्यायाः मद्रराजकन्यायाः परिणयः विवाहोयस्मिन् वर्ण्यतइत्यर्थः तस्मिन् तदाख्ये काव्ये अयं आदिमः प्रथमः सर्गः अन्तिमां दशां शेषावस्थां अगात् ॥ समाप्तइत्यर्थः ।

श्रीलक्ष्मणा परिणयव्याख्यायां
प्रथमसर्गः समाप्तः ।





## द्वितीयः सर्गः ।

रुचिर मद्र नृपालय दीर्घिका-
समुदिता मुखपङ्कजशोभिनी ।
कमलिनी व्यलसद्विकल लक्ष्मणा ।
वितत मञ्जिमकीर्त्ति सुसौरभा ॥१॥
तनुवनं नवयौवन माधवो
वरतनोः शिशुताशिशिरात्यये ।

रुचिरेति। रुचिरो मनोहरो यो मद्रनृपस्य आलयः गृहं स एव दीर्घिका वापी तस्यां समुदिता जाता वदनमेव पङ्कजं पद्मं अन्यत्र मुखमिव पङ्कजं तेन शोभत इति तथोक्ता विततं मञ्जिम कीर्त्तिः सौन्दर्य्यजनित यश एव सौरभं सुवासो यस्याः सा लक्ष्मणा कमलिनी पद्मिनी तज्जातीयाच व्यलसत् अशोभत किल। रूपकालङ्कारः। १ ॥

तनुवन मिति। नवं नूतनं यत् यौवनं तदेव माधवः वसन्तः वरतनोः वराङ्गयाः तस्याः लक्ष्मणायाः शिशुता शैशवमेव शिशिरः हेमन्तः तस्य अत्यये अपगमे तनुः देह एव वनं

रतितनूद्भवकेलि कृतेततः
समतनो दतिसौरभ संभृतं ॥२॥
विरलधूलि सुखेलन कुञ्जगटी
न विरता किमु कोकिलभारती
अभदवङ्कुरितौ स्तवकस्तनौ
गजगते रपिकेतकभा बभौ ॥३॥

काननं ततं रतितनूद्भवयोः रतिकामयोः केलिकृते विलासार्थं सुरतार्थ मितियावत् अतिसौरभेण अधिकसुगन्धेन सम्भृतं पूर्णं समतनोत् अकरोत् लक्ष्मणायाः यौवनोदयोऽभूदित्यर्थः । रूपकालङ्कारः । २ ॥

अथ श्लोकद्वयेन लक्ष्मणायाः यौवनरूपवसन्तोदयं वर्णयति विरलेति, विरला असन्तता एकवचयः सर्वाः अन्यत्र शिशिरान्तत्वात् धूलिसुखेलनं धूलिक्रीडैव कुञ्जगटी कुञ्जगटीका गजस्य गतिरिव गतिर्य्यस्याः सा तस्याः लक्ष्मणायाः न विरता न निवृत्ता किमु निवृत्तैव, कोकिलस्य पिकस्य भारती वाणी तत्सदृशीवाणीयर्थ सैव कोकिलभारती पिकरुतं अभेदाति-शयोक्तिः अभवत् स्तवकौ गुच्छाविव स्तनौ कुचौ अभवतां केतस्यभा कान्तिःसैव स्तत्सदृशोऽर्थः केतकभा केतकीकुसुम-कान्तिः सर्व्वत्र तस्या द्युतिविशेषः बभौ शुशुभे । निदर्शना रूपकातिशयोक्त्यलङ्काराः । ३ ५

अपिनखाः सुदृशो नवमालिका-
सुकलिका बहुशः प्रचकाशिरे ।
अधरपल्लवभाः स्मित मल्लिका
भृशचलाजनि लोचन चञ्चरी ॥४॥
चिकुर भारभयादिव सुभ्रुवः
समनुगम्य मयूरमृगौ वने ।
धुति मिषेण कलापक चामरे
न भजतः किमु संप्रति वेपथुं ॥५॥

अपीति । अपि किञ्च सुदृशः लक्ष्मणायाः नखाः नवमालिकासुकलिकाः नवमालिकामुकुलाः बहुशः प्रचकाशिरे शुशुभिरे । अधर एव पल्लवः तस्यभाः शोभाः प्रचकाशिर इति पूर्व्वेणान्वयः? स्मितानि मन्दहासा एव मल्लिकाः मल्लिकुसुमानि प्रचकाशिरे । लोचनं नेत्रमेव चञ्चरी भ्रमरी भृशचला अति चञ्चला अजनि जाता यौवन वसन्तोदयादिति भावः । रूपकालङ्कारः । ४ ॥

अथ लक्ष्मणायाः केशादारभ्य क्रमशः अङ्गानि वर्णयति । चिकुरेति । कलापकः बर्हं कलापोभूषणेबर्हे इत्यमरः; चामरं च ते सुभ्रुवः लक्ष्मणायाः चिकुरभारात् केशपाशात् यद्भयं तस्मादिव वने कानने मयूरश्च मृगः हरिणश्च तौ यथाक्रमं अनुगम्य पुच्छलेन तयोः पश्चाद्वर्त्तिनौ भूत्वा धुतिः कम्पनमेव मिषं तेन सम्प्रति अधुना वेपथुं कम्पं भयजनितमितिभावः नभजतः किमु भजत एव, उत्प्रेक्षापह्नव यथासङ्ख्यालङ्काराः । लक्ष्मणायाः केशपाशो बर्हचामराति शायीतिभावः । ५ ॥

वदनपङ्कज गन्धसमाहृता
वरतनोरलका पृथुकालयः ।
अलिकवैधव खण्ड सुधारसं
भृशमवाप्य चिरस्य निलिल्यिरे ॥६॥
वदनसाम्य मपेक्ष्य विरोधि किं
मृगदृशोऽब्जयुगं बिधिमभ्यधात् ।

वदनेति । वरतनोः लक्ष्मणायाः वदनं मुखमेवपङ्कजं पद्मं तस्यगन्धः आमोदः तस्याः पद्मिनीत्वादितिभावः तेन-समाहृताः आकृष्टाः अलकाः चूर्णकुन्तला एव पृथुकाः शावकाः आलयः भ्रमराः भ्रमरशिशव इत्यर्थः पृथुकः शावकः शिशुरित्यमरः अलिकं ललाटमेव वैधवखण्डं चन्द्रशकलं तस्य सुधारसं अमृतास्वादं भृशं अत्यन्तं अवाप्य चिरस्य चिरकालं निलिल्यिरे निलीना बभूवुः । रूपकोत्प्रेक्षालङ्कारौ । ६ ॥

वदनसाम्यमिति । अब्जयोः चन्द्रपद्मयोः अब्जौपद्मशशाङ्कौ चेतिविश्वः युगं द्वयं पद्मचन्द्रावित्यर्थः मृगदृशः लक्ष्मणायाः वदनसाम्यं मुखसादृश्यं अपेक्ष्य विरोधि परस्परं विरुद्धं कलहवत्सत् विधिं ब्रह्माणं अभ्यधात् किं आवयोः कः लक्ष्मणा मुखसदृश इति प्रपच्छेति भावः । अनन्तरं शशी चयं कृष्णपक्ष-प्रयुक्तह्रासं अह्नि दिवसे गूपनं म्लानताञ्च गमितः प्रापितः बिधिनेतिशेषः, कमलं पद्मञ्च निशि रात्रौ रुजां पीडां मुद्रणा-मितियावत् हिमे शीतर्त्तौ क्षतिं नाशञ्च गमितमिति

क्षयमहर्ग्रुपनं गमितः शशी
निशिरुजां कमलं च हिमर्त्तिंतं ॥७॥

गुणयुतौ किमु कज्जलरेखया
वरतनोर्नयनोत्पलसायकौ-
धनुषि पञ्चशरो निदधे भ्रुवोः
श्रुतिगतौ निहितान्तरमुष्टिनि ॥८॥

नयनखञ्जनयोर्ग्रहणेच्छया
श्रवणपाशयुगं विधिना कृतं ।

लिङ्गपरिणामेन योज्यं चन्द्रस्य दिवा मलिनत्व कृष्णपक्ष क्षीणत्वाभ्यां पद्मस्य च रात्रिमुद्रण शीतविनाशत्वाभ्यां विधिकृताभ्यां न लक्ष्मणा मुखसादृश्य प्राप्ताधिकार इति भावः। उत्प्रेक्षालङ्कारः । ७ ॥

गुणयुताविति । पञ्चशरः कामः वरतनोः लक्ष्मणायाः भ्रुवोः भ्रूद्वये एव निहिता दत्ता अन्तरे मध्ये लैस्तक इत्यर्थः मुष्टि यस्य तस्मिन् धनुषि स्वचापे कज्जलरेखाया गुणयुतौ सौन्दर्य्ययुक्तौ मौर्वीयुक्तौ च नयन एव उत्पलसायकौ नीलोत्पलाख्य स्वबाणौ श्रुतिगतौ कर्णान्तविश्रान्तौ एव आकर्षकृष्टौ सन्तौ निदधे निहितवान् किमु । श्लिष्टरूपकोत्प्रेक्षालङ्कारौ ।८॥

नयनेति विधिना ब्रह्मणा सुदृशः मात्र्याः नयने नेत्रे एव खञ्जनौ पक्षिविशेषौ तयोः ग्रहणेच्छया धारणाभिलाषेणेव श्रवणपाशयोः कर्णरूप पक्षिधारणसाधनयोः युगं द्वयं कृतं विहितं किमु ? अतः इमौ नयनखञ्जनौ भियाभयेन अतिचलौ

अतद्दमौ सुदृशोऽतिचलौ भिया
न्यवृततां समुपेत्य तदन्तिकं ॥९॥
नयनबाणचलाचलताभिया
किमुजगाम कुरङ्गगणो वनं ।
वरतनोरपि खञ्जइव ह्रिया
कलितखञ्जपदः खलु खञ्जनः ॥१०॥

अतिचञ्चलौ "स्वभावचापलभयहेतुत्वमुत्प्रेक्ष्यते" इमौ नयन-खञ्जनौ तयोः श्रवणपाशयोः अन्तिकं निकटं समुपेत्य प्राप्य न्यवृततां निवृत्तौबभूवतुः पाशपातनभयेनेत्यर्थः नेत्रयोः कर्ण-विश्रान्तत्वे उत्प्रेक्षेयं । ९ ।

नयनबाणेति । कुरङ्गगणः मृगसमूहः वरतनोः लक्ष्मणायाः नयने नेत्रे एव बाणे बाणकुसुमे तेएव बाणौ शरौतयोः या चलाचलता चाञ्चल्यं तस्याः भिया भयेन किमु इत्युत्प्रेक्षा । वनं जगाम गतवान् अपि किञ्च खञ्जनः पक्षिविशेषः ह्रिया लज्जया लक्ष्मणाक्षित आत्मनोन्यूनत्वदर्शनादितिभावः खञ्जइव खोड़इव "खोडेखञ्जस्त्रिषु" इत्यमरः कलितं स्वनाङ्गिकृतं खञ्जइति पदं शब्दः खञ्जपादश्च येन सः सन् खञ्जनशब्दांश-भूतत्वं खञ्जमद्दस्तेत्यर्थः वनं जगामेति पूर्व्वेणान्वयः खलु । लक्ष्मणानेत्रे मृगनयन खञ्जरीटाति शायिनीति भावः । उत्प्रेक्षारूपके । १० ।

तदधरामृतकाम्य कृतोद्यमा
गरुड़चञ्चुरियं न तु नासिका।
किमथवाधरविम्ब बुभुक्षया
शुकमुखं नमितं कुटिल भ्रुवः ॥११॥
स्मितमिषाददसीय रदच्छदो
हसति हल्लक माहृत मुद्रणं।
नवजवापिततो भयतोजवा
व्रजति भीतिहरां हरवल्लभां ॥१२॥

तदिति। तस्याः लक्ष्मणायाः अधरे ओष्ठे यदमृतं तस्य काम्ये हठाद्ग्रहणे कृत उद्यम उद्योगो यया तथोक्ता इयं गरुड़स्य वैनतेयस्य चञ्चुः त्रोटिः "चञ्चुस्त्रोटिरुभेसमे" इत्यमरः गरुड़स्य अमृतापहरणं पुराणप्रसिद्धं तुपुनः नासिका नासा न आसीदिति शेषः अथवा कुटिलभ्रुवः सुभ्रुवः लक्ष्मणायाः अधर एव विम्बं विम्बफलं तस्य या बुभुक्षा भोक्तुमिच्छा तया शुकमुखं कीरचञ्चु नमितं अधः प्रहृतं किञ्चिदुत्प्रेक्षा रूपकाङ्कालङ्कारः। ११।

स्मितमिषादिति। अदसीयः अमुष्याः लक्ष्मणायाः सम्बन्धी यः रदच्छदः ओष्ठः "ओष्ठाधरौ तु रदनच्छदौ दशनवाससीत्यमरः" स्मितमिषात् मन्दहास्यव्याजात् आहृतं स्वीकृतं मुद्रणं निमीलनं येन तत् मुद्रणयुक्तमित्यर्थः हल्लकं रक्तसन्ध्यकं उद्भिदित्यर्थः हसति उपहसतीत्यर्थः "हल्लकं रक्तसन्ध्यकमित्यमरः" नवजवापि नूतनजवाकुसुममपि ततः तस्मात् अधरात् भयतः भयेनैवेति गम्यीत्युत्प्रेक्षा भीतिहरां भयहन्त्रीं

अनुपमेय मनोहर लक्ष्मणा—
धरतुलेप्सु रतः कृतपातकः।
विधिकृतं गुरुदण्ड मनूकृता
मधिगतो भजतेऽप्यरुणो रविं॥१३॥
मनसिजो रदमौक्तिक मालिकां
निजजगज्जय मन्त्र सुसाधने।

हरवल्लभां दुर्गां भजति सेवते। दुर्गाया जवाकुसुमप्रियत्वा-
दियमुत्प्रेक्षा। लक्ष्मणाधरः कलक जवातिशायीतिभावः।
अपह्नवः उत्प्रेक्षा च। १२॥

अनुपमेयेति। अरुणः सूर्य्यसारथिरपि अनुपमेयस्य निरुपमस्य
अतःमनोहरस्य लक्ष्मणाधरस्य यातुला साम्यं तदीप्सुः तत्प्राप्ति
मिच्छुः अतः कृतं पातकं अपराधो येन सः सन् उत्कृष्टसादृश्य
प्राप्तीच्छा निकृष्टस्य अपराधायेतिभावः। विधिना दैवेन कृतं
सम्पादितं गुरुः अपराधानुरूपः यः दण्डः तं दण्डभूतामित्यर्थः
अनूरुतां ऊरुरहितत्वं अधिगतः प्राप्तः सन् रविं सूर्य्यं भजति
सारथ्यमाश्रयते, गम्योत्प्रेक्षालङ्कारः। अरुणाधिकपाटलाधरा
लक्ष्मणेति भावः। १३॥

मनसिज इति। मनसिजः कन्दर्पः निजस्य स्वस्य जगज्जयाय
त्रिजगज्जिगयकृते यः मन्त्रः मनुः तस्य सुसाधने जगज्जिजय
मन्त्रसिद्धार्थमित्यर्थः तस्याः लक्ष्मणायाः अधरे ओष्ठे एव अवि
शूतनै नवसङ्करकर्दित गम्यते पिप्पलपल्लवे अश्वत्थपत्रे रदानां
दन्तानामिवमौक्तिकानां मालिकां मालां निधाय संस्थाप्य

तदधरे नवपिप्पल पल्लवे
किमुनिधाय चकार सुसंस्कृतां ॥१४॥
किमुविहाय सुधाकिरणस्तमः-
कवलभीर्निज लाञ्छन पूर्णते ।
तनु विभाग युगात्मक लक्ष्मणा—
वरकपोल द्वयाचततां मगात् ॥१५॥
स्वरमधीतु मतः कृत जागरै
र्मलिनकान्ति विलोहित लोचनैः ।

सुसंस्कृतां प्रतिष्ठितां चकार कृतवान् किमु अश्वत्थपत्रनवके मात्रां संस्थाप्य प्रतिष्ठापयेदिति तन्त्रोक्तत्वात् इति भावः ।१४।

किम्विति । तमसः राहोः "तमस्तुराहुः स्वर्भानुरित्यमरः" यः कवलः ग्रासः तत्कर्तृक इतिभावः तस्मात् भीः भयं यस्य सः राहुग्रासभीत इत्यर्थः सुधाकिरणः चन्द्रः निजस्य स्वस्य लाञ्छनं कलङ्क पूर्णता समग्रकलङ्क ते विहाय त्यक्त्वा तनोः शरीरस्य यद्विभागयुगं भागद्वयं तदात्मकौ लक्ष्मणायाः वरकपोलौ उत्कृष्टगण्डस्थली यस्य सः स्वबिम्बार्द्धभागद्वयेन लक्ष्मणाकपोल-रूपेण तिष्ठन् इह अचततां अखण्डितत्वं अगमात् प्राप किमु इत्युत्प्रेक्षा । १५ ।

स्वरमिति । अतः लक्ष्मणायाः स्वरं कण्ठस्वरं अधीतु पठितुं कृतः जागरः जागरणं यैस्तैः अतः जागराद्धेतोः मलिना कान्तयो येषां ते कृष्णवर्णा इत्यर्थः ते च विलोहितलोचनाः

परभृतैः प्रहरान्तरतच्छला-
द्विहित मभ्यसनं नहि हीयते ॥१६॥
किमदसीय गलेन कलिंदध-
द्विधिमितः खलु कम्बु रथाहतः ।
विलशिराः सुरसद्मसु रोदिति
ध्वनिमिषादमुनापि च मण्डनं ॥१७॥

रतानीवाच तैः कोकिलानां कण्ठावच्छेदे नैवलोहितत्वे आगर-
ज्ञतत्वमुत्प्रेक्ष्यते । परभृतैः कोकिलैः प्रहरान्तेषु यानि रुतानि
शब्दाः तेषां छलात् व्याजात् विहितं कृतं, प्रत्यहं प्रहरान्तेषु
कोकिला ध्वनन्तीत्यनुभवसिद्धं । अभ्यसनं स्वरशिक्षापरिशीलनं
न हीयते न परित्यज्यतेहि अद्यापीतिशेषः स्वरशिक्षायाः
सिद्धत्वे अभ्यासस्य वैयर्थ्यादितिभावः । कोकिलानामपि शिक्ष-
णीय स्वरमाधुर्य्यां लक्ष्मणासीदितिभावः । उत्प्रेक्षालङ्कारः ।१६
किमिति । अदसीयेन लक्ष्मणासम्बन्धीयेन गलेन कण्ठेन
कलिं पटं रुचिरः नलरूमिति कलङ्कं दधत् कुर्व्विन्नित्यर्थः॥
विधिं दैवं इतः प्राप्तः सौन्दर्य्ये प्रमार्थ, मित्यर्थः कम्बुः शङ्खः
"शङ्खः स्यात् कम्बुर स्त्रियामित्यमरः"। अथ विधि प्राप्तग-
नम्सरमित्यर्थः आहतः ताड़ितः विधिनेति शेषः उत्कृष्टस्पर्द्धा
पराधीनेतिभावः बिलं छिद्रं शिरसि यस्य सः सन् ताड़नहेतुक
शिरोविघातादितिभावः सुरसद्मसु देवालयेषु ध्वनिमिषात्
पूननव्याजात् रोदिति क्रन्दति अनन्यगतिकत्वादितिभावः च
किंच अमुना लक्ष्मणागलेन मण्डनं ग्रैवेयादिभूषणं चापि प्रापि
सौन्दर्य्ये पुरस्कारत्वेनेतिभावः । उत्प्रेक्षापह्नवालङ्कारौ ।१७।

नयनखञ्जन पोषकृते हरे
मदनयौवनयोः किमु काञ्चने।
नृपसुता कठिनोच्च पृथुस्तना
वभवतां दृढ़ सुन्दर पञ्जरे ॥१८॥
नृपसुतोच्च कुचौ गिरिधारिणा
मदनयौवनयो र्नियुयुत्सुनोः।
वभतुरच्छित दृष्य युगं ध्रुवं
दृढ़तरं विपुलं कनकाचितं ॥१९॥

नयनेति। नृपसुतायाः लक्ष्मणायाः कठिनौ कर्कशौ तुङ्गौ उन्नतौ पृथू पृथुलौ स्तनौ कुचावेव हरेः श्रीकृष्णस्य नयनखञ्जनयोः नेत्रखञ्जरीटयोः पोषकृते पोषणार्थं काञ्चने स्वर्णनिर्मिते मदनः कामः यौवनञ्च तयोः दृढे सुन्दरे मनोहरे पिञ्जरे पोष्यपक्षि निवासस्थान भूते वभवतां। रूपकोत्प्रेक्षालङ्कारौ। १८॥

नृपसुतेति। नृपसुतायाः लक्ष्मणायाः उच्चकुचौ उन्नतस्तनौ गिरिधारिणा गोवर्द्धनधारिणा श्रीकृष्णेन सह नियुयुत्सुनोः नियोद्धुमिच्छुनोः मदनयौवनयोः कामतारुण्ययोः दृढ़तरं अतिदृढं विपुलं कनकाचितं स्वर्णव्याप्तं उच्छ्रितदृष्ययुगं उन्नत पटमण्डपद्वयं वभतुः ध्रुवं शुशुभाते नून मित्युत्प्रेक्षा "दूष्यन्तु पटमण्डप, इत्यमरः। १९॥

नवतनूरुह राजिलता स्तनौ
फलति हेमफलेस्म सुधाभृते ।
अजनि कामशराम्बुज कोरक
द्वयमिदं सुतनोर्द्युति सागरे ॥२०॥
वरतनोस्तनु कान्ति सुधा भरे
तरुणता करिणो विनिमज्जतः ।
कुचतनूरुह राजिमिषान्मनाक्
न ददृशे किमु कुम्भकरं परं ॥२१॥

नवमिति । नवा नूतना तनुरुहराजिः रोमावल्येव लता स्तनौ लक्ष्मणाया इति शेषः सुधाभृते अमृतपूर्णे हेमफले सुवर्णफले फलतिस्म अजनयत् गम्योत्प्रेक्षा । सुतनोः लक्ष्मणायाः द्युतिसागरे लावण्यसमुद्रे इदं एतत् कुचद्वयरूपमित्यर्थः कामस्य कन्दर्पस्य शरौ बाणभूते ये अम्बुजे पद्मे तयोः कोरकद्वयं कलिकायुगलं अजनि जातं । कोरकीभूत पद्माख्य कन्दर्पशरयुगल मुत्पन्नमितिभावः । उत्प्रेक्षालङ्कारः । २० ॥

वरतनोरिति । वरतनोः शुभाङ्ग्याः लक्ष्मणायाः तनुकान्तिः देहशोभैव सुधाभरः अमृतप्रवाहः तस्मिन् विनिमज्जतः निमज्जतस्य तरुणता यौवनमेव करी हस्ती तस्य परं केवलं कुम्भौ गण्डौच करः शुण्डाच तत् प्राण्यङ्गत्वादेकवद्भावः नपुंसकताच । कुचयोः तनुरुहराजिः रोमावल्यास्च मिषात् व्याजात् मनाक् स्वल्पं नददृशे न दृष्टं किं दृष्टमेवेत्यर्थः । उत्प्रेक्षालङ्कारः । २१॥

व्रजवधूपटतस्कर बन्धने
नृपसुता भुजपाश युगं किमु ।
मदन दण्ड धराय समर्पितं
विधिकृतं शुशुभे नु हिरण्मयं ॥२२॥

सुतनुदो र्नवनीत मृणालिका
नियमितं विदधातु मियेष किं ।
मदनमोहन हृन्मदनो नृपः
प्रकृति हेति ततिर्ललिताश्रयेत् ॥२३॥

व्रजेति । हिरण्मयं विधिना दैवेन कृतं सम्पादितं नृपसुतायाः लक्ष्मणायाः भुजाविव पाशयुगं व्रजवधूनां गोपाङ्गनानां पटतस्करस्य वस्त्रचौरस्य श्रीकृष्णस्य बन्धने विषये बन्धनार्थमित्यर्थः मदनः काम एव दण्डधरः शासकः तस्मै समर्पितं प्रदत्तं किमु विधिनेतिशेषः विधिः व्रजाङ्ग वस्त्रचौरस्य बन्धनार्थं लक्ष्मणावाङ्गपाशद्वयं निर्माय दण्डदात्रे कामायसमर्पितवानिवेतिभावः । उत्प्रेक्षालङ्कारः । २२ ॥

सुतनुदोरिति । मदनः कामएव नृपः राजा मदनमोहनस्य श्रीकृष्णस्य मोहकत्वात् स्मरशत्रोरितिभावः हृत्हृदयं सुतनोः दोर्षो भुजौ एव नवनीतमयी या मृणालिका तया नियमितं बद्धं विदधातुं कर्तुं इयेष इष्टवान्किं नवनीतमयमृणालेन बन्धनं अकिञ्चित्करमितिचेत् आह प्रकृतीति यत् हेतोः अस्य मदनस्य प्रकृतयः बसन्ताद्याः हेतयः पुष्पादयः आयुधानि तेषां ततिः समूहः ललिता कोमला अतो नवनीत मृणालिकाबन्धनं युक्तमितिभावः । उत्प्रेक्षालङ्कारः । २३ ॥

विधिकृता: सुतनोर्नवमालिका-
स्मरशरा: कलिकाकृति संभरा:।
कनकचम्पक कोरक रोपिता:
तरुणता निमिता: करजाबभु: ॥२४॥
करतले नवपल्लव तुल्यता
चलदृशो नियता गुरुगर्हणा।
सदृशवर्ग कपोल चपेटिका
प्रहरणा रुणितं खलु तत्यत: ॥२५॥

विधिकृतेति। विधिना दैवेन कृता: निर्मिता: तरुणतया यौवनेन निमिता: ग्रापिता: कनकचम्पककोरकेषु स्वर्णचम्पक-कलिकासु अङ्गुलीस्वरूपास्वित्यर्थ: रोपिता: संस्थापिता: कलिकाकृत्या कोरकाकारेण सम्भरन्तीति तथोक्ता: कोरका वस्थयास्थिता इत्यर्थ: नवमालिका: तदाख्यकुसुमान्येव स्मरशरा: कामवाणा: सुतनो: लक्ष्मणाया: करजा: नखा: सन्त: बभु: शुशुभिरे। रूपकोत्प्रेक्षे। २४ ॥

करतल इति। नवपल्लवतुल्यता नूतनकिसलय साद‍ृश्यं चलदृश: लक्ष्मणाया: करतले विषये गुरुगर्हणा अधिकनिन्दा नियता निश्चिता, यत: तत् लक्ष्मणाकरतलं सदृशवर्गाणां कोक-नदाद्युपमानसमूहानां कपोलेषु गण्डस्थलेषु चपेटिकाप्रहरणात् चपेटिकाघातात् अरुणितं लोहितं खलु आसीदितिशेष: अत: पल्लवतुलनया करतलस्य गर्हणैव सिद्धा इतिभाव:। उत्प्रेक्षा-नुमानालङ्कारौ। २५ ॥

तदुदरं वयसा विनिपीड्य किं
परिगृहीत पृथुत्व भरैः परं ।
स्तननितम्ब विवृद्धि विधित्सुना
कलितमाप भिया तिकृशां दशां ॥२६॥
बलिररेः स्वविनिग्रह कोपितः
शतगुणाधिक दण्डविधित्सया ।
धृततनुत्रितयः किमु लक्ष्मणो-
दरगतो वितनो स्त्रिशिखोबभौ ॥२७॥

तदुदरमिति। तदुदरं तस्याः लक्ष्मणायाः उदरं मध्यं कर्त्तृ निपीड्येत्यस्यकर्म च तत् निपीड्य पीड़यित्वा परिगृहीतैः आनीतैः पृथुलभरैः पृथुलतातिशयैः परं केवलं स्तनयोः कुचयोः नितम्बयोः विवृद्धेः उपचयस्य विधित्सुः विधानेच्छुः तेनवयसा यौवनेन कलितं गृहीतं सत् भिया भयेनेवेतिभावः अतिकृशां अतिक्षीणां दशां अवस्थां आप प्राप। उत्प्रेक्षालङ्कारः। २६॥

बलिरिति। स्वस्य निजस्य विनिग्रहेण पदभ्रंशेन वामनकर्त्तृकेनेति भावः कोपितः क्रोधितः बलिः वैरोचनिः अरेः शत्रोः वामनाभिन्नस्य श्रीकृष्णस्य शतगुणाधिक दण्डस्य विधित्सया विधानेत्सया किमु धृतं गृहीतं तनूनां त्रितयं त्रयं येन सः सन् लक्ष्मणायाः उदरगतः मध्ये त्रिवलिरूपेण तिष्ठन् सन् वितनोः कामस्य त्रिशिखः त्रिशूलभूतः सन् बभौ शुशुभे। श्रीकृष्णपराभवाय बलिः लक्ष्मणा त्रिवलिरूपेण परिणतः सन् कन्दर्पत्रिशूलभूतोऽभूदितिभावः। उत्प्रेक्षालङ्कारः। २७॥

जघन शोभि तदूरुयुगं न किं
मदन दोलन खेलन तोरणः ।
भवितु मत्र विलम्बित शृङ्खला
विनिहिता रसना निभृतं तथा ॥२८॥

रससरित्तरणाय रमापते
र्निरुपमौ नृपजोरु युगात्मकौ ।
जनकृता नवनीत मयौमुदा
विरचितौ तरुणौ कदली तरू ॥२९॥

जघनेति । जघनेन कटिपुरोभागेण शोभत इति तथोक्तं तस्याः लक्ष्मणायाः ऊरुयुगं सक्थिद्वयं मदनस्य कामस्य दोलन-खेलनार्थं दोलाक्रीडार्थं तोरणः तोरणाकारस्तम्भद्वयमित्यर्थः नकिं तोरण एवेत्युत्प्रेक्षा तथा तद्वत् अत्र तोरणे विलम्बित शृङ्खला लम्बमानदोलनसाधनशृङ्खला भवितुं रसना कटिसूत्रं निभृतं गुप्तं वस्त्राञ्चल तिरोहितं यथा तथा विनिहिता स्थापिता विधात्रेतिशेष लक्ष्मणायाः जघनं ऊरुद्वयञ्च कामक्रीडा स्थानमितिभावः । उत्प्रेक्षालङ्कारो । २८ ।

रसेति । जनकृता विधात्रा रमापतेः श्रीकृष्णस्य रसः शृङ्गार एव सरित् नदी तस्याः तरणाय उत्तरणार्थं निरुपमौ उपमान रहितौ नृपजायाः लक्ष्मणायाः ऊरुयुगात्मकौ सक्थिद्वय स्वरूपौ तरुणौ सरसौ नवनीतमयो नवनीतनिर्मितो कदलीतरू रम्भावृक्षौ मुदा कौतुकेन विरचितौ निर्म्मितौ किमु । गम्योत्प्रेक्षा । २९ ॥

कुतुकिना मदनेन तदूरुता
मधिगतं विपरीत तयास्थितं ।
किमुसुवर्ण मयं कदली द्वयं
व्यरचिदोर्ब्बल साधन वाञ्छया ॥३०॥
सुतनु पादयुगेन पराजितं
सलिलदुर्गमिवा श्रयतेऽम्बुजं ।
किशलयं तुलितं लघुता वशा
दुपरितिष्ठति हच्चलताश्रितं ॥३१॥

कुतुकिनेति । कुतुकिना कौतुकवता मदनेन कामेन दोर्ब्बल साधन वाञ्छया वाहुवलविधानेच्छया मल्ला: प्रत्यहं वाहुवलसाधनार्थं स्वाङ्गानि मल्लस्तम्भे ताड़यन्तीति प्रसिद्धिः तस्याः लक्ष्मणायाः ऊरुतां ऊरुत्वं अधिगतं प्राप्तं सुवर्णमयं विपरीततया वैपरीत्येन स्थितं अवस्थितं कदलीद्वयं रम्भातरु युगलं व्यरचि विरचितं किम् । इत्युत्प्रेक्षा । ३० ।

सुतन्विति । अम्बुजं पद्मं सुतनोः लक्ष्मणायाः पादयुगेन चरणद्वयेन पराजितं परास्तं सत् सलिलमिवदुर्गं आश्रयत इव किन्तुकिशलयं पल्लवं तुलितं समीकृतं तुलादण्डाधिरूढ़ं च सत् लक्ष्मणाचरणद्वयेन सहेतिशेषः लघुतावशात् न्यूनतया लाघवे च हृच्चलताश्रितं सत् उपरि ऊर्द्ध्वदेशे तिष्ठति अधुनेति भावः तुलयन्त्रे गुरुरधः लघुरुपरिच भवतीति प्रसिद्धं । उत्प्रेक्षालङ्कारः । ३१ ॥

विहित मित्ररसं कमलं परं
सलिलदुर्गग मप्य वधीरितं ।
मृगदृशः शुभलक्षण कैतवा—
च्छरणमापभिया चरणद्वयं ॥२२॥

विधिकृतै र्नवयौवन शाणितै
रवयवैर्बलिता प्रवरायुधैः ।
मुरहरं मदनस्य जिगीषतः
सुतनु राप तदा शिबिर श्रियं ॥२३॥

विहितेति । विहितः कृतः मित्रे सूर्ये सुहृदिव रसो-ऽनुरागः येन तत् मित्राश्रितमिति भावः कमलं पद्मं सलिल दुर्गं जलस्थित मपि अवधीरितं तिरस्कृतं सत् लक्ष्मणा-चरणेनेति भावः अतः भिया भयेन मृगदृशः लक्ष्मणायाः चरण द्वयं शुभलक्षणकैतवात् शुभसूचकपद्माकाररेखा कपटेन शरणमापं शरणागतं बभूवः । उत्प्रेक्षा । २२ ।

विधिकृतैरिति । तदा सुतनुः लक्ष्मणा विधिकृतै दैवसृष्टैः नवयौवनेन शाणितैः उल्लिखितैः मुरहरं श्रीकृष्णं जिगीषतः जेतु मिच्छतः मदनस्य कामस्य प्रवरायुधैः उत्कृष्टप्रहरणभूतैः अवयवैः स्वाङ्गैः बलिता परिपुष्टा सती शिबिरश्रियं शिबिर-शोभां कामसेनेति भावः प्राप जगाम आयुधपूर्णत्वादिति भावः । रूपकनिदर्शनालङ्कारौ । २३ ॥

रसवती मुखपाणि पदाम्बुजा
भुजमृणालयुता स्मितकैरवा।
नयनमीनवती शुशुभे च सा
रुचिर नाभि जलभ्रम शोभिनी ॥२४॥
समवयोगुण रूपसखी जनैः
प्रमुदितै रुपमातृ मुखाम्बुजात्।
प्रविगलत्पुरुषोत्तम सत्कथा-
मधुपिपासु रभूदथ सा वधूः ॥२५॥

रसवतीति। च पुनः सा लक्ष्मणाः रसवती अनुरागवती जलवती च मुखं वदनं पाणी करौ च पदे पादौ च अम्बुजानि पद्मानीव यस्याः सा भुजौ मृणालेइव ताभ्यां युता संयुक्ता स्मितानि कैरवाणीव यस्याः सा नयने नेत्रे एव मीनौ तद्वती तद्विशिष्टा रुचिरनाभिः जलभ्रमः आवर्त्तइव तेन शोभत इति तथोक्ता सती शुशुभेबभौ दीर्घिकेवेति गम्यते। उपमालङ्कारः।२४

समेति। अथ यौवनप्रकाशानन्तरं सा वधूः लक्ष्मणा प्रमुदितैः आनन्दितैः समं समानं बयः वयःक्रमः गुणः सौशील्यादिः रूपं सौन्दर्य्यञ्च येषां तैः सखीजनैः वयस्याभिः उपलक्षिता सती उपमातुः धात्र्याः मुखाम्बुजात् बदनपद्मात् प्रविगलन्ति यानि पुरुषोत्तमानां उत्कृष्टयूनां वा पुरुषोत्तमस्य श्रीकृष्णस्य सत्कथा सदाचरणानि मधूनि मकरन्दाः तानि पिपासुः पातुमिच्छुः शुश्रूषुः अभूत्। अथ लक्ष्मणा धात्रीमुखात् विशिष्ट युवगण कथाश्रवण प्रसङ्गेन श्रीकृष्ण चरितं अत्यादरेण श्रोतु मियेषेति भावः। रूपकालङ्कारः। २५।

श्रुतिमितं शतशः सुजनाननात्
सुरमुने र्वचसा हृदिसंगतं ।
हृदय जीवननाथ मवाप्य किं ।
न पुनरुक्ति मियं कथनेऽस्तवीत् ॥२६॥
प्रविवृते नृपजेन्द्रिय सञ्चयः
श्रवणभाव मवाप्य कथान्तरे ।

श्रुतिमिति । इयं लक्ष्मणा सुजनाननात् सज्जन मुखात् शतशः बहुवारं श्रुतिं कर्णं इतं प्राप्तं श्रुतमित्यर्थः सुरमुनेः नारदस्य वचसा वचनेन हृदिसङ्गतं हृदयङ्गमं हृदयजीवननाथं चित्तप्राणेश्वरं श्रीकृष्णमित्यर्थः कथने कथाप्रसङ्गे अवाप्य प्राप्य श्रुत्येत्यर्थः पुनरुक्तिं पौनरुक्त्यं न अस्तवीत् किं तुष्टाव एव दोषत्वेन गणितामपिति भावः । लक्ष्मणाश्रवणजनितमनः सङ्गेन श्रीकृष्णे अत्यन्तशक्तासती कथाप्रसङ्गे तद्गुणश्रवणं पुनः पुनः चकारेति भावः । विशेषालङ्कारः । एतेनास्या मनः सङ्गाख्यास्मरदशा सूचिता । २६ ॥

प्रविवृ तइति । नृपजायाः लक्ष्मणायाः इन्द्रिय सञ्चयः चक्षुरादि प्रविवृते प्रकटिते कथान्तरे कथाप्रसङ्गमध्ये श्रवणभावं कर्णत्वं अवाप्य प्रियस्य श्रीकृष्णस्य कथा चरितमेव मधु मद्यमेति गम्यते तस्य तस्य पाने समुत्सुकः उत्कण्ठितः सन् सुचिरं परिचितान् अभ्यस्तान् अपि विषयान् रूपादीन् जहौ तत्याज विसस्मारेत्यर्थः मद्यपानोत्कण्ठिता यथा परिचितानपि

प्रियकथा मधुपान समुत्सुकः
परिचितान् सुचिरं विषयान् जहौ ॥२७॥
मृगदृश स्तृषितं किल गोकुलं
विषयशस्य मपास्य कथोदये ।
प्रियकथामृत पूरभृतोदरे
श्रुतिबिले मिलितं किमलीयत ॥२८॥
नृपसुता हृदयं सहगोगणैः
स्मरशराशनिपात भयादिव ।

विस्मरन्तीति गम्यते । अतिशयोक्तिः । मादौ चक्षुरादि व्यापारं परिहृत्य केवलं कृष्णासक्ता बभूवेति मनः सङ्गाख्य स्मरदशा सूचिता । २७ ॥

मृगदृश इति । मृगदृशः लक्ष्मणायाः गोकुलं इन्द्रियगण एव धेनुसमूहः "स्वर्गवज्राम्बु रश्मि दृग्बाणलोमेन्द्रियेषु गौरीति कोषात् तृषितं उत्कण्ठितं अन्यत्र तृषार्त्तं सत् कथोदये कथा-प्रसङ्गे विषयः रूपादिरेवशस्यं घासः तं अपास्य त्यक्त्वा अस्य श्रीकृष्णस्य कथामृतपूरेण चरितसुधा प्रवाहेण भृतं पूर्णं उदरं मध्यं यस्य तस्मिन् श्रुतिबिले कर्णगर्त्ते मिलितं प्राप्तं सत् अलीयत तत्र लीनाभभूत्किं । अन्यथा तेषां व्यापारः कथं न स्यात् इतिभावः । रूपकोत्प्रेक्षालङ्कारो । २८ ॥

नृपेति । तदा नृपसुता हृदयं लक्ष्मणाचित्तं गोगणैः इन्द्रियसमूहैः सह धेनुसमूहैश्चेतिगम्यते । स्मरशरः कामशरः अशनिः वज्रं तस्य पातः पतनं तस्मात् भयात् भीत्या इवेति हेतूत्प्रेक्षा । व्रजजनान् व्रजवासिनः अवतः पालयतः

व्रजजनानवतो धरधारिणः
शरणमाप तदा चरण द्वयं ॥३९॥
विरह पाण्डुमुखी नयन द्वयी
मियमरञ्जय दञ्जन रेखया ।
स्पृशति तत् सुषमां हिमपूर्णिमा
शशिनि चेन्निवसेन्मदिरद्वयं ॥४०॥
भ्रमर चुम्बित पद्ममवेक्ष्य सा
विधुमुखी दरहास सुधामनु ।

धरधारिणः गोवर्द्धनोद्धारकस्य श्रीकृष्णस्य चरणद्वयं शरणमाप जगाम । अनन्यगतिकत्वात्, लक्ष्मणा कृष्णचन्द्रचरणचुम्बिचित्तासीत् । एतेनास्याः मनः सङ्गाख्या स्मरदशा सूचिता । रूपकोत्प्रेक्षा परिकरालङ्काराः । ३९ ॥

विरहेति । विरहेण पाण्डुमुखं वदनं यस्याः सा इयंमाद्री नयनद्वयीं नेत्रयुगलं अञ्जनरेखया कज्जलरेखया अरञ्जयत् अभूषयत् । कज्जलस्य नायक सावर्ण्यात् नायककान्तिमेव नेत्राञ्जनं करिष्यामीति बुद्धयेतिभावः । मदिरद्वयं मत्तखञ्जन युगलं हिमपूर्णिमाशशिनि तुषारकालपूर्णचन्द्रे पाण्डर इत्यर्थः निवसेत् उपविशेत् चेत् तर्हि तस्याः नेत्रद्वयाः सुषमां शोभां स्पृशति प्राप्नोतीत्यर्थः । अतिशयोक्तिरलङ्कारः । एतेनास्याः सङ्कल्पाख्या स्मरदशा सूचिता । ४० ।

भ्रमरेति । विधुमुखी चन्द्रवदना सा लक्ष्मणा भ्रमर-चुम्बित पद्मं अवेक्ष्य दृष्ट्वा दरहासः स्मितमेव सुधा अमृतं तां समतनोत् प्रकाशयामास भाविनायक चुम्बित स्ववदन साद्दश्य

गरित काममर प्रतिभावती
विकचनीप तुलामतनोत्तनोः ॥४१॥
परिदधत्य सिताम्बर मुत्सुका
लभत यां सुषमां नृपनन्दिनी ।
नवघनश्चपलां यदि संस्रजेत्
स्थिरतरां भविता न तु वाथवा ॥४२॥

कल्पनयेति भावः । अनु पश्चात् अव्यवहित परक्षण एव गरि-तस्य विषाक्तस्य काममरस्य या प्रतिभा तद्विषयिणी बुद्धिः तद्वती भ्रमर चुम्बितपद्मं विषाक्तकाममरं मात्वे त्यर्थः । तनो देहस्य विकचस्य नीपस्य कदम्बकुसुमस्य तुलां साम्यं रोमाञ्चमितिभावः अतनोत् सञ्जात सात्विकाशीदितिभावः । उपमारूपक काव्यलिङ्गालङ्काराः । एतेनास्याः सङ्कल्पाख्या स्मरदशा सूचिता ।४१॥

परिदधतीति । उत्सुका उत्कण्ठिता नृपनन्दिनी लक्ष्मणा असिताम्बरं नीलशाटिकां परिदधती वसाना सती दयिताङ्ग सङ्ग कल्पनयेतिभावः । यां सुषमां शोभां अलभत प्रापत् । नवघनः नूतनमेघः स्थिरतरां अचञ्चलां चपलां विद्युतं संस्रजेत् आलिङ्गेत् यदि तर्हि सा शोभा भविता भविष्यति तु अथवा न भविता इति सन्देहः । अतिशयोक्तिरलङ्कारः । एतेनास्याः सङ्कल्पाख्या स्मरदशा सूचिता । ४२ ।

प्रियनवागमं कल्पनया त्रपा
मभिनयन्त्यथसा स्वसखीजनैः।
किमिदमास्य मगुण्ठि हठादिय
न्निगदिताजगृहेऽधिकलज्जया ॥४३॥
मिलनमेतिकदा नृपजाहरेः-
किमनयापि कृता ममवञ्चना।

प्रियेति। अथ सा लक्ष्मणा प्रियस्य श्रीकृष्णस्य यः नवागमः प्रथममिलनं तस्य कल्पनया सङ्कल्पेन तत्कालमनुभवन्तीव भूत्वेत्यर्थः त्रपां लज्जां अभिनयन्ती प्रकाशयन्ती सती मुखाच्छादनादिनेतिभावः। नवोढ़ा कान्तस्य प्रथमसमागमे लज्जन्त इति भावः। अयि! इदं आस्यं मुखं हठात् अकस्मात् किं कथं अगुण्ठि आच्छादितं इयत् एवं सखीजनैः तत्रतैः निगदिता उक्ता सती अधिक लज्जया जगृहे गृहीता अधिकं ललज्ज इत्यर्थः। एतेनापि सङ्कल्पाख्या स्मरदशा सूचिता। ४३।

मिलनमिति। नृपजा लक्ष्मणा कदा कस्मिन्नवसरे हरेः श्रीकृष्णस्य मिलनं सङ्गमं स्वप्नजन्यमितिभावः एति प्राप्नोति अपि किन्तु अनया सुषुप्त्या मम वञ्चना प्रतारणा कृता किं मामवञ्चयत्किं इति मत्वेवेत्यर्थः। तदीय द्वयोः लक्ष्मणा नयनयोः द्वितयं द्वयं रुषा क्रोधेन अरुणं पाटलं सत् सुषुप्तिं निद्रां अपास्य त्यक्त्वा अजागरीत् जागरितमासीत्। लक्ष्मणा

इति तदीय दृशोर्हितयं रुषा
रुणमपास्य सुषुप्ति मजागरीत् ॥४४॥
सुवदना हरिसङ्गम दूतिका
मभिलषन्त्यपि रात्रिषु सुप्तिकां।
स्मरशराहतिभीति पलायिता
मनधिगत्य च ता मरुदत्परं ॥ ४५ ॥
निजसखीजन निःश्वसितैस्तदा
तनुतरा किमसौ न खमुत्पतेत्।

कृष्णमिलन दर्शनेच्छयैवेत्यर्थः। उत्प्रेक्षालङ्कारः। एतेनास्या जागराख्या स्मरदशा सूचिता। ४४॥

सुवदनेति। सुवदना लक्ष्मणा रात्रिषु निशासु हरेः श्रीकृष्णस्य सङ्गमे मिलने स्वप्नजन्य इत्यर्थः दूतिकां दूतिमिव स्वप्नदशायां श्रीकृष्णप्रापिकामित्यर्थः सुप्तिकां निद्रां अभिलषन्ती आकाङ्क्षन्त्यपि स्मरस्य शराहत्याः बाणप्रहारात् लक्ष्मणी-हृदयकलादितिभावः। याभीतिः भयं तया पलायितां पलाय-मानामिव तां सुषुप्तिकां अनधिगत्य अप्राप्य परं केवलं अरुदत् रुरोद इति प्राप्त्यभावादितिभावः। उत्प्रेक्षालङ्कारः। एतेनास्या जागराख्या स्मरदशा सूचिता। ४५॥

निजेति। तदातस्मिन्नवसरे तनुतरा अतिक्षीणा असौ लक्ष्मणा निजसखीजनानां स्ववयस्यानां निश्वसितैः निश्वास वायुभिः खं आकाशं न उत्पतेत् नोद्गच्छेत् किं अवश्य-मुत्पतितास्यादित्यर्थः। अतिकार्श्यादितिभावः। यदि गरीयसा

स्तननितम्बभरेण गरीयसा
नहरिणा हृदि भारवती यदि ॥४६॥
नवघने च पिके च कदाहृशं
निदधतीयमपि ध्वनतोस्तयोः।
पिदधती श्रवणे च सुधाशन-
च्छद विकर्त्तित राहुदशामगात् ॥५७॥

गुरुतरेण स्तननितम्बभरेण कुचश्रोणीभारेण हृदि हृदया-भ्यन्तरे गरीयसा अगह्वरेण हरिणा श्रीकृष्णेनापि निरन्तरभावनास्थितेनेतिभावः। भारवती नस्यात्। अन्यथा-गगनोत्पतन सम्भवः तस्या इतिभावः। अतिशयोक्तिरलङ्कारः। एतेनास्या क्रमताख्या स्मरदशा सूचिता। ४६ ॥

नवेति। किञ्चेतिचार्थः। कदा कस्मिन् काले नवघने नूतनमेघे पिके कोकिले च दृशं दृष्टिं निदधती निदधाना प्रिय आगमनादित्यर्थः इयं लक्ष्मणा तयोः नवमेघकोकिलयोः ध्वनतोः शब्दायमानयोः सतोः श्रवणे कर्णौ पिदधती आच्छादयन्ती सती मेघकोकिलध्वनीनां कामोद्दीपकत्वाद्विरहिण्याः दुःश्रव्य-त्वादितिभावः सुधाशन च्छदे अमृतग्रासकाले विकर्त्तितस्य खण्डितस्य विष्णुचक्रेणेतिशेषः राहोः, सैंहिकेयस्य दशां अवस्थां अगात् प्रापत्। निदर्शनालङ्कारः। यथा राहोः अमृतभोजन-सुखानुभवकाल एव शिरश्छेदन दुःखं तथा लक्ष्मणायाः नव-मेघादौ कृष्णकान्ति साहश्यदर्शन जनित सुखानुभवक्षण एव गर्जितादिजनितश्रवणबाधाभूदितिभावः। एतेनास्या अत्याख्या स्मरदशा सूचिता। ४७ ॥

उपवना दनिशं नवमालिका
मियमशोक रसाल तरूनपि।
अनयदालिजनै र्वहिरेव किं
नवतमाल मपालय दुत्सुका ॥४८॥
सुतनुरिन्द्रमणि प्रचिताजिरे
रुचिकरे परिलुण्ठन तत्परा।

उपवनादिति। इयं लक्ष्मणा उपवनात् उद्यानात् नवमालिकां तदाख्य लतां अशोकाः रसालाः चूताश्च तान् तरून् वृक्षानपि आलिजनैः सखीभिः करणैः अनिशं सर्व्वदा वहिः उपवन वहिर्भागं अनयत् प्रापयदेव। एतेनास्या अरत्याख्या स्मरदशा सूचिता। उत्सुका उत्कण्ठिता सती किं कथं नवतमालं तरुणतमालतरुं अपालयत् पालयामास। श्रीकृष्णसादृश्यादितिभावः। ४८ ॥

सुतनुरिति। सुतनुः लक्ष्मणा रुचिकरे प्रीतिकरे प्रियवर्ण सादृश्यादितिभावः। इन्द्रमणिभि इन्द्रनीलमणिभिः प्रचितं व्याप्तं बद्धमितियावत् यत् अजिरं चत्वरं तस्मिन् "प्राङ्गणंचत्व-राजिरे" इत्यमरः। सदा परिलुण्ठनतत्परा लुठन्ती सती रविसुतायां यमुनायां प्लविनी प्लवमाना या हेममृणालिनी सुवर्णपद्मिनी तस्या या रुचिः शोभा सा विद्यते यस्याः सा यमुना प्लवमानस्वर्णपद्मिनी समानासती "रुचि श्री

रविसुता पुलिनेषु मृणालिनी
रुचिमतीसमयान नयत्सदा ॥४६॥
प्रियरुचाभिमतेन्द्र मणिस्रजं
निदधती गलदेश इयं पुनः।
मदनकाल बिलेशय पाशता
भ्रमवशात् सुतनुर्द्रुत मत्यजत् ॥५०॥
विधुरुदेत्यय मित्यनुगोक्तिभि
र्दयितनाम समादरतो वधूः।

दीप्तिशोभायामभिष्वङ्गाभिलाषयोः" इति मेदिनी। समयान् कालान् अनयत् अयापयत्। निदर्शनालङ्कारः। एतेनास्या अरत्याख्या स्मरदशा सूचिता। ४६॥

प्रियरुचेति। सुतनुः इयं लक्ष्मणा प्रिय-रुचा नायककान्त्या कृष्णत्वेनेतिभावः। अभिमतां सम्मतां इन्द्रमणिस्रजं नीलमणिमालां गलदेशे कण्ठे निदधती निदधाना सती पुनः निधानानन्तरमित्यर्थः मदनस्य कामस्य यः कालबिलेशयपाशः कालसर्पपाशः तस्यभावः तत्ता तस्याः यः भ्रमः तद्वता भ्रान्तिरित्यर्थः। तद्वशात् इतो द्रुतं शीघ्रं अत्यजत् अच्छिनत् नीलमणिमालामितिशेषः। भ्रान्तिमदलङ्कारः। एतेनास्या अरत्याख्या स्मरदशा सूचिता। ५०॥

विधुरिति। वधूः लक्ष्मणा अयं विधुः चन्द्रः उदेति इति एवं प्रकाराभिः अनुगोक्तिभिः सखीवचनैः दयितस्य प्रियस्य श्रीकृष्णस्य यत् नाम विधुरित्याख्या तस्मिन् समादरतः आदरात्

द्रुतमुदीक्ष्य च पूर्णसुधाकरं
मदनचक्रधियापिदधे दृशौ ॥५१॥
मलय मारुतमिन्दुमुखी हठात्
यमदिगागतदूत मवेत्य सा।
भृशभिया गृहदक्षिणपार्श्वगा
खिलगवाक्ष कपाट मपावृणोत् ॥५२॥
मदनपावक वाण विदीपिता-
न्तरवनस्य च धूम परम्परां।

पूर्णसुधाकरं पूर्णचन्द्रं द्रुतं शीघ्रं उदीक्ष्य दृष्ट्वा च पुनः मदनस्य कामस्य यत् चक्रं तदाख्यं आयुधं तस्मिन् या धीः तया: तद्विषयिण्याबुद्धोत्यर्थः दृशौ नेत्रे पिदधे पिहित-वती भयेनेति-शेषः भ्रान्तिमदलङ्कारः। एतेनास्याः अरत्याख्या स्मरदशा सूचिता। ५१॥

मलयेति। इन्दुमुखी चन्द्रवदना सा लक्ष्मणा मलयमारुतं दक्षिणवातं हठात् शीघ्रं यमदिगागतदूतं दक्षिणदिगागतं यम-दूतमित्यर्थः। अवेत्य ज्ञात्वा भृशभिया अतिभयेन गृहस्य दक्षिणपार्श्वगा दक्षिणपार्श्वस्थिता अखिला गवाक्षाः वातायनानि तेषां कपाटानि अरराणि तेषां समाहारः तत् अपावृणोत् असुद्रयेदित्यर्थः। भ्रान्तिमदलङ्कारः। अतिशयो-क्तिश्च। एतेनास्या अरत्याख्या स्मरदशा सूचिता। ५२॥

मदनेति। सा लक्ष्मणा खरनिश्वसनछलात् प्रखरश्वास-व्याजात् मदनस्य कामस्य पावकवाणेन आग्नेयशरेण विदीपितं

धृतवती ज्वरनिष्ठुरसनच्छला-
द्व्यसृजदश्रुजलानि शमाय सा ॥ ५३॥
विलिखितस्य हरेश्चरणान्तिके
लिखितु मुद्यमभागपि सा निजं।
गलित घर्म्मसवेपथु पाणिना
लुलितमश्रुजलैः किममार्ज्जयत् ॥५४॥

ज्वलितं आन्तरं अन्तःकरणमेव वनं काननं तस्य धूमपरम्परां धूमावलीं धृतवती सती तस्य ज्वलितान्तःकरणवनस्य शमाय शान्तेय अश्रुजलानिशीतकसलिलानि व्यसृजत् विससर्ज किं, रूपकोत्प्रेक्षापक्षालङ्कारः। एतेनास्या श्रीत्यागावस्था स्मरदशा सूचिता। ५३॥

विलिखितस्येति। सा लक्ष्मणा विलिखितस्य कस्तूर्य्या-दिनालिखितस्येत्यर्थः हरेः श्रीकृष्णस्य चरणान्तिके पादपद्म सन्निधौ निजं आत्मानं लिखितुं उद्यमभाक् उद्युक्तापि गलितः घर्म्मः स्वेदः यस्मात्सः पुनः सवेपथुः कम्पसहितः यः पाणिः हस्तः तेन एतेनास्या सात्त्विकोदय उक्तः। लुलितं भ्रष्टं स्वेदात् धौतं कम्पात् विषमितञ्च निजं अश्रुजलैः सात्त्विकोदितैरिति-भावः। अमार्ज्जयत् प्राक्षालयेत् किं पुनः समीचीनतया लिखितु मितिभावः। उत्प्रेक्षालङ्कारः। एतेनास्या क्रीत्यागावस्था स्मरदशा सूचिता। ५४।

सततभावनया निजया हरेः
कृपणभक्तकृपालुतयापि वा ।
प्रियमलीकपुरोगतमादरा
दुदकरोत्परिरब्धु मसौ भुजौ । ५५ ॥
हृदयनाथ सुरर्षिवचोजनु-
र्मम च सार्थयितुं किमिहागतः ।
इतिवदन्त्यथतेचितकंसजि-
त्पदि पतन्त्यदतोलिच सालिभिः । ५६ ॥

सततेति । असौ लक्ष्मणा निजया आत्मीयया सततभावनया निरन्तर चिन्तनेन वा हरेः श्रीकृष्णस्य कृपणभक्ते दीनभक्ते या कृपालुता दया तयापि अलीकपुरोगतं मिथ्याग्रस्थितं भ्रमदृष्ट मित्यर्थः । प्रियं श्रीकृष्णं आदरात् परिरब्धुं आलिङ्गितुं भुजौ स्वबाहू उदकरोत् ऊर्द्धं विस्तारयामास । काव्यलिङ्गा-लङ्कारः । एतेनास्या उन्मादाख्या स्मरदशा सूचिता । ५५ ॥

हृदयेति । किञ्चेतिचार्थः । सा लक्ष्मणा हे हृदयनाथ ! प्राणेश्वर ! सुरर्षे र्नारदस्य वचः लक्ष्मणा श्रीकृष्णस्य अनुग्रह पात्रं भवेदितिवचनं मम जनुः जन्म च सार्थयितुं इह आगतः किं इति वदन्ती कथयन्ती सती अन्तेचितस्य भ्रमदृष्टस्य कंसजितः श्रीकृष्णस्य पदि पादे "पादःपदङ्घ्रिश्चरणोस्त्रियामित्यमरः" पतन्तीसती आलिभिः सखीभिः कर्त्रीभिः उदतोलि उत्तोलिता । प्रेयोऽलङ्कारः । एतेनास्या उन्मादाख्या स्मरदशा सूचिता ।५६॥

दयित वर्णतया हृतमप्यवै
दलितमेणमदं ननु दारदं ।
इतरथास्य कृते सुरभि ग्रहे
कथममूर्च्छ दसौ धृतपाण्डुता । ५७॥

कमलिनीदल कल्पित मण्डपे
नलदचन्दन चन्द्र विलेपिते ।

दयितेति । असौ लक्ष्मणा दयितस्य श्रीकृष्णस्य वर्ण इव वर्णो यस्य सः तस्यभावस्तत्ता तया प्रियसावर्ण्यादित्यर्थः आहृतं अभिमतमपि दलितं एणमदं कस्तुरीं दारदं विषविशेषं "दारदोवत्सनाभश्च विषभेदा अमीनव" इत्यमरः अवैत् ज्ञातवती ननु इतरथा अन्यथा अस्य एणमदस्य सुरभिग्रहेगन्धग्रहणे कृते सति धृतपाण्डुता पाण्डिमयुक्ता सती कथं अमूर्च्छत् मुमूर्च्छ अतः कस्तूर्यां दारदज्ञानं सत्यमितिभावः । अनुमानालङ्कारः एतेनास्या मूर्च्छाख्या नवमी स्मरदशा सूचिता । ५७ ।

कमलिनीति । इयं लक्ष्मणा नलदं उषीरं चन्दनञ्च चन्द्रः कर्पूरस्च तैः विलेपिते " मूलेऽस्योषीरमस्त्रियां । अभयं नलदं सेव्यं । अथ कर्पूरमस्त्रियां । घनसारश्चन्द्रसञ्ज्ञ इति चामरः" । कमलिनीदलैः पद्मिनीपत्रैः कल्पितः रचितः यः मण्डपः तस्मिन् स्फुटनस्य स्फोटस्य सम्भवेन सम्भावनयां अत्रास्याकर्पूरादोजलपाताद्यथा स्फोटकोत्पत्तिः तद्दश्चङ्कयेतिभावः वर्जितं परित्यक्तं लेपनं चन्दनादिविलेपनं यस्याः सा बिसैः वृता वेष्टिता सती अन्तः अन्तःकरणे हरिं अभजत् । वाह्यज्ञानशून्याभवदित्यर्थः ।

स्फुटनसम्भववर्ज्जितलेपना
विसहता भजदन्तरियं हरिं ।५८॥
अथ सखीरुपचार परायणाः
पिहितधीपथमार्त्तितमोऽविशत् ।
प्रमदचन्द्रविलोपि मनोजग-
त्समवगुण्ठनकृन्मलिनप्रभं ।५९॥
तदनुकाश्चिदुशीर विपेषणे
कतिचिदम्बुजनालदलाहृतौ ।

हरिभजन दार्ढ्यात् अस्याः अस्मिन् जन्मनि हरिप्राप्तिसम्भावना अतः न दशमदशावकाशः । ५८ ॥

अथेति । अथ लक्ष्मणायाः बाह्यज्ञानाभावानुमानानन्तरं पिहित आच्छादितः धीरेव पन्थाः येन तत् प्रमदः आनन्द एव चन्द्रः तस्य विलोपि विलोपकं मनस एव जगतः समवगुण्ठनं आच्छादनं करोतीति तत्कृत् मलिना प्रभा यस्य तत् आलोका-भावत्वात् नीलं आर्त्ति पक्षे मलिना प्रभा येन आश्रयाणा-मितिशेषः तत् एव तत् आर्त्तिः पीडैव तमः अन्धकारः उपचार परायणाः सखीः लक्ष्मणासहचरीः अविशत् प्राप । लक्ष्मणा-वस्थां दृष्ट्वा सहचर्यो दुःखिता आसन्निति भावः । रूपका-लङ्कारः । ५९ ॥

तदन्विति । तदनु अनन्तरं काश्चित् सख्यः उशीराणां नलदानां विपेषणे पेषणे विषये कृतिपराः सचेष्टा अभवन् इति सर्व्वत्रयोज्यं। कतिचित् सख्यः अम्बुजानां नालानि मृणालानि

दलयितुं घनसार सुचन्दने
कृतिपराश्चपरा अभवन् भृशं ॥६०॥
भृशतृषा हरिनाम सुधाझरं
सहचरी वदनेन्दु विगत्वरं।
नृपसुता श्रवणाञ्जलिनाञ्जसा
परिनिपीय दधौ निजजीवनं ॥६१॥
समपलाप समुत्क मुद्रितो
विरहजाधिरसौ स्फुटता मगात्।

दलानि पत्राणि च तेषां आहृतौ आहरणे च किञ्च पराः इतराः सख्यः घनसारं कर्पूरं सुष्ठु चन्दनञ्च ते दलयितुं भृशं कृतिपरा अभवन्। उद्विग्नाः सर्वाः कार्य्यासक्ता वभूवुरितिभावः पर्य्यायोक्तिरलङ्कारः। ६० ॥

भृशतृषेति। भृशं अधिका तृषा उत्कण्ठा यस्याः सा नृपसुता लक्ष्मणा सहचरीणां सखीनां वदनेन्दुभ्यः मुखचन्द्रेभ्यः विगत्वरं विनिर्गतं हरेः श्रीकृष्णस्य नामान्येव सुधाझरः अमृत प्रवाहः तं श्रवणेन कर्णेनैव अञ्जलिना अञ्जसा अनायासं परिनिपीय श्रुत्वेत्यर्थः। निजजीवितं स्वजीवनं दधौ धारयामास केवलं सखीमुखेभ्यः कृष्णनाम सततं शृण्वन्त्या अस्याः लक्ष्मणायाः प्राणरक्षाभूदित्यर्थः परिणामालङ्कारः। ६१ ॥

समपलापेति। असौ एषः लक्ष्मणागतः विरहजः विरह जनितः आधिः मनोव्यथा "पुंस्याधिर्मानसीव्यथेत्यमरः" समपलापः निह्नवः गोपनमितियावत् एव समुद्गकः सम्पुटकः

इतरलोकरुजापि न निन्हुता।
किमुत मद्रपते र्दुहितुर्दशा। ६२॥
हरिपदाम्बुज लाभविलोभतो
विरहसिन्धु निमज्जन दुःखितां।
स्थविरधात्रिकया विनिवेदिता
मथददर्श स मद्रपतिः सुतां। ६३॥

तेन मुद्रितः अप्रकाशितोऽपि "अपलापस्तुनिन्हवः। समुद्गकः सम्पुटकः" इति चामरः। स्फुटतां प्रकाशं अगात् प्राप। नैतद्दुर्घटमित्यर्थापत्त्या विवृणोति। इतरेति इतरलोकस्य पृथग्जनस्य रुजा पीड़ापि न निन्हुता गुप्ता। मद्रपतेः मद्राधिपस्यापि प्रसिद्धस्येत्यर्थः दुहितुः दशा किमु सा गुप्ता इति किमुवक्तव्यं अर्थापत्यलङ्कारः। ६२॥

हरीति। अथ मद्रपतिः बृहत्सेनः हरेः श्रीकृष्णस्य पदाम्बुजयोः यः लाभः प्राप्तिः तस्मिन् यः विलोभः विशेषलिप्सा ततः हेतोः विरहः एव सिन्धुः तस्मिन् यत् निमज्जनं तेन दुःखिता यथा लोके कदाचित् कस्यचित् पद्मग्रहणेच्छया जलनिमज्जनं तद्वदितिभावः। सुतां पुत्रीं लक्ष्मणां स्थविरधात्रीकया वृद्धधात्र्या निवेदितां सतीं ददर्श दृष्टवान्। रूपकालङ्कारः। बृहत्सेनः स्थविर धात्रीमुखात् लक्ष्मणां कृष्णासक्तां श्रुत्वा द्रष्टुमागमामेत्यर्थः। ६३॥

इय मरचि यथा स्वसखी तथा-
पृथुमनोरथ सिद्धिदिनावधि ।
कृतिभरैः खलु संपरिरक्ष्यता
मितिजगाद पिता दुहितुः सखीः ।६४॥

स तनयां परिमृज्य करेण तां
नतमुखी मवदद्भृश दुःखितः ।
अजनि या तव दुर्लभयाचना
झटितिसापरिपेत्स्यति निश्चितं ।६५॥

इयमिति । इयं स्वसखी लक्ष्मणा यथा यत्नातिशयैः अरचि रचिताः भवतीभिरिति शेषः तथा वः कृतिभरैः प्रयत्नातिशयैः पृथु उत्कृष्टः यः मनोरथः वाञ्छा श्रीकृष्णालिप्सेत्यर्थः । तस्य सिद्धि दिनावधि सिद्धिकालपर्य्यन्तं परिरक्षतां इति एवं वाक्यार्थः कर्म्म पिता जनकः वृहत्सेन इत्यर्थः दुहितुः सखीः लक्ष्मणा वयस्याः जगाद कथयामास । वृहत्सेनः कृतज्ञत्वात् लक्ष्मणासखीः गुणग्रहणपूर्व्वकं स्वसुतायाः रक्षणे नियोजयामास । ६४ ॥

स इति । सः मद्राधिपः नतमुखीं नम्रवदनां लज्जयेतिभावः तां तनयां लक्ष्मणां करेण स्वहस्तेन परिमृज्य परामृश्य भृशं दुःखितः सन् अवदत् अकथयत् वक्ष्यमाणमितिशेषः । अयि ! तव या दुर्लभ याचना दुष्प्रापि प्रार्थना अजनि जाता सा झटिति शीघ्रं निश्चितं परिपेत्स्यति सुसिद्धा भविष्यति । दुर्लभामपि तव प्रार्थनां मया चिरमवश्यं सम्पादयितव्यमिति भावः । ६५ ॥

जितजगत्सहरिर्युवतीपतिः
कथमदः करपीड़नमेष्यति
इति विभावन सन्तमसा हतो
झटिति नारद भास्करमाप सः।६६॥

आतिथेयेन मुनिं प्रसन्नहृदयं मद्राधिपः स्वात्मजां
कृष्णप्रेमरसातिमज्जनवशात् प्रादुर्भवत्संज्वरां।

जितेति। जितानि विजितानि जगन्ति भुवनानि येन सः इन्द्रादिनामपि प्रार्थितावसर इत्यर्थः। युवतीनां रुक्मिण्यादिनां पतिः नायकः कान्तान्तरशिथिलाग्रह इत्यर्थः सः हरिः श्रीकृष्णः अदः करपीड़नं अमुष्याः लक्ष्मणायाः पाणिग्रहणं कथं केन उपायेन एष्यति प्राप्स्यति इति भावनेन एवं विचारेण यः सन्तमसः गाढ़ान्धकारः अज्ञानमिति यावत् तेनावृतः विचारमुग्धमना इत्यर्थः। सः मद्राधिपः झटिति तत्क्षणमित्यर्थः। नारद एव भास्करः सूर्य्यः अज्ञानान्धकारनिवर्त्तक इत्यर्थः तं आप प्राप बृहत्सेनस्य केनोपायेन सुतायाः कृष्णेन विवाहो घटिष्यत इति भावनावसर एव नारद आगतवानित्यर्थः। रूपकं। ६६ ॥

आतिथेयेनेति। पृच्छापटुः प्रश्ननिपुणः असौ मन्द्राधिपः आतिथेयेन अतिथिसत्कारेण प्रसन्नहृदयं सन्तुष्टचित्तं मुनिं नारदं कृष्णस्य प्रेमरसे अनुरागजले अतिमज्जनवशात् प्रादुर्भवन् सञ्जातः संज्वरः सन्तापः विरहजन्य इत्यर्थः सान्निपातिक इति गम्यते यस्यास्तां स्वात्मजां स्वपुत्रीं लक्ष्मणां प्रति लक्ष्मणासन्ताप शान्तयर्थे मित्यर्थः अमर्त्त्यवैद्यौ अश्विनीकुमारौ इव रुचिरः

प्रत्यानेतुमसमर्थ एव रुचिरं तार्क्ष्यध्वजं भेषजं
साधूपायमसौ प्रभूत विनयं पप्रच्छ पृच्छापटुः ॥६७॥
द्रुपदात्मजा वरण वत् स्वयंवरः
सपणोऽस्तु किन्त्विह विभातु संवृतः।
शकुलो निमन्त्रित नृपेषु कोऽपि तं
न हि कंससूदन मृते विभेत्स्यति ॥६८॥

मनोहरः तं तार्क्ष्यध्वजं श्रीकृष्णं भेषजं औषधं व्यस्तरूपकं आनेतुं कृष्णानयनार्थमित्यर्थः साधूपायं सम्यगुपायं प्रभूत विनयं सविनयातिशयं यथा तथा पप्रच्छ पृष्टवान्। तदा मद्राधिपो नारदं सत्कृत्य केनोपायेन लक्ष्मणा कृष्णविवाहं सम्पादयिष्यामीति पृष्टवानित्यर्थः रूपकालङ्कारः। शार्दूल विक्रीडितं वृत्तं। ६७॥
नारदोक्तं विवृणोति।

द्रुपदेति।द्रुपदात्मजायाः द्रौपद्याः यद्वरणं स्वयम्वरः तदिव सपणः पणसहितः स्वयम्वरः लक्ष्मणाया इति शेषः अस्तु भवतु। किन्तु इहपणे लक्ष्यभूत इत्यर्थः शकुलो मत्स्यः संवृतः आच्छादितः केवलं अधोजलकुण्डे बिम्बित इत्यर्थः विभातु शोभतां। निमन्त्रित नृपेषु लक्ष्यवेधनार्थमाहूतेषु राजसु मध्ये कंससूदनं ऋते श्रीकृष्णं विना कोऽपि नृपः तं मत्स्यं न विभेत्स्यति विद्धं करिष्यतीत्यर्थः। कृष्ण एव भेत्स्यति लक्ष्मणास्वयम्वरे पणलक्ष्यं बहिः समाच्छन्नं केवलमधोजलबिम्बितं मत्स्यं परिकल्प्य श्रीकृष्ण एव वेद्धुं समर्थो नान्य इतिभावः व्यतिरेकः। ६८॥

इति साधुसाधन सुबोधनेनतं
प्रविधाय तत्कृति समुद्भवत्वरं
अभिनन्द्य वाञ्छित सुसिद्धिदाशिषा
मुनिरभ्र मण्डलमगाद् द्रुतं तदा । ६८ ॥

योऽभूद्विष्णुरथस्य चित्ररचनादक्षस्य सूनुः कवेः
धीरः श्री भुवनेश्वरः सुविदुषामग्रस्य पुत्त्रोरथः ।
तस्य श्रीवसुदुर्गनाथ विहितोत्साहस्य काव्ये कृतौ
सर्गः श्रीमति लक्ष्मणापरिणये शेषं द्वितीयोऽगमत् ।

इतीति । तदा मुनिः नारदः इति पूर्वोक्तस्य साधुसाधनस्य उपयुक्तोपायस्य सुबोधनेन ज्ञापनेन तं बृहत्सेनं तस्य उपायस्य या कृतिः तस्यां समुद्भवन्ती त्वरा उद्वेगो यस्य तं मुनिवाक्य पालनोद्योगिनं प्रविधाय कृत्वा वाञ्छितस्य मनोरथस्यसुसिद्धिं पूर्त्तिं ददाति सम्पादयतीति तथोक्तया मनोरथसिद्ध्यादेशिकया आशिषा आशीर्व्वादेन अभिनन्द्य अभ्रमण्डलं आकाशं द्रुतं शीघ्रं अगात् अगमत् । ६८ ॥

यइति । श्रीवसुदुर्गनाथेन विश्वनाथदेवशर्म्मणा विहितः कृत उत्साहो यस्य तस्य तेन उत्साहितस्येत्यर्थः तस्य कृतौ श्रीलक्ष्मणा परिणये काव्ये द्वितीयः सर्गः शेषं अगमत् समाप्तः ।

इति श्री लक्ष्मणापरिणयव्याख्यायां
द्वितीयः सर्गः समाप्तः ।

---



## तृतीयः सर्गः ।



अथोमहासेन समान विक्रमो
नृपोहृदन्ते न ऋषेर्व्वचोऽङ्कुरं ।
फलाशयायत्न जलेन पालयन्
स्वयम्वराडम्बर वृक्षमातनोत् । १ ॥
सलक्ष्मणां लक्ष्यविवेध दक्षिणां
विधातुकामः क्षितिपाल पुङ्गवान् ।

अथ इति । अथोऽनन्तरं महासेनस्य कार्त्तिकेयस्य "कार्त्तिकेयो महासेनः शरजन्मा षडानन इत्यमरः" समानः विक्रमे यस्य सः हृदन्तेनः नृपः ऋषेः नारदस्य वचोऽङ्कुरं वाक् प्ररोहं फलाशया सुताविवाहरूपफल प्राप्तीच्छया यत्नजलेन प्रयत्नरूपसलिलेन पालयन् रक्षन् तदनुसारेण व्यवहरन्नित्यर्थः । स्वयम्वराडम्बरः स्वयम्वराटोप एव वृक्षः तं आतनोत् विस्तारयामास । अथ मद्रेशः नारदवचनानुसारेण स्वयम्वरायोजनं चकारेति भावः । रूपकं । १ ॥

सइति । सः मद्रपतिः लक्ष्मणां स्वतनयां लक्ष्यविवेधस्य लक्ष्यवेधनस्य कर्म्मणः दक्षिणां तत्स्वरूपां विधातुं लक्ष्यवेधिने दातुं कामो यस्य सः सन् तलोत्थशब्दैः करतालशब्दैरिव

ततोऽथ शब्दैरिव पत्रिकार्पणैः
समाहृय शौर्य्यं परीक्षणाशया । २ ॥
पुरं स्वकं भक्तिभरेण भूपतिः
शुभेन स स्थानमिवोत्तमाशयः ।
निसर्गनैर्म्मल्य पयः प्रमार्ज्जितं
प्रसाधयामास मुदा प्रयत्नतः । ३ ॥
कविप्रचेतो बुधमित्र संहते
र्महीन्द्रवृन्दस्य च वेशनोचिता ।

पत्रिकार्पणैः निमन्त्रणपत्रप्रदानैः क्षितिपालाः राजानः पुङ्गवाः महोक्षा इव तान् शौर्य्यपरीक्षणाशया पराक्रमपरिज्ञाभिप्रायेण समाहृयत् आहूतवान्। वृषसेनः स्वयम्बरार्थं राज्ञो निमन्त्रयामासेति भावः। उपमालङ्कारः। २ ॥

पुरमिति। उत्तमाशयः सदाशयः जनः निसर्गनैर्म्मल्यं स्वाभाविक निष्पापत्वं पुरपक्षे स्वाभाविकपरिष्कारत्वमेव पयः जलं तेन प्रमार्जितं परिशुद्धं स्वकं स्वकीयं स्थानं सद्‌स्थानमिव सः भूपतिः मद्राधिपः स्वकंपुरं नगरं शुभेन शुभकरेण भक्तिभरेण रचना बाहुल्येन स्वयम्बरोत्सवहेतुकेन अन्यत्र भक्त्यतिरेकेण "भक्तिःपूज्यानुरागेच रचनायामितिकोषः" मुदा प्रयत्नतः सयत्नं प्रसाधयामास भूषयामास। मद्रेश्वरः स्वयम्बरार्थं नगरं मण्डयामासेत्यर्थः। उपमालङ्कारः। ३ ॥

कवीति। तदा कवीनां काव्य कर्त्तृणां प्रचेतसां प्रकृष्ट चित्तानां बुधानां पण्डितानां मित्राणां सुहृदां अन्यच्च कवेः

समाजशाला रचिता मणिप्रभाभरैः
सदा देवसभा मुपाहसत्। ४॥
क्षमाभुजां शौर्य्यकषो पलायितं
सलक्ष्मणाशुल्क सुलक्ष्यमक्षरं।
पतिष्णु शीर्षण्यनिरीक्ष्य शेखरे
हिरण्मय स्तम्भवरे न्यरोपयत्। ५॥

शुक्रस्य प्रचेतसः वरुणस्य वुधस्य सोमग्रहस्य मित्रस्य सूर्य्यस्य च या संहतिः वर्गः तस्याः महीन्द्राणां राज्ञां वृन्दस्य समूहस्यच वेशने उपवेशे उचिता योग्या रचिता विरचिता समाजशाला स्वयम्वरसभागृहं मणीनां चन्द्रकान्तादीनां प्रभाभरैः कान्तिपुञ्जैः देवसभां सुधर्म्मां "स्यात्सुधर्म्मादेवसभेत्यमरः" उपाहसत् उपहसितवती इत्युत्प्रेक्षा। ४॥

क्षमाभुजामिति। सः मद्रेश्वरः क्षमाभुजां राज्ञां शौर्य्यस्य पराक्रमस्य कषोपलायितं निकषोपलतुल्यं परीक्षास्थानमित्यर्थः लक्ष्मणायाः शुल्कं शुल्कभूतं सुलक्ष्यं साधुलक्ष्यं पतिष्णु पतनशीलं शीर्षण्यं शिरस्त्राणं यस्य तेन निरीक्ष्यः निरीक्षणीयः शेखरः शिरोनिहितमाला अग्रमिति यावत् यस्य तस्मिन् अत्युच्छ्रित इत्यर्थः यस्याग्रदर्शने दर्शकस्य शिर्षण्यपतनं भवेदित्यर्थः। हिरण्मये स्वर्णमये स्तम्भवरे स्तम्भश्रेष्ठे अक्षरं स्थिरं सत् न्यरोपयत् निरूपितवान्। मद्राधिपः अत्युच्च स्वर्णस्तम्भे लक्ष्यमस्थापयदित्यर्थः। उपमातिशयोक्त्यलङ्कारौ। ५॥

अशोभत स्तम्भशिखैक पार्श्वगं
रथाङ्गमूर्द्धस्थित मीन चक्षुषा।
सहैकरेखा गत मध्य रन्ध्रकं
बहिः समाच्छन्नमधोऽम्बुविम्बितं। ६॥
विशुद्धवंशोद्भव मार्जवान्वितं
गुरुत्वमाप्तं गलिते गुणेऽपिसत्।
अथात्र चित्रं शुशुभे महद्धनुः
शरत्रयं लक्ष्यविभेदनाय च। ७॥

लक्ष्यस्वरूपमाह अशोभतेति। स्तम्भस्य हिरण्मय सेरित्यर्थः या शिखा अग्रं तस्याः एकपार्श्वगं एकपार्श्वस्थितं ऊर्द्धस्थितस्य स्वोपरिस्थापितस्य मीनस्य लक्ष्यभूत मत्स्यस्य चक्षुषा नेत्रेण सह एकरेखागतं समरेखागतं मध्यरन्ध्रकं मध्यच्छिद्रं यस्य तत् बहिः बहिर्भागे समाच्छन्नं केवलं अधोऽम्बुनि अधस्थित कुण्डजले विम्बितं प्रतिबिम्बितं रथाङ्गं चक्रं लक्ष्याधारभूतमित्यर्थः। अशोभत शुशुभे। स्वभावोक्तिरलङ्कारः। ६॥

विशुद्धेति। अथ लक्ष्यस्थापनानन्तरं अत्र प्रदेशे विशुद्ध वंशात् निर्द्दोषवेणोः अन्यत्र निर्मलकुलात् उद्भवोयस्यतत् गुणे मौर्व्यां अन्यत्र पाण्डित्यादौ गलिते शिथिले गतेच सत्यपि आर्जवान्वितं ऋजु सरलं च गुरुत्वं दुर्भरत्वं महत्वं च आप्तं प्राप्तं चित्रं बिस्मयकरं महत् धनुः कार्म्मुकं च शरत्रयं बाणत्रितयं लक्ष्यबिवेधनाय लक्ष्यभेदायशुशुभे बिरराज समासोक्तिरलङ्कारः। ७।

तदाष्टहस्तेन सुता स्वयंवर
प्रचारयित्रीं शुभपत्रिकां नृपाः।
मनोभवाज्ञा मिवशौर्य्य सम्पदा
सुसाधनीया मधिजग्मुरुत्सुकाः। ८॥

वलाधिका लक्ष्यविवेधनोत्सुकाः
कलाधिका लक्ष्यविलक्ष्यतां धिया।
कलाविदोऽस्याः किलकेलि भाजनं
निजं च निश्चित्य समुत्कतां दधुः। ९॥

तदेति। तदा नृपाः राजानः वृहत्सेन सुतायाः लक्ष्मणायाः स्वयम्बरस्य प्रचारयित्रीं प्रकाशिकां शुभपत्रिकां निमन्त्रणपत्रं शौर्य्यसम्पदापराक्रमातिशयेन सुसाधनीयां पालनीयां मनोभवस्य कामस्य आज्ञां आदेशमिव उत्सुकाः उत्कण्ठिताः सन्तः अधिजग्मुः प्रापुः। देशान्तरेष्विति शेषः। ८।

वलाधिकाइति। वलेन पराक्रमेण अधिकाः श्रेष्ठाः नृपा इति शेषः लक्ष्यस्य विवेधने उत्सुकाः उत्कण्ठिताः बभूवुरिति शेषः। कलाभिः कवितादिभिः अधिकाः श्रेष्ठाः धिया स्वबुद्धया लक्ष्यशरव्यस्य विलक्ष्यतां मिथ्यात्वं निश्चित्य च पुनः कलाविदः चतुःषष्ठीकलानिपुणायाः अस्याः लक्ष्मणायाः केलिभाजनं क्रीड़ास्थानं अभिमतमितियावत् निजं आत्मानं निश्चित्य किल समुत्कतां उत्कण्ठां दधुः धारयामासुः। वलिनः कलाभिज्ञाश्च सर्वे लक्ष्मणा दर्शनार्थमुत्कण्ठिता बभूवुरिति भावः। अतिशयोक्तिरलङ्कारः। ९॥

इयं नु सौन्दर्य्य रसस्पृहावती
मृगीदृगात्मीयनिदेश बन्धनं ।
विभेत्स्यती त्युत्कतया वशीकृताः
वभुर्महीपा वररूप दर्पिताः । १० ॥

नृपागुणाढ्यां गुणिनः पणप्रथा-
यथार्थताद्वापरतत्पराः परे ।
इमाममनयन्त मनोरथ द्रुतं-
निजं स्वजन्तीं वरणस्रजाञ्जसा ।११॥

इयमिति । वररूपेण उत्कृष्टसौन्दर्य्येण दर्पिताः गर्व्विताः महीपाः राजानः नातिपराक्रमिणोऽपीत्यर्थः । सौन्दर्य्यरसे स्पृहावती अभिलाषिणी इयं मृगीदृक् एणीनयना लक्ष्मणा आत्मीयस्य पित्रादेः निदेशः आदेशः नियम इति यावत् एव वन्धनं लक्ष्यवेधनरूपमित्यर्थः विभेत्स्यति लङ्घयिष्यति नु इति सम्भावनायां इति मत्वेत्यर्थः उत्कतया उत्कण्ठया वशीकृताः वभुः शुशुभिरे । सौन्दर्य्यशालिनोऽपि लक्ष्मणाप्राप्त्युत्सुका बभूवुः । इतिभावः । अतिशयोक्तिरलङ्कारः । १० ॥

नृपेति । परे इतरे गुणिनः गुणवन्तः नृपाः पणप्रथायाः लक्ष्यवेधनप्रसङ्गस्य द्वापरे सन्देहे तत्पराःसन्तः लक्ष्यवेधनप्रसङ्गं सन्दिहाना इत्यर्थः सन्देहद्वापरौ चेत्यमरः । गुणाढ्यां गुणाभिलाषिणीं इमां लक्ष्मणां मनोरथेन अभिलाषेण द्रुतं गतं निजं आत्मानं वरस्रजा वरणमालया अञ्जसा अनायासेन स्वजन्तीं आलिङ्गन्तीं स्वखनामित्यर्थः अमन्यन्त वुवुधिरे । गुणिनः आत्मानंगुणाढ्यया अनया वृतप्रायं मेनिर इति भावः । अतिशयोक्तिरलङ्कारः । ११ ॥

स्मरान्धकाराहत बुद्धिवृत्तयो
महीमहेन्द्रा नृपजाधरारुणं ।
अपेक्ष्य लक्षाधिक संख्यकाः परं
न लक्ष्यवार्त्तां समलक्षयन् चिरं ।१२॥

त्रिलोकरत्नायित लक्ष्मणाशया-
क्षितीन्द्र लक्षैक परीक्ष्य लक्ष्यकं ।
स्वयम्बरं कौतुकिनो दिदृक्षवो-
न भेजिरे मद्रपथं च केचन । १३ ॥

स्मरेति । स्मरः कामएव अन्धकारः तेन आहता बुद्धि वृत्तयोयेषां ते लक्षाधिकसंख्यका मही महेन्द्रा नृपाः "नृपजाधरः लक्ष्मणोष्ठएव अरुणः,अनुरः तं परं अपेक्ष्य, लक्ष्यस्य वार्त्तां वृत्तान्तं चिरं न समलक्षयत् बुबुधिरे । कामान्धा राजानो लक्ष्मणासक्ता लक्ष्यं न प्रमाणीचक्रुरिति भावः । रूपकालङ्कारः । १२ ॥

त्रिलोकेति । त्रिलोकरत्नायितायां लक्ष्मणायां या आशा लिप्सा तयाहेतुना क्षितीन्द्रलक्षैः राजसमूहैः एकपरीक्ष्यं लक्ष्यकं अरब्धं यस्मिन् तं स्वयम्बरं अत्यद्भुतमित्यर्थः । दिदृक्षवः द्रष्टुमिच्छवः केचनकौतुकिनो विदग्धाः मद्रस्य पन्थामार्गः तं नभेजिरे सर्व्वएवभेजिर इति भावः जगदाश्चर्य्यभूतं स्वयम्बरं द्रष्टुं इतरे कौतुकिनोऽपि मद्रपथिकाबभूवुरितिभावः । काव्य-लिङ्गमलङ्कारः । १३ ॥

दृशोर्द्वयीं मद्रमहीन्द्र नन्दिनी-
प्रभासुधानिर्झर मज्जनेनकः ।
द्रुयेष नो सार्थयितुं जनोऽवनौ-
फलं यदक्ष्णो रुचिरावलोकनं ।१४॥

तदानपेक्ष्या वनिपाः स्वयोषितां
निरन्तरं नेत्रपयोऽतिवर्षणां ।
तथोष्णा निःश्वास परम्परा महा-
प्रचण्डझञ्झानिल मुत्सुकाययुः ।१५॥

दृशोरिति । अवनौभूलोके कः जनः दृशोः द्वयीं नेत्रद्वयं मद्रमहीन्द्र नन्दिन्याः प्रभाएव सुधानिर्झरः अमृत प्रवाह स्तस्मिन् मज्जनेन अवगाहनेन । लक्ष्मणा शोभादर्शनेनेत्यर्थः सार्थयितुं सफलांकर्त्तुं न द्वयेष दृष्टवान् सर्व्वएवेत्यर्थः । यद्वतोः रुचिरावलोकनं सुदृश्यदर्शनं अक्ष्णोः चक्षुषोः फलं प्रयोजनं अतः सर्व्वाङ्ग सुन्दरीं लक्ष्मणां द्रष्टुं सर्वे जनाः मद्रगमनेच्छुवोबभूवुरिति भावः अर्थान्तरन्यासोऽलंकारः । १४ ॥

तदेति । तदा तस्मिन्नवसरे ऽवनिपा राजानः स्व योषितां निजस्त्रीणां निरन्तरं सन्ततं नेत्रपयसां लोतकजलानां अतिवर्षणां अतिवृष्टिं भाविविरह हेतुकमित्यर्थः । तथा तद्वत् उष्णा-निःश्वासपरंपरा एव महाप्रचण्ड अतिप्रखरः झञ्झानिलः तं अनपेक्ष्य नगणयित्वा, उत्सुका लक्ष्मणा दर्शनोत्कण्ठिताः सन्तः ययुः जग्मुः मद्र मितिशेषः । १५ ।

प्रिये प्रियातुं यतचेतसि प्रिया
दिनादतो नौ सखिता छिदामिता।
इतीवसंसूच्य कुचाञ्चलाञ्चितं
छिनत्ति हारं स्म वरं च काचन ।१६॥
निजे प्रियेमद्र मुपैतु मुद्यते
भविष्णुसापत्न्य भवैः सुदुर्भरैः।
नमन्मुखी मानभरै रसूचय
न्मुखं विलोक्यं न तवेति काच न।१७॥

प्रिय इति। किं चेतिचार्थः। प्रिये स्वनायके प्रयातुं गन्तुं मद्रमितिशेषः। यतचेतसि यत्नवती सति काचनप्रिया, अतो दिनात् अद्यारभ्येत्यर्थः। नौ आवयोः सखितासख्यं छिदां च्छेदं इता प्राप्ता छिन्नेत्यर्थः। इति संसूच्य सूचयित्वेव कुचयोः अञ्चले सीम्नि अञ्चितं शोभितं वरं उत्कृष्टं हारं मुक्तावलीं छिनत्तिस्म चिच्छेद। मानात् हारच्छेदनेनस्वप्रणयभङ्गं सूचयामास इत्यर्थः। उत्प्रेक्षालंकारः। १६॥

निजइति। निजे आत्मीये प्रिये कान्ते मद्रं उपैतुं गन्तुं उद्यते उद्युक्ते सति भविष्णु भविष्यत् यत् सापत्न्यं सपत्नीभावः तद्भवैः तज्जन्यैः सुदुर्भरैः अतिदुर्व्वहैः। मानभरै मानातिशयैः, नमन्मुखी नम्रवदना काचन नायिका तव भवतः अन्यासक्तस्येत्यर्थः। मुखं वदनं नविलोक्यं, न द्रष्टव्यं इति एवं असूचयत् सूचयामास। १७॥

प्रियां च कश्चिन्निज मद्र्ययान्विता-
श्रुतिव्यथा सम्वरतत्परा मपि ।
परिस्फुरद्घ्राण पुटोच्चलन्मणि
प्रकम्पदम्भाद्द्विजहौ निषेधिकां ।१८॥

स्वमद्र्ययाना श्रुतिजाधि हव्यवाट्-
शिखावली म्लानतनूलतां निजां ।
जहौ प्रियां कश्चनभावगुप्तये
स्मितंनिशान्तेन्दु निभं च बिभ्रतीं ।१९॥

प्रियामिति । कश्चित् नायकः निजस्य या मद्र्यान्विता मद्रदेशं प्रतियात्रा तस्याः श्रुत्या श्रवणेन या व्यथा दुःखं तस्याः सम्वरे सम्वरणे तत्परामपि परिस्फुरन् क्रोधात् स्फुरन् यः घ्राणपुटः तस्मिन् उच्चलतः चञ्चलस्य मणेः नासामणेः यः प्रकम्पः कम्पनं तस्य दम्भात् कपटात् निषेधिकां मद्र्यात्रां निषेधयन्तीमित्यर्थः प्रियां स्वभार्यां जहौ तत्याज । स्वदयिता दुःखमनपेक्ष्य मद्रमुद्दिश्य ययावित्यर्थः । अपह्नुत्यलङ्कारः । १८॥

स्वेति । कश्चन नायकः स्वस्य या मद्र्यात्रा तस्याः श्रुतिजः श्रवणजन्यः यः आधिः मनोव्यथा स एव हव्यवाट् अग्निः तस्य शिखावल्या ज्वालासमूहेन म्लाना मलिना तनूलता यस्यास्तां आधिविवर्णामित्यर्थः । किन्तु भावगुप्तये अभिप्रायगोपनाय निशान्तेन्दुनिभं प्रभातचन्द्रसदृशं पाण्डुरकान्तिमित्यर्थः । आनन्दाभावात् स्मितस्य तथात्वमिति भावः । स्मितं मन्दहासं बिभ्रतीं धारयन्तीं च निजां प्रियां जहौ तत्याज । मद्रमगमदित्यर्थः । उपमालङ्कारः । १९ ॥

पराजितश्चात्मभवेन लक्ष्मणा-
युधेन कृष्णस्य च मद्गगामिनः ।
स्वनायिका काय निकाय आबभौ
तदाजयस्तम्भ कदम्बकायितः ।२०॥
प्रियान्तराशा परिरब्धमच्युतं
विभाव्य भैष्मीङ्गित गोपनोद्यता
अपेत्यतत्पृष्ठचरी व्यसर्ज्जय
दलीकनिःश्वास मलीक नन्दिता ।२१॥

पराजितसीति । तदा मद्रयात्रावसरे लक्ष्मणा एव आयुधं प्रहरणं यस्य तेन आत्मभवेन कामेन पराजितस्य लक्ष्मणा-ग्रक्तसेत्यर्थः । अतः मद्रगामिनः श्रीकृष्णस्य स्वनायिकानां रुक्मिण्यादि निजस्त्रीणां कायनिकाय देह-समूहः जयस्तम्भ-कदम्बयिकायितः जयस्तम्भसमूहभूतः आबभौशुशुभे । उपमा-लङ्कारः । रुक्मिण्यादीनां कृष्णविरहग्रङ्कया स्तम्भोऽभवदित्यर्थः ।२०॥

प्रियेति । भैष्मी रुक्मिणी अच्युतं श्रीकृष्णं प्रियान्तरा अन्य नायिका लक्ष्मणा तस्यां या आशा वाञ्छा तया परिरब्धं आलिङ्गितं विभाव्य ज्ञात्वा इङ्गितगोपने अभिप्रायगुप्तौ उद्यता अतः अलीकनन्दिता मिथ्या हृष्टा अपेत्य अपसृत्य तस्य श्रीकृष्णस्य पृष्ठचरी पश्चाद्वर्त्तिनी सती अलिकनिःश्वासं दुःख श्वासं व्यसर्जयत् विसर्जयामास । २१ ॥

प्रियेत्वदन्या न ममेति सत्यता
प्रियस्य रत्योक्तवतो निजा च भा।
तथाविधा मा पिच सत्यभामया
निरर्थकामानि समं समाख्यया ।२२॥
प्रियस्य दाच्चिण्य मसूचणं तथा
सुभावि सत्यागतमैच्य नायिकाः।
भविष्णु सापत्न्य भवं पराभवं
न जाम्बवत्यादय आपुरुत्तमाः ।२३॥

प्रियेति। मम त्वदन्या त्वद्व्यतिरिक्ता प्रिया प्रेयसी न अस्तीतिशेषः इति एतत् वाक्यं रत्या प्रीत्या उक्तवतः कथितवतः प्रियस्य सत्यता सत्यवचनं च निजा स्वकीया भा शोभा अपिच तथाविधा अनन्यसदृशी मा सम्पत्तिः एताः समाख्यया सत्यभामेति स्वनाम्ना समं निरर्थका निष्प्रयोजना अमानि अबोधि सत्यभामा लक्ष्मणावक्तं कृष्णाच्चात्वा स्ववाल्लभ्यं सौन्दर्य्यं ऐश्वर्य्यनाम च निरर्थकं मेनइत्यर्थः। सहोक्तिरलङ्कारः। २२॥

प्रियस्येति। जाम्बवत्यादयः उत्तमाः नायिकाः सत्यागतं सत्यभामानिष्ठं प्रियस्य श्रीकृष्णस्य तथा तादृशं दाच्चिण्यञ्च सुभावि भविष्यत् असूचणं अवहेलं "अवहेल मम असूचणामित्यमरः" ऐच्य ज्ञात्वा भविष्णु भविष्यत् यत् सापत्न्यं सपत्नीभावः तस्मात् भव उत्पत्तिर्यस्य तं पराभवं भविष्यत्सापत्न्य जन्य दुःखं न आपुः प्रापुः। २३॥

प्रयातुकामे विजये स्वयंम्बर-
स्थलं सुभद्रा स्फुटलोधितुल्यया।
तनुश्रिया कान्तपदे समार्च्चय-
त्प्रणामदम्भात्स्वनिपातसूचिका ।२४॥
जगादकृष्णं बलकृष्णसोदरा
युवां नु कृष्णौ वहुलक्ष्य भेदिनौ।
पटागमो मे यदितेन विध्यतां
त्वया यदीदं सहजप्रियागमः ।२५॥

प्रयात्वेति। विजये अर्ज्जुने स्वयम्बरस्थलं प्रयातुकामे गन्तुकामे सति सुभद्रा स्फुटलोधितुल्यया विकशित लोधिकुसुम समानया भाविविरहपाण्डिम्नेत्यर्थः। तनुश्रिया देहशोभया प्रणामदम्भात् प्रणिपातकपटात् स्वनिपातस्य आत्मनिपतनस्य विरहहेतुकमरणस्येत्यर्थः। सूचिका व्यञ्जिका सती कान्तपदे नायकचरणौ समार्च्चयत् पूजयामास। उपमापह्नवोत्प्रेक्षालङ्काराः। २४॥

जगादेति। बलकृष्णसोदरा सुभद्रा कृष्णं अर्ज्जुनं जगाद सपरिहासमाह कृष्णौ कृष्णनामानौ युवां वासुदेवः त्वञ्च वहुलक्ष्य भेदनौ प्रभूतशरव्यवेधनसमर्थौ भवथ इति शेषः। तेन श्रीकृष्णेन विध्यतां यदि लक्ष्यमितिशेषः। सम्भावनायां लोट्। तर्हि मे मम पटागमः वस्त्रप्राप्तिः नवभ्रातृजाया हेतुकेति भावः त्वया भवता इदं लक्ष्यं विध्यतां यदि तर्हि सहजानां भवद्भ्रातॄणां युधिष्ठिरादीनां प्रियागमः भार्य्याप्राप्तिः द्रौपदीप्राप्तिवदितिभावः। दीपकालङ्कारः। २५॥

धनञ्जयं लक्ष्य विभेदन क्षमं
भजेद्यदीयं चतुरो न पाण्डवान् ।
इदं विदित्वापि वियोगशङ्कया
न याज्ञसेन्या किमु दुर्म्मनायितं ।२६॥

सुयोधने मद्र समुद्र सम्भवां
श्रियं समाहर्त्तुं मनस्य सुव्ययं ।
प्रियोष्णा नासा निलपृष्ठ सम्भव
त्स्व नष्टचेष्टत्वमिषाद सूचयन् ।२७॥

धनञ्जयमिति । इयं लक्ष्मणा लक्ष्यविभेदने क्षमं शरव्यवेध पटुं धनञ्जयं भजेत् आश्रयेत् यदि तर्हि चतुरः अन्यान् पाण्डवान् युधिष्ठिरादीन् अहमिवेतिशेषः न भजेत् इदं एतत् विदित्वा ज्ञात्वापि याज्ञसेन्या द्रौपद्या कर्त्र्या वियोगशङ्कया अर्जुनेनेति शेषः । न दुर्म्मनायितं दुःखितं किमु दुर्म्मनायितमेवेत्यर्थः । २६ ॥

सुयोधन इति । सुयोधने धृतराष्ट्रपुत्रे मद्रसमुद्रसम्भवां श्रियं लक्ष्मणां समाहर्त्तुं मनसि आदातुकामे सति प्रिया तद्भार्य्या नासानिलस्य निःश्वासस्य पृष्ठसम्भवत् पश्चाद्भवं यत् स्वस्य आत्मनः नष्टचेष्टत्वं मोहः तस्यमिषात् कपटात् असुव्ययं प्राणत्यागं असूचयत् सूचयामास । दुर्य्योधनस्य मद्रगमन समये तद्भार्य्या उष्णां निश्वस्य मूर्च्छितासती भवद्विरहे प्राणान् त्यक्ष्यमीति सूचयामामीत्यर्थः । अतिशयोक्तिरूपका पह्नवालङ्काराः । २७ ॥

पतिं किमाकर्ण्य च लक्ष्मणापरं
भ्रमन्मतेर्घर्म जलोद्गम च्छलात् ।
असंख्य धाराभिरिवागलद्भृशं
न कर्ण पत्न्याः प्रियता प्रतीकतः ।२८॥

निशम्य रामं गमनोन्मुखं
नमन्मुखी सुराविम्बित रक्तलोचना ।
स्वभावगुप्त्यै चषकं च रेवती
समार्पयत्कम्प्र करात्पपात तत् ।२९॥

पतिमिति । किञ्चेतिचार्थः पतिं नायकं लक्ष्मणापरं मात्र्यासक्तं आकर्ण्य श्रुत्वा भ्रमन्मतेः भ्रान्तचित्तायाः मति-मतिमतोरभेदोपचारात् समानकर्तृकत्व निर्वाहः । कर्णस्य अङ्गराजस्य पत्न्याः नायिकायाः प्रियता प्रेम "प्रेमानाप्रियता-हार्दमित्यमरः" प्रतीकतः अङ्गेभ्यः घर्मजलोद्गमच्छलात् स्वेदो-द्गमव्याजात् असंख्यधाराभिः इव न अगलत् किं । उत्प्रेक्षा-पह्नवालङ्कारोऽपि । २८॥

निशम्येति । रेवती बलदेवपत्नी रामं बलदेवं गमने मद्र यात्रायां उन्मुखं प्रवणं निशम्य दृष्ट्वा नमन्मुखी नम्रवदना अतः सुरायां मदिरायां विम्बिते रक्ते लोहिते मानादितिभावः लोचने नेत्रे यस्याः सा अतः स्वस्य भावगुप्त्यै अभिप्रायगोपनाय चषकं मद्यपात्रं समार्पयत् । आदरात् रामायेतिशेषः तत् चषकं कम्प्रात् कम्पशीलात् अन्तःकोपादितिभावः करात् हस्तात् पपात अस्खलत् विषमालङ्कारः । २९ ।

विहाय मां क्व व्रजसीति नायिका
जगाद कान्तं च सगद्गदाक्षरा ।
नताननां तां स्रवदश्रुमुत्सुकः
ससान्त्वयामास विचुम्ब्य गण्डयोः ।३०॥

ससंभ्रमावर्त्त समुत्कता नव-
प्रमोदपूरैः क्षितिपाः प्रवाहिताः ।
पुरं तदा मद्रमहीभृदञ्चितं
महामहाम्भोनिधिभूतं मा ययुः ।३१॥

धरा शिरोभूषण रत्नतां गतैः
धराधिपै र्देवनिभैः सुसंभृता ।

विहायेति । मां विहाय क्व व्रजसि इति सगद्गदाक्षरा सती कान्तं मद्रगामिनमित्यर्थः जगाद कथयामास सः कान्तः नताननां नम्रमुखीं स्रवदश्रुं गलज्जोतकां तां उत्सुकः सन् गण्डयोः विचुम्ब्य सान्त्वयामास प्रबोधयामास । ३० ॥

ससंभ्रमेति । सम्भ्रमाः उद्वेगाः एव आवर्त्ताः जलभ्रमाः तैः सहितया समुत्कतया उत्कण्ठया हेतुना येनवाः नवीनाः प्रमोदपुराः आनन्दप्रवाहाः तैः प्रवाहिताः प्रेरिताः क्षितिपाः राजानः तदा मद्रमहीभृता दृढसेनेन पर्व्वतेनेतिच गम्यते अञ्चितं शोभितं महामहाम्भोनिधिभूतं उत्सवमहासमुद्रायितं पुरं मद्रनगरं आययुः आगतवन्तः । तदा भूलोकस्थराजानः सोद्वेगोत्कण्ठा हृष्टाश्च मद्र माययुः, रूपकं । ३१ ॥

धरेति । धरायाः भूमेः शिरोभूषणरत्नतां चूड़ामणित्वं गतैः प्राप्तैः भूनायकैरित्यर्थः देवनिभैः देवसदृशैः धराधिपै

विचित्रिता मद्रमहीन्द्र पालिता
मरावती सा नगरी बभौ तदा ।३२॥
पिपीलिका पंक्तिगताः श्रितां
यथा स्वयम्बराडम्बर सुन्दरं पुरं ।
वसन्त मुक्तस्य वनस्य दुर्गतिं
प्रदायदिगभ्यः क्षितिपाः समाययुः ।३३॥
विभेद्यलक्ष्यं द्रुपदात्मज व नो
मया ह्यहत्सं नसुता किमाप्स्यते ।

राजभिः सुसम्भृता पूर्णा विचित्रिता मण्डिता आश्चर्यान्विताच मद्रमहीन्द्रेण पालिता सा नगरी मद्रराजधानी अमरावती व्यस्तरूपकं तदा बभौ शुशुभे। उपमारूपकातिशयोक्त्य-लङ्काराः। ३२।

पिपीलिका इति। क्षितिपाः राजानः दिगभ्यः पूर्व्वादिभ्यः आशाभ्यः वसन्तमुक्तस्य वनस्य दुर्गतिं दुरवस्थां प्रदाय दत्वा दिशः त्यक्त्वेत्यर्थः पंक्तिगताः बद्धपङ्क्तयः पिपीलिकाः कीट-विशेषाः श्रितां यथा शर्करामिव स्वयम्बराडम्बरेण सुन्दरं मनोहरं पुरं मद्रनगरं समाययुः। निदर्शनोपमालङ्कारौ। ३३।

विभेद्येति। मया लक्ष्यं शरव्यं विभेद्य विद्ध्वा द्रुपदात्मजा द्रौपदीव ह्यहत्सेनसुता लक्ष्मणा न आप्स्यते किं प्राप्स्यते एव इतीव निश्चित्य विजयः अर्ज्जुनः मद्रं द्रुतं शीघ्रं ययौ गतवान्। उपेयस्य उपायलब्धस्य माधुर्य्यं मधुरता अधैर्य्यस्य अधीरतायाः पुनरुपायं प्रतीति शेषः सञ्जकं प्रापकमित्यर्थः। उपायलभ्य-

इतीवमद्रं विजयोद्धतं यया-
वुपेयमाधुर्य्यमधैर्य्यसर्जकं ।२४॥

सुयोधनो मानधनो धनञ्जयं
जिगीषुरत्युच्चशरव्यवेधनात्।
प्रियाधनं लिप्सुरगा स्वयम्बर-
स्थलं परस्पर्द्धनतत्परः खलः ।२५॥

समद्रवार्त्ता सुखिकर्णसन्निधिं
शरव्यवेधाय यियासुना तदा।
करेण चाक्ष्णा प्रहितो नु लक्ष्मणा-
दिदृक्षुणा कर्णद्रुयाय तत्पुरं ।२६॥

सौख्यं पुरुषं पुनरुपाये अधीरं यथा यथा प्रवर्त्तयतीतिभावः।
अर्थान्तरन्यासोऽलङ्कारः। २४॥

सुयोधन इति। मानधनः मानी सुयोधनः दुर्य्योधनः धनञ्जयं अर्जुनं जिगीषुः जेतुमिच्छुः अतः अत्युच्चस्य शरव्यस्य लक्ष्यस्य वेधनात् हेतोः प्रियारूपं धनं लिप्सुः लब्धुमिच्छुः सन् अर्जुनवदितिभावः स्वयम्वरस्थलं अगात् गतवान्। यतः खलः परस्य स्पर्द्धने स्पर्द्धायां तत्परः आसक्तः भवतीतिशेषः। अर्थान्तरन्यासोऽलङ्कारः। २५।

सइति। मद्रवार्त्तया स्वयम्वर सम्वादेन सुखिनः हृष्टस्य कर्णस्य अवणस्य सन्निधिं तदा शरव्यवेधनाय लक्ष्यं वेद्धुमित्यर्थः यियासुना यातुमिच्छुना मौर्वीप्रकर्षणप्रसङ्गेनेतिभावः। करेण हस्तेन च पुनः लक्ष्मणा दिदृक्षुणा लक्ष्मणादर्शनोत्सुकेन अक्ष्णा चक्षुषा प्रहितः प्रेरितः नु सः कर्णः अङ्गराजः तत्पुरं मद्रं द्रुयाय प्राप। अतिशयोक्तिरलङ्कारः। २६।

पराजितो भीष्मककन्यका हृतौ
निशम्य माद्रीं हरिदत्तमानसां ।
बलाद्धृतुं शिशुपाल आययौ
त्यजन्ति कालं न मनस्विनः कृतेः ॥२७॥
हराद्वरप्राप्तिविमानमाश्रयन्
प्रकामगं वृष्णिविभीषणं तदा ।
विदर्भजाया हरणे पराजयं
स्मरन् क्रुधा मद्रमियाय सौभपः ॥२८॥
द्रुमाभिधात्किंपुरुषाद्धनुर्महत्
प्रपद्य माहेन्द्रमतीव दर्पितः ।

पराजित इति । भीष्मक-कन्यका हृतौ रुक्मिणीहरणे पराजितः परास्तः शिशुपालः चैद्यः माद्रीं लक्ष्मणां हरिदत्तमानसां कृष्णासक्तचित्तां निशम्य श्रुत्वा बलाद्धर्तुं बलात्कारेण हर्तुं कृष्णवैरशोधनार्थमितिभावः आययौ आगतवान् मद्रमितिशेषः हि मनस्विनः कृतेः कार्य्यस्य कालं समुचितमित्यर्थः नत्यजन्ति । उचितसमय एव कार्य्यं कुर्व्वन्तीतिभावः । अर्थान्तरन्यासोऽलङ्कारः । २७ ॥

हरादिति । हरात् शिवात् वरेण अनुग्रहेण प्राप्तं प्रकामगं स्वेच्छागामिनं वृष्णीनां यादवानां विभीषणं भयङ्करं शिवप्रभावेन दुर्द्धर्षत्वात् तस्येतिभावः विमानं व्योमयानं आश्रयन् आरोहन् सौभपः शाल्वः विदर्भजायाः रुक्मिण्याः हरणे पराजयं यादवकृतमित्यर्थः स्मरन्क्रुधा क्रोधेन मद्रं इयाय प्राप । २८ ।

द्रुमेति । रुक्मी भोजकटेश्वरः द्रुमाभिधात् द्रुमनामकात् किं पुरुषात् महत् विपुलं माहेन्द्रं तदाख्यं धनुः प्रपद्य प्राप्य

इयाय रुक्मी ननु लक्ष्मणाशया
लघुः समुद्रिक्त तरोऽल्पसाधनैः ।३९॥
परे जरासन्धमुखाः क्षितिक्षितो
ययु द्रुतं मद्र महीन्द्र पत्तनं ।
न शौर्य्य शुल्कां कमनीय कन्यकां
पराक्रमी कोऽप्यनुधावितुं यसेत् ।४०॥
निबद्धहृन्मद्र नृपात्मजा गुणै
र्मनोभवा देशकशा प्रचोदितः ।

भतीवदर्पितः। "यः किं पुरुषसिंहस्य गन्धमादनवासिनः, शिष्यः कृत्स्नं धनुर्वेदं चतुष्पादमवाप्तवान्। यो माहेन्द्रधनुर्लेभे तुल्यं गाण्डीवतेजसा, द्रुमात् रुक्मी महातेजा विजयं प्रत्यपद्यत" इतिच महाभारतोद्योग पर्व्वणि द्रष्टव्यं। लक्ष्मणाशया मद्रं इयाय जगाम। लघुः अल्पस्वभावोजनः अल्पसाधनैः समुद्रिक्त तरः अतिगर्व्वित भवतीतिशेषः। अर्थान्तरन्यासोऽलङ्कारः ।३९।

परइति। परे इतरे जरासन्धमुखाः मागधप्रभृतयः क्षितिक्षितः राजानः मद्रमहीन्द्रस्य शल्यस्य पत्तनं पुरं द्रुतं शीघ्रं ययुः प्रापुः शौर्य्यं शूरत्वमेव शुल्कं मूल्यं यस्यास्तां कमनीयकन्यकां अनुधावितुं अनुगन्तुं कोऽपि पराक्रमी न यसेत् यतेत सर्वोऽपि यतेत इत्यर्थः। काव्यलिङ्गालङ्कारः ।४०।

निबद्धेति। मद्रनृपात्मजायाः लक्ष्मणायाः गुणैः सौन्दर्य्या दिभिरेव रज्जुभिः निबद्धं आकृष्टं बद्धं च हृत् चित्तं वक्षश्च यस्य सः मनोभवादेशः कामाज्ञैव कशा अश्वताडनी। अश्वादिः

सद्योमयोषांशुकतस्करो ह्यः
समंमनोभिश्च हरन् पुरी भुवां।
विहाय ता अर्द्धपथे भयादिव
द्रुतं विदूरं हरिभिर्हरि र्ययौ ॥४६॥
भगीरथं देवनदी प्रवाहवत्
सुपर्वसेना शिखिवाहनं यथा।
बलं बलाढ्यं चतुरङ्गकं बलं
तदा प्रयान्तं चपलं समन्वगत् ॥४७॥

सद्यइति। घोषयोषाणां गोपस्त्रीणां अंशुकतस्करः वस्त्र चौरः सः हरिः श्रीकृष्णः पुरीभुवां पुरस्त्रीणां मनोभिः चित्तैः समं ह्यः चतुंषिहरन् आकर्षन् अर्द्धपथे अर्द्धमार्गे ताः स्त्रीः भयादिव विहायत्यक्त्वा चोरितद्रव्यमिवेत्यर्थः। पुरस्त्रिभि रदृश्यमान इतिभावः हरिभिः घोटकैः द्रुतं शीघ्रं विदूरं अतिदूरं ययौ गतवान्। उत्प्रेक्षालङ्कारः। ४६ ॥

भगीरथ मिति। भगीरथं तन्नामानं राजानं देवनद्याः गङ्गायाः प्रवाहवत् स्रोतइव सुपर्व्वसेना देवसेना शिखीवाहनं यथा कार्त्तिकेय मिवचतुरङ्गकं हस्त्यश्वरथपदातिकं बलं सैन्यं कर्त्तृ बलाढ्यं सबलं तदा प्रयान्तं गच्छन्तं भद्रमितिशेषः। बलं बलदेवं चपलं शीघ्रं समन्वगात् अनुजगाम। मालोपमालङ्कारः। । ४७ ।

तदोदितायां यदुवाहिनीगतौ
सुरेन्द्र सर्पेन्द्र सहस्ररश्मयः ।
अवापुरुद्भ्रान्ति चलत्व लुप्तताः
दिशांगजा श्चाचलतां प्रपेदिरे ।४८॥
सबृंहित ह्रेषित नेमिनिस्वनै
र्जनाननोत्थै र्ध्वनिभिश्च देहिनः ।
रथाङ्गधारा खुरपाद खोदित
क्षमारजोभि र्बधिरान्धतामगुः ।४९॥

तदेति । तदायदुवाहिनिनां यादवसेनानां गतौ गमने उदितायां जातायां सत्यां सुरेन्द्रः शक्रः च सर्पेन्द्रः शेषः सहस्ररश्मिः सूर्य्यश्च ते यथाक्रमं उद्भ्रान्तिं मां जयेदितिभयेनेतिभावः । चलत्वं अतिभारेण चञ्चलत्वमितिभावः । लुप्ततां अदृश्यत्वं च धूलिभिरितिभावः । अवापुः प्रापुः । च पुनः दिशांगजाः अचलतां निश्चलत्वं आश्चर्य्यजनितस्तम्भेनेतिभावः प्रपेदिरे प्रापुः । यथासंख्यातिशयोक्त्यलङ्कारो । ४८ ।

सबृंहितेति । देहिनः प्राणिनः बृंहितानि गजगर्जितानि ह्रेषितानि अश्वध्वनयश्च नेमिनिस्वनाः रथचक्रशब्दाश्च तैः सहवर्त्तमानैः जनाननोत्थैःलोकमुखनिःसृतैः ध्वनिभिः शब्दैः च पुनः रथाङ्गधाराभिः नेमिभिः खुरैः शफैः अश्वादीनामितिभावः । पादैः चरणैः मनुष्यादीनामितिभावः । खोदितायाः क्षमायाः भूमेः रजोभिः धूलिभिः क्रमात् बधिरान्धतां बधिरत्वं शब्दाग्राहकत्वं अन्धत्वं दृग्व्यापारशून्यत्वं च आगुः प्रापुः । यथासंख्यातिशयोक्त्यलङ्कारो । ४९ ।

विशङ्कमाना पृतनोत्थ धूलिभिः
सरित्पते रोध ममर्त्य निम्नगा ।
तदाकिमात्तयाँ कलुषीकृता भवत्
यतः सतीरीतिरियं नु शाश्वती ।५०॥
वलाज्ञया वद्धतरोवलोदधिः
सवेलयेभतिमिङ्गिलाकुलः ।
रजोजलः केतन मीन संकुलो
बभौ तुरङ्गालि तरङ्ग सङ्गतः ।५१॥

विशङ्कमानेति । तदा पृतनोत्थधूलिभिः सैन्यरजोभिः सरित्पतेः समुद्रस्य रोधं अवरोधं विशङ्कमाना उत्प्रेक्षमाणा अमर्त्यनिम्नगा स्वर्गङ्गा आर्त्या स्वपतिपराभवजनितयेत्यर्थः । कलुषीकृता आविला अभवत् किं । यतः हेतोः इयं इष्टश्री पति दुःखास्यानुरूपा सतीना साध्वीनां रीतिः मर्य्यादा शाश्वती शश्वच्छिन्ना अस्तीतिशेषः । उत्प्रेक्षातिशयोक्त्यर्थान्तर-न्यासालङ्काराः । ५० ॥

वलाज्ञयेति । वेलया कूलेनेव वलस्य वलदेवस्य आज्ञया आवद्धतरः संनद्धः निरुद्धश्च । पुनः इभाः हस्तिनः तिमिङ्गिलाः जलचरविशेषाः इव तैः आकुलः व्याप्तः रजांसि जलानीव यस्य सः केतनानि ध्वजाः मीनामत्स्याः इव तैः संकुलः पूर्णः तुरङ्गालयः अश्वपंक्तयः तरङ्गाः लहर्य्य इवतैः सङ्गतः सः यादवीयः वलां [illegible] उदधिः समुद्रः इव बभौ शुशुभे । रूपकालङ्कारः । ५१ ॥

तरस्वती यादव वाहिनी महा-
सरस्वती शस्त्रभुजङ्ग भीषणा।
रसाम्बुधिं सद्गुण रत्नपूरितं
तदाप मद्रोपवनस्थितं हरिं ॥५२॥

पुरे बृहत्सेन नृपो निवेशय-
न्निवेशनेषूत्तमभोग्यवस्तुषु।
स लक्ष्मणाशारसना नियन्त्रिता-
न्नराधिनाथान् विनयैरपूजयत् ॥५३॥

तरस्वतीति। तरस्वती वेगवती "रंहः तरसीतुरयः स्यदइत्यमरः। शस्त्राण्यायुधानि एव भुजङ्गाः सर्पाः तैः भीषणा भयङ्करी यादववाहिनी यदुसेना एव महासरस्वती महानदी कर्त्री सद्गुणा एव रत्नानि तैः पूरितं पूर्णं रसानां शृङ्गारादीनां अम्बुधिः समुद्रभूतः तं तदा मद्रोपवनस्थितं मद्र नगर वाह्योद्यानवर्त्तिनं हरिं आप प्राप रूपकं। यादवसेना मद्र वाह्योद्यानवर्त्तिनं कृष्णं प्राप इत्यर्थः। ५२॥

पुरइति। सः बृहत्सेननृपः मद्रेश्वरः पुरे स्वनगरे उत्तमानि भोग्यवस्तूनियेषु तेषु निवेशनेषु निवासालयेषु लक्ष्मणायां या आशा तृष्णासैव रसना रज्जुः तया समाकृतान् आकृष्टान्। नराधिनाथान् राज्ञः विनयैः शिष्टाचारैः अपूजयेत् पूजयामास। रूपकं। ५३।

अधोक्षजा लोकन काङ्क्ष चक्षुषा,
स मद्रभूपो गलहस्तितो द्रुतं ।
पुरोपकण्ठोपवनस्थ मच्युतं
बलेन प्रत्युद्गतवान् गतक्लमः । ५४॥

तमर्घ्य मर्घादिकया सपर्यया
स मद्रनाथः सबलं समर्च्चयन् ।
समन्वयं धन्यमवैज्जनुश्च तत्
विना न पुण्यै र्घटतेतदर्च्चना ।५५॥

अधोक्षजेति। अधोक्षजस्य श्रीकृष्णस्य आलोकनं दर्शनं काङ्क्षते इति तथोक्तेन चक्षुषा नेत्रेण गलहस्तितः प्रेरितः जनित हरिदर्शनोत्कण्ठः इत्यर्थः मद्रभूपः गतक्लम सन् क्लान्तिरहितः हरिवार्त्तयेतिशेषः। पूरोपकण्ठोपवनस्थं नगर-वाह्योद्यानावर्त्तिनं अच्युतं श्रीकृष्णं बलेन चतुरङ्गेनसह अथवा बलेन बलदेवेनसहस्थितं द्रुतं शीघ्रं प्रत्युद्गतवान् प्रत्युज्जगाम, अतिशयोक्तिः । ५४ ॥

तमिति। सः मद्रनाथः बृहत्सेनः अर्घादिकया सपर्य्यया पूजया अर्घ्यं सबलं बलदेवसहितं तं श्रीकृष्णं समर्च्चयन् पूजयन् स्वं स्वकीयं अन्वयं वंशं तत् स्वानुभूतं जनुः जन्म च धन्यं प्रशंस्यं अवैत् अमानीत्। हि तयोः श्रीरामकृष्णयोः अर्च्चना पूजा पूण्यैः सुकृतैः विना न घटते नसंगच्छते। संचितपूण्यमन्तरेण श्रीकृष्णसेवादुर्लभेत्यर्थः। अर्थान्तरन्यासालङ्कारः। ५५ ॥

तमेव वृन्दारक वृन्दवन्दिता
वनिन्द्यमद्रेन्द्र मुपेन्द्र सौरिणौ ।
द्रुमावभूता मभिवन्द्य नन्दितौ
सुभक्त शिक्षा व्रतसाधना वशात् ॥५६॥
तदासुरद्विट् बलभद्र मद्रपाः
क्रतौ च वेदाद्रुववाग्नयस्त्रयः ।
समेत्य तत्राधिकरोचिषो दधु
रमेशचण्डीश विरिञ्चि चारुतां ॥५७॥
क्रमात्पुरीं कान्तिभरैः प्रदीप्य ते
मुरारि संकर्षण मद्रभुभुजः ।

तमिति । वृन्दारक वृन्दवन्दितौ देवसमूहस्तुतौ द्रुमौ उपेन्द्रशौरिणौ रामकृष्णौ अनिन्द्यं प्रशस्यं मद्रेन्द्रं मद्रेश्वरं विशेषण समासः तं वृहत्सेनं अभिवन्द्य प्रणम्य स्वभक्तानां या शिक्षा उपदेशः पूज्यपूजनादिरितिभावः । सैवव्रतं तस्य साधनावशात् सम्पादनाद्धेतोः नन्दितौ आनन्दितौ अभूतां अभवतां । ५६ ॥

तदेति । तदा मुरद्विट् श्रीकृष्णः बलभद्रः मद्रपः वृहत्सेनश्च एते क्रतौ यज्ञे त्रयःवेदाः ऋक्यजुसामानिः वा अग्नयः गार्हपत्या ह्वनीय दक्षिणाग्नयः इव तत्र समेत्य मिलित्वा अधिकरोचसः अतितेजीयांसः सन्तः रमेशस्य विष्णोः चण्डीशस्य शिवस्य विरिञ्चेः ब्राह्मणः च चारुतां शोभां दधुः प्रापुः । मालोपमा निदर्शनालङ्कारौ । ५७ ॥

क्रमादिति । नरेन्द्रवृन्दस्य राजसमूहस्य किरीटरत्नतां चूडामणित्वं उपेयिवांसः प्राप्तवन्तः ते मुरारिः श्रीकृष्णः

नरेन्द्र इन्दस्य किरीट रत्नता
मुपेयिवांसो दधु रध्वदीपतां ।५८॥
पुरीसुरीवक्षसि हारसंनिभे
महश्रिया चित्रतरोपनिष्करे ।
तदा धरित्रीमणयः प्रपेदिरे
न नायकत्वं किममी नरोत्तमाः ।५६॥
महीमघोना गुरुणा मुना विधुः
सशुक्र रूपेण वलेन सङ्गतः ।

सङ्कर्षणः वलरामः मद्रभूभुत्मद्रेश्वरश्च एते क्रमात् कान्तिभरैः प्रभापुञ्जैः पुरीं मद्रराजधानीं प्रदीप्य दीपयित्वा अध्वनः मार्गस्य दीपतां प्रदीपभावं दधुः प्रापुः । निदर्शनापरिणामालङ्कारौ । ५८ ॥

पुरीति। तदा धरित्रीमणयः भूमौ रत्नभूताः अमी नरोत्तमाः पुरुषश्रेष्ठाः त्रयः श्रीकृष्णादयः पुरी नगरी सुरीदेवीव तस्याः वक्षसि हार संन्निभे मुक्तावली तुल्ये पुनः महश्रिया उत्सव शोभाया चित्रतरे विचित्रे उपनिष्करे पुरमार्गे घणाट पथः संसरणं तत्पुरा स्योपनिष्करमित्यमरः। नायकत्वं श्रेष्ठत्वं मध्यमणित्वं च न प्रपेदिरे किं आपुरेव। पुरमार्गगता बभूवुरितिभावः। उपमारूपक श्लेषनिदर्शनालङ्काराः। ५६ ॥

महीति। गुरुणा पूज्येन बृहस्पतिना च अमुनामहीमघोना भूमीन्द्रेण वृहत्सेनेन शुक्ररूपेण शुक्लवर्णेन शुक्रग्रहस्वरूपेण बलेन वलदेवेन च सङ्गतः सः विधुः कृष्णः चन्द्रश्च पुराङ्गनानां मद्रस्त्रीणां स्मितानि मन्दहासा एव कैरवाणि

पुराङ्गनानां स्मितकैरवार्चितो-
न्यषेवितन्नेत्रचकोर पंक्तिभिः ।६०॥
जनाजगु र्मद्रनृपात्मजा स्य चेत्
प्रियाष्टमी स्यात् कृतिनीति वक्ष्यते ।
विधेस्तताहृक् गुणरूप शिल्पिता-
न्यथा नुशोच्या भविता वृथाश्रमा ।६१॥
विचित्र वादित्र रवश्रुतो रितः
पुरे प्रविश्य प्रतिवेश्म संभ्रमः ।

कुमुदानीवमै अर्चितः सत्कृतः सन् तासां पुरस्त्रीणां नेत्राण्येव चकोराः पक्षिविशेषाः तेषां पंक्तिभिः समूहैः न्यषेवि निषेवितः इन्द्रतुल्येन वृहत्त्वेनेन बलदेवेन च सहितः श्रीकृष्णः गुरुशुक्र सङ्गतस्य चन्द्रस्य शोभां दधत् नगरस्त्रीभिः सस्मितं दृष्टइति भावः । श्लिष्टरूपकं । ६० ॥

जनाइति । जनाः दर्शकाः जगुः ऊचुः वक्ष्यमाणमित्यर्थः । मद्रनृपात्मजा लक्ष्मणा अस्य श्रीकृष्णस्य अष्टमी प्रिया महिषी-स्याच्चेत् भवेद्यदि तर्हि कृतिनी कृतकृत्या इति वक्ष्यते कथयिष्यते । "जनैरितिशेषः" च पुनः अन्यथा पक्षान्तरे विधेः दैवस्य तादृशां निरूपमानां गुणरूपाणां लक्ष्मणाश्रितानामित्यर्थः । शिल्पिता रचना वृथाश्रमा विफलप्रयासासती अनुशोच्या अनुशोचनार्हा भविता भविष्यति । इति । ६१ ॥

विचित्रेति । विचित्राणां वादित्राणां बाद्यानां येरवाः ध्वनयः तेषां श्रुत्या श्रवणेन इरितः प्रेरितः उत्पन्न इत्यर्थः । संभ्रमः

निवर्त्य कृत्येभ्य उपानयञ्जवा-
द्गवाक्षमार्गान्तिक मङ्गनागणं ।६२॥
दुकूलमेका परिधातु मुद्यता
निरुध्यनीवीमपि सव्यपाणिना ।
हरिं दिदृक्षुः कुचलाङ्गलिद्वयं
करेण दक्षेण दधत्युपागमत् ।६३॥
निलिम्पमाना तनवल्लरीं परा
धरालसच्चारु सुचेलकाञ्चला ।

उद्वेगः संभ्रमः त्वरया कालेभूषा स्थान विपर्ययः इति लक्षणालक्षित भावविशेषः । पुरे मद्रनगरे प्रतिवेस्म गृहे गृहे प्रविश्य अङ्गनागणं स्त्रीसमूहं कृत्येभ्यः गृहकार्येभ्यः निवर्त्य गवाक्षमार्गान्तिकं वातायनसमीपंजवात् शीघ्रं उपानयत् प्रवेशयामास । अतिशयोक्तिः । ६२ ॥

दुकूलमिति । दुकूलं वस्त्र परिधातुं उद्यता उद्युक्ता एका नायिका सव्यपाणिना वामहस्तेन नीवीं वस्त्रग्रन्थिं निरुध्यापि कुचलाङ्गलिद्वयं स्तननारीकेलफलद्वयं दक्षेण करेण दक्षिणहस्तेन दधती आच्छादयन्ती सती हरिं श्रीकृष्णं दिदृक्षुः द्रष्टुमिच्छुः उपागमत् गवाक्षसमीपमगमदित्यर्थः । ये देवादिदर्शनार्थं गच्छन्ति ते उपहारार्थं श्रीफलादिकं गृह्णन्तीतिभाव● रूपकं । ६३ ॥

निलिम्पमानेति । तनुवल्लरीं शरीरलतां निलिम्पमाना कुङ्कुमादिभिरितिशेषः । पराऽइतरा अङ्गनाधरायां भूमौ लसत् लुठितं चारुसुचेल,काञ्चलां वस्त्रप्रान्तं यस्याः सासती विलेपितुं

विवृत्य वामोरुमियाय सत्वरां
विलेपितुं नाम विलोकितुं हरिं ॥६४॥
प्रसाधिकाया श्चिकुरा नसंयतान्
विकृष्य काचित् स्फुटकज्जमण्डला ।
स्वयं कराभ्यां दधती विधुग्रहात्
दृशोर्जनुः सार्थयितु समाययौ ॥६५॥
कयाचि दुद्वर्त्तित कुङ्कुमैः स्तनिं
विमृष्य नाभी मभिदर्श्य सस्मितं ।
निजोदरं द्वारतटस्थया हरिं
निपीयदृग्भ्या मुदवर्त्ति पाणिना ॥६६॥

नामइत्यलोके वामोरु वामसक्थि विवृत्य प्रकटय्य हरिं विलोकितुं सत्वरा इयाय गवाक्षान्तिकमितिशेषः । ६४ ॥

प्रसाधिकायाइति । काचित् नायिका प्रसाधिकायाः प्रसाधनकर्त्त्र्याः असंयतान् अबद्धान् चिकुरान् केशान् विकृष्य स्वयं कराभ्यां हस्ताभ्यां दधतीधारयन्ती अतः स्फुटं कज्जमण्डलं यस्याः सा सती विधुग्रहात् कृष्णादर्शनात् हेतोः दृशोः जनुः चक्षुर्जन्म सार्थयितुं सफलयितुं समाययौ गतवती । ६५ ॥

कयाचिदिति । कयाचित् नायिकया उद्वर्त्तित कुङ्कुमैः स्वदेहोद्वर्त्तनोच्छिष्टैः कुङ्कुमैः स्तनिं मार्गं विमृष्यमार्गं कुङ्कुमाक्तं कृत्वेत्यर्थः । द्वारतटस्थया द्वारपार्श्ववर्त्तन्या सत्या हरिं श्रीकृष्णं दृग्भ्यां निपीय दृष्ट्वा सस्मितं नाभीं अभिदर्श्य दर्शयित्वा निजोदरं पाणिना उदवर्त्ति उद्वर्त्तितं । ६६ ॥

स्रजं सृजन्त्या हरि दर्शनोत्कया
कयापि ता मेव दधानया द्रुतं ।
अलिन्ददत्तैकपदेत्य माधवं
स्वयंवरीतुं यतयेव सम्बभे ।६७॥
कयापि दामोदर दर्शनोत्कया
विभूष्य कण्ठे रसनां नितम्बतः ।
ललन्तिकामङ्गद मंघ्रि पङ्कजे
करे च मञ्जीर मयायि सत्वरं ।६८॥
स्वनत्कराम्भोरुह भूषणं परा
श्रुतौ कनिष्ठां च निवेश्य कामिनी ।

स्रजमिति । स्रजं मालां सृजन्त्या गुम्फन्त्या हरिदर्शनोत्कया कृष्णदर्शनोत्सुकया कयापिनायिकया तां स्रजमेवदधानया धारयन्त्या द्रुतं शीघ्रं एत्य अलिन्दे प्रघाणे प्रघाण प्रघणालिन्दाइत्यमरः । दत्ता निहिता एका पत्पादः यया तया सत्या माधवं श्रीकृष्णं स्वयंवरीतुं यतया उद्युक्तया इव संबभे शुशुभे । उत्प्रेक्षा । ६७ ॥

कयपीति । दामोदर दर्शनोत्कया श्रीकृष्ण दर्शनोत्सुकया कयापिनायिकया कण्ठे गले रसनां कटिसूत्रं नितम्बतः श्रोणी ललन्तिकां हारविशेषं अंघ्रिपङ्कजे पादपद्मे अङ्गदं केयुरं करेचमञ्जीरं नूपुरं विभूष्य अलंकृत्य सत्वरं शीघ्रं अयायि गवाक्षान्तिकमितिशेषः । ६८ ॥

स्वनदिति । परा इतरा कामिनी स्वनत्कराम्भोरुहभूषणं सकंरकङ्कणध्वनि श्रुतौ कर्णे कनिष्ठां अङ्गुलीं निवेश्य उरोजमूलं

उरोजमूलं प्रकटय्य माधवं
विलोक्य कण्डूयन माचरद्भृशं ।६९॥
विदारितास्या विनिमीलितेक्षणा
नितम्बिनी सत्तृज जृम्भयेतरा ।
अवोधि ता मेव हरीक्षणोद्भवा-
मपूर्व्व नेत्रोत्सवविघ्न मात्मनः । ७०॥
कयापिकाप्यालपि देहउच्यते
तवेन्दुकान्तो मणिरन्यथा कथं ।
विधूदयात्स्वेद जलानि निर्भरं
ततोगलन्त्यत्र निरर्गलं सखि ।७१॥

स्तनमूलं प्रकटय्य माधवं श्रीकृष्णं विलोक्य भृशं कण्डूयनं आचरत् चकार । ६९ ॥

विदारितास्येति । इतरा नितम्बिनी कामिनी सत्तृजजृम्भया सात्त्विक जृम्भणेन विदारितास्या व्यात्तानना विनिमिलितेक्षणा मुद्रितलोचना सती हरीक्षणोद्भवां श्रीकृष्ण दर्शन जनितां तां जृम्भामेव आत्मनः स्वस्य अपूर्व्वस्य अभूत पूर्व्वस्य नेत्रोत्सवस्य नेत्रानन्दस्य कृष्णदर्शन जनितस्येत्यर्थः । विघ्नं अन्तरायं अवोधि ज्ञातवती । ७० ॥

कयापीति । कयापि नायिकया कापि नायिका आलपि कथिता वक्ष्यमाणमितिशेषः । हे सखि तवदेहः शरीरं इन्दुकान्तः मणिः उच्यते तर्क्यते । अन्यथा ते शरीरात् विधूदयात् कृष्णागमनात् चन्द्रोदयात् च स्वेदजलानि निर्भरं निरर्गलं कथं अत्र गलन्ति निर्गच्छन्ति । श्लेषमूलानुमानालङ्कारः । ७१ ॥

न कृष्णमेघोदय जातदर्पक
प्रभञ्जना कम्पित गात्रवल्लरी ।
किमालिलिङ्ग स्फुरदोष्ठ पल्लवा
वराङ्गना कापि सखीं समीपगां ।७२॥

विलोक्य कृष्णं नवनीरद द्युतिं
कृशोदरी कापि विदंशिताधरा ।
प्रभूतसीत्कार परा समुल्लसत्-
प्रतीक नीपप्रसवै रपूजयत् ।७३॥

दृगिन्द्रिय छिद्र विनिर्गतं मनो-
मधुव्रतं कापि हृषीक संगतं ।

नेति । कापि वराङ्गना कृष्णमेघोदयेन श्रीकृष्णाख्य घनाविर्भावेनजातः यः दर्पकः कन्दर्प एव प्रभञ्जनः वायुः तेन आकम्पिता गात्रवल्लरी शरीरयष्टिः यस्याः सा स्फुरदोष्ठपल्लवा सती समीपगां पार्श्ववर्त्तिनीं सखीं न आलिलिङ्ग किं आश्लिष्टवतीएव। रूपकं । ७२ ॥

विलोकेति । कापि कृशोदरी सुन्दरी नवनीरदद्युतिं नूतनमेघकान्तिं कृष्णं विलोक्य विदंशिताधरादष्टोष्ठपुटा प्रभूतशीत्कारपरा कृतशीत्कारा सती समुल्लसद्भिः पुलकितै-रित्यर्थः । प्रतीकैः अङ्गैः एव नीपप्रसवैः कदम्बपुष्पैः अपूजयत् पूजयामास रूपकं । ७३ ॥

दृगिति । कापि अवला दृगिन्द्रियमेव च्छिद्रं तेन विनिर्गतं वहिर्निःसृतं हृषीकैः इन्द्रियैःसङ्गतं सहितं मनःचित्तमेव मधुव्रतः

निवेश्य कृष्णांघ्रि सरोरुहेऽबला-
दधौ तनुं निश्चल तेजनायितां ।७४॥
इति नागरीगण दृगुत्पलार्च्चितः
शुभलाज पुष्पनिकरैः सुसत्कृतः ।
कलयन्नुलूलुनिनदामृतं हरिः
प्रविवेश पूर्व्वनियतं निवेशनं ।७५॥
मद्रेशो यादवीया मुचित मुपचरन्
वाहिनीं रामकृष्णौ ।
सुस्थौ सत्कृत्य कामं स्वभवनमगम
द्धर्ष वर्षैः परीतः ।

अमरः तं कृष्णांघ्रि सरोरुहे श्रीकृष्णपादपद्मे निवेश्य तनुं देहं निश्चलं यः तेजनः वेणुः तद्विवाचरितां स्तम्भितां सतीं दधौ धारयामास । शतपर्वा यवफलो वेणुमस्कर तेजनाइत्यमरः । रूपकं । ७४ ॥

इतीति । इति पूर्वोक्तरित्या नागरीगणस्य अङ्गनासमूहस्य दृगुत्पलैः नेत्रोत्पलैः अर्च्चितः पूजितः शुभलाजपुष्पनिकरैः सुसत्कृतः उलुलुनिनद एव अमृतं तत् कलयन् हरिः श्रीकृष्णः पूर्व्वनियतं प्रथमनिरूपितं निवेशनं निवासगृहं प्रविवेश । मञ्जुभाषीणि वृत्तं । रूपकं । ७५ ॥

मद्रेशइति । मद्रेशः वृहत्सेनः यादवीयां वाहिनीं सेनां उचितं उपचरन् रामकृष्णौ सुस्थौ कामं यथेष्टं सत्कृत्य हर्षवर्षैः आनन्दातिशयैः परीतः व्याप्तः सन् स्वभवनं स्वगृहमगमत् जगाम ।

चौणी चिह्नच लक्ष्यं स्वपणमधिगतां लक्ष्मणां
तत्रलक्ष्यं ।
सन्देहोर्म्यां भ्रमन्तीं स्फुरण मथ समाश्वासय-
द्वामदृष्टेः ।७६॥

योऽभूद्विष्णु रथस्य चित्ररचना दक्षस्तुर्स्यं कवेः
धीरः श्रीभुवनेश्वरः सुविदुषा मग्रस्य पुत्रोरथी॥
तस्य श्रीमति लक्ष्मणापरिणये काव्ये तृतीयः कृतौ।
सर्गो गुम्फित रुक्मिणी परिणयस्यागा द्दशामन्तिमां
।७७॥

---

अथ स्वपणं आत्मशुल्कभूतं लक्ष्यं मत्स्यं चौणीचिह्नितां राज्ञां लक्षैः समूहैः लक्ष्यं वेद्धं अधिगतां जानन्तीं .कर्त्तरिक्तः अतः सन्देहोर्म्यां संशयतरङ्गेण भ्रमन्तीं भ्रान्तां लक्ष्मणां वामदृष्टेः सव्यनयनस्य स्फुरणं समाश्वासयत् आश्वासयामास लक्ष्यवेध-नार्थं आगतान् राज्ञो वहून् विदित्वा संदिग्धचित्ता लक्ष्मणा वामाक्षिस्पन्देन सुस्थचित्ताभूदित्यर्थः। रूपकं। स्रग्धरावृत्तं।
। ७६ ॥

यइति। गुम्फितं रचितं रुक्मिणीपरिणयं तदाख्यं काव्यं श्री विश्वनाथ शर्म्मनामाङ्कितमिति यावत् येन तस्यकृतौ तृतीयः सर्गः अन्तिमां दशां अगात् समाप्त मित्यर्थः। ७७।

इति लक्ष्मणापरिणय व्याख्यायां तृतीयः सर्गः समाप्तः।





## चतुर्थः सर्गः ।



अथ भूपतिरत्न तेजसां विपणिः साधुपरीक्षणोचिता ।
समितिः शुशुभे वलव्ययै, रमणीकीर्त्तिमणि
क्रयार्थिभिः ।१॥
परितो बहुतोरणान्विता, रहिता स्तम्भगणै
स्तथान्तरा ।

अथेति । अथ भूपति रत्नानि राजश्रेष्ठा एव मणयः तेषां तेजसां पराक्रमाणां किरणानां च साधुपरीक्षणे सम्यक् परीक्षायां उचिता वलव्ययैः करणैः रमण्याः लक्ष्मणारूपायाः कीर्त्त्याःलक्षणविध जनितायाः एव मणेः क्रयं प्राप्तिं अर्थयन्तइति तथोक्तैः जनैः उपलक्षिता समितिः सभाविपणिः पण्यवीथिका विपणि पण्यवीथिका इत्यमरः । व्यस्तरूपकं । शुशुभे बभौ रूपकं । सर्गेऽस्मिन् प्रायोवियोगिनी वृत्तं । १ ॥

परित इति । परितः चतुःपार्श्वतः बहुभिः तोरणैः बहिर्द्वारैः अन्विता शोभिता तथा अन्तरामध्ये स्तम्भगणैः स्तम्भसमूहैः रहिता स्तम्भशून्यमध्या इत्यर्थः । तततायाः विस्तृतेःउच्छ्रितताया: उन्नतेश्च अवधिं सीमां गता अतिविस्तृता अतुन्नता सभा सभागृहं परं केवलं यन्त्रबलं शिल्पकौशलं प्रजगौ

ततनोच्छ्रितताबधिं गता, प्रजगौ यन्त्रबलं
परं सभा ।२॥

मणिक्लृप्तवितान विम्बिता, जनता चित्र-
विलोक चित्रतः।

निमिषै रहिता क्षणेक्षणा, गतनाकस्थ जन-
श्रियं दधौ ।३॥

परितो मणिभित्तिषु स्फुटं
प्रतिविम्बान् बहुशोवितन्वती।
निजमध्यगतै र्जनैः सभा
जगतीं व्याप्नबतीव तर्किता ।४॥

सूचयामास कारुकौशलात् अतुरुन्नता अतिविस्तृतापि स्तम्भ-शून्यमध्या आसीदित्यर्थः। काव्यलिङ्गातिशयोक्त्यलङ्कारौ ।२॥

मणीति। चित्रविलोक चित्रतः चित्रदर्शन जनित विस्मया हेतोः निमिषैरहिता निर्निमेषा जनता जनसमूहः सभागत इत्यर्थः। मणिभिः क्लृप्ते रचिते विताने उल्लोचे चन्द्रातपइत्यर्थः। बिम्बिता प्रतिविम्बिता क्षणे क्षणार्थं उत्सव दर्शनार्थं आगतानां नाकस्थजनानां स्वर्गीयाणां श्रियं शोभां दधौ धारयामास। उत्प्रेक्षा निदर्शने। ३॥

परित इति। परितः चतुःपार्श्वेषु मणिभित्तिषु मणिमय कुड्येषु बहुशः छायाप्रतिच्छायाक्रमेण बहुबारं प्रतिबिम्बान् वितन्वती प्रकाशयन्ती सभा आस्थानशाला निजमध्यगतैः जनैः कर्तृभिः जगतीं भूलोकं व्याप्नवती. व्याप्ते ब तर्किता अनुमिता अतिशयोक्त्युत्प्रेक्षे। ४॥

बहुवर्ण विचित्र पट्टिका
स्मृतविश्वोद्भव सर्व्व सत्क्रिया।
जनता हृदयान्यदात्तदा-
धिकचित्राय चिरं दृशोऽपि च। ५ ॥

बहुवर्ण मणीन्द्र मालिका
निचयै र्भित्तिशिरांसि लम्बिनैः।
विपरीत महेन्द्र कार्मुका
वलि शोभै र्विबभु र्भृशं तदा। ६ ॥

बहिति। बहुवर्णाभिः विचित्राभिः आश्चर्य्यजनकाभिः पट्टिकाभिः चित्रपट्टैः सभासज्जितैरित्यर्थः। हेतुभिः स्मृता स्मृतिपथारूढ़ा विश्वोद्भवाः त्रिजगत्सम्भूताः सर्व्वसत्क्रियाः गङ्गा-नयनप्रभृत्याप्रलयान्तकृत्यानि यस्याः सा जनता जनसमूहः हृदयानि अधिकचित्राय अतिविस्मयाय अपिच दृशः नेत्राणि अधिकचित्राय उत्कृष्टालेख्याय तदा अदात् ददौ। आश्चर्य्या-न्विताचित्रं ददर्श इतिभावः। श्लेषतुल्य योगितातिशयोक्त्या-लङ्कारः। ५ ॥

बहुवर्णेति। तदा भित्ति शिरांसि सभाकुड्याग्रभागाः लम्बितैः लम्बमानैः अतः विपरीतायाः विपर्य्यस्तायाः महेन्द्र-कार्म्मुकावल्याः। इन्द्रधनुः समूहस्य शोभेवशोभा येषान्तैः बहुवर्ण मणीन्द्रमालिकानियैः नानावर्णविशिष्ट रत्नमाला समूहैः भृशं विबभुः शुशुभिरे। अतिशयोक्तिः। ६ ॥

प्रतिविम्बित लोक वस्तुभिः
समिति व्योम मणीन्द्र गोलकैः।
कलितं किल कारणो दकं
परमेष्ट्यण्डगणै रिवाबभौ। ७॥
उदयत्कर दिग्गजो कर
प्रथितै धूपभरैः समाहृताः।
भ्रमराः कृतक प्रसूनगा
उपहासा स्पदतां सदस्यगुः। ८॥

प्रतिविम्बेति। प्रतिविम्बितानि लोकाः जनाः वस्तूनि पदार्थाः सभास्थितानि अन्यत्र भुवनस्थितानि येषुतैः मणीन्द्र गोलकैः गोलाकारमणिश्रेष्ठैः सूत्रलम्बितैरित्यर्थः। कलितं व्याप्तं समितिव्योम सभागृहाकाशः परमेष्ठ्यण्डगणैः ब्रह्माण्ड समूहैः कलितं कारणोदकमिव आवभौ शुशुभे। कारणोदकं ब्रह्माण्डकोटयो जल स्फोटकरूपेण वर्त्तन्ते इति पौराणिकी कथा श्रूयते। उपमा। ७॥

उदयदिति। सदसि सभायां उदयत्करैः उद्धतशुण्डैः दिग्गजोत्करैः प्रथितानि गृहीतानितैः दिग्व्याप्तैरित्यर्थः धूपभरैः धूपातिशयैः सत्कारार्थं रचितैरित्यर्थः। समाहृताः आकृष्टाः भ्रमराः कृतकप्रसूनगाः सभाशोभार्थं रचितेषु कृत्रिमपुष्पेषुः उपविष्टाः सन्तः उपहासास्पदतां उपहासस्थानतां अगुः प्रापुः। अतिशयोक्ति भ्रान्तिमदलङ्कारौ। ८।

फलपल्लव पुष्पकोरकान्
कृतकान् प्राकृतिकांश्च पश्यतां।
न भिदा द्वितयेषु तेष्वभू
ल्लवनोत्थ ग्लपनेक्षणावधि। ६ ॥

गणिका नटकाश्च वादकाः
प्रकृता यन्त्र चला स्तथापरे।
कुहकोद्भवि नोऽपिनो पृथक्
परिचेया जनविस्मयं दधुः ।१०॥

फलेति। कृतकान् कृत्रिमान् च प्राकृतिकान् स्वतःसिद्धान् सभाशोभार्थं सन्निवेशितानित्यर्थः। फलानि पल्लवाः च पुष्पाणि च कोरकान् मुकुलान् च पश्यतां अवलोकयतां जनानां लवनात् च्छेदनात् उत्थं जातं यत् ग्लपनं ग्लानिः प्राकृतिकानामिति शेषः। ईक्षणावधिदर्शनपर्य्यन्तं तेषु द्वितयेषु कृतकेषु प्राकृतिकेषु फलादिषु भिदाभेदः अयं कृत्रिमः अयं स्वभाविक इतिभेदः न अभूत च्छेदन जनित ग्लानिदर्शनावधि प्राकृतिकेषु कृत्रिमैः सह एकरूपतासीदित्यर्थः। शिल्पकौशलात् अतिशयोक्तिः।९॥

गणिका इति। प्रकृताः तथा यन्त्रेण कारुकौशलेन चलाः सव्यापाराः जड़ा इतिशेष। अपरे इतरे कुहकोद्भविनः कुहक सम्भूताः अपि गणिकाः बारमुख्याः नटकाः नटाश्च वादकाः वादनकारिणः नोपृथक्भिन्नत्वेन परिचेयाः परिचेतुं योग्याः नञर्थस्यनोशब्दस्य प्रादिसमासः। विभिन्नत्वेन अपरिचीयमानाः सन्तः जनानां विस्मयं आश्चर्य्यं दधुः। जनयामासुः। अतिशयोक्तिः।१०॥

फलकुट्मल पुष्प पल्लव
भ्रमरालंकृत गुल्मिनी गणाः।
कृतकादिविभिदे तथा विधा
दलिगत्या च सुकुण्डरोपितः ॥११॥
घनसार रजोभि रास्तृता
जलयन्त्रैश्च पनीर नीरदैः।
रुचिरा परमा सनाञ्चिता
समितिः साम्यमतीत्य संबभौ ॥१२॥

फलेति। अत्र सभागृहे सुकुण्डेषु रोपितः आरोपितः फलैः कुट्मलैः मुकुलैः पुष्पैः पल्लवैः भ्रमरैश्च अलंकृतः गुल्मिनी-गणाः मल्लिकादिलतिकासमूहः तथाविधात् पुष्पादिशोभितात् कुण्डरोपितात् कृतकात् कृत्रिमात् लतिकागुल्मिनीगणात् अलीनां भ्रमराणां गत्यागमनेन विभिदे भिन्नोबभूव प्राकृतिकेषु भ्रमराः भ्रमन्ति कृतकेतु भ्रमराः निश्चला भवन्तीति चिह्नेन पृथक् परिचित इत्यर्थः अतिशयोक्तिः। ११ ॥

घनसारेति। घनसाररजोभिः कर्पूरधूलिभिः आस्तृता व्याप्ता पनीरनीराणि सुगन्धजलानि ददतीनितयोक्तैः जलयन्त्रैः यन्त्र धाराधारैः रुचिरा मनोहरा परमासनै उत्कृष्टासनैः अञ्चिता शोभिता समितिः सभागृहं साम्यं तुलनां अतीत्य अतिक्रम्य निरूपमा सती संबभौ शुशुभे अतिशयोक्तिः। १२ ॥

निजभू रमणी विभूषणै

मणिपर्य्यङ्क ततिः क्षितीश्वरैः ।

अवरोध जनै र्दिदृक्षुभि

र्लघु हर्म्यालि रशोभि चान्यतः ।१३॥

नृपति प्रकरे यथा यथं

नियतेऽनेहसि मञ्च सञ्चयं ।

अथ भूषयति प्रवर्त्तिता

बहुभोग्यैः खलु सत्क्रियाभवत् । १४॥

निजेति । निजभुवां स्वभूमीनां एव रमणीनां अथवा निजभुवां स्वस्त्रीणां च बिभूषणैः अलङ्कार भूतैः क्षितीश्वरैः राजभिः मणिपर्य्यङ्कततिः मणिमयपर्य्यङ्कासमूहः अशोभि शोभयां चक्रे । च पुनः अन्यतः अन्यस्मिन् प्रदेशे दिदृक्षुभिः दर्शनेच्छुभिः सभाशोभाया इति भावः । अवरोधजनैः अन्तःपुर स्त्रीजनैः हर्म्यालिः सौधपंक्तिः लघु शीघ्रं अशोभि शोभिता रूपकं । १३ ॥

नृपतिप्रकर इति । अथ नियते निश्चिते अनेहसि काले कालोदिष्टोऽप्यनेहापिसमय इत्यमरः । नृपतिप्रकरे राजसमूहे मञ्चसंचयं पर्य्यङ्किकासमूहं यथायथं उचितप्रकारं भूषयति अलं कुर्व्वति सति आसनोपविष्टे सतीत्यर्थः । बहुभोग्यैः ताम्बूलचन्दनादिभिः बस्तुभिः सत्क्रिया सत्कारः अभवत् खलु सभास्थितानां अभ्यर्थना बभूबेत्यर्थः । १४ ॥

सदएतदलंकृतिः क्षितेः
सदसोभूषणा मासनानि च।
क्षितिपास्तदलंक्रिया नृपा-
भरणानां मणयः परं बभुः।१५॥
अथ मङ्गलगीति तस्करी
प्रविशन्ती समितौ श्रवोबिलैः
हृदय द्रविणानि पश्यता
महरत्तत्र महीक्षितां किल।१६॥

सदइति। एतत् सदः सभा समर्य्यापरिषद्गोष्ठी सभासमिति संसदः। आस्थानीक्लीवमास्थानं स्त्रीनपुंसकयोः सदइत्यमरः। क्षितेः भूमिः अलंकृतिः अलङ्कार भूतं च आसनानि पर्य्यङ्कादीनि सदसः सभायां भूषणं मण्डनभूतानि, क्षितिपाः राजानः तेषां आसनानां अलंक्रिया अलंकरणभूताः, नृपाणांयानि आभरणानि, कटक कुण्डलादीनि तेषां मणयः तत् खचित रत्नानि परं अधिकं बभुः शुशुभिरे। बभुरिति वचनपरिणा मेन सर्व्वत्र योज्यं सारोऽलंकारः। १५॥

अथेति। अथ अनन्तरं तत्र समितौ सभायां मङ्गल गीतिः शुभगानमेव तस्करी चौरस्त्री पश्यतां अवलोकयतां महीक्षितां राज्ञां श्रवोविलैः कर्णच्छिद्रैः प्रविशन्तो प्रविष्टा सती अन्तरित्यर्थः। हृदयानि मनांसि एव द्रविणानि धनानि अहरत् जहार। राज्ञां मनोहारिणी मङ्गलगीति रभूदित्यर्थः रूपकं। १६॥

युग्मकं ।

नटनाय ददुर्दृशो नृपा
इह केचिच्च सभा सुसज्जया ।
हृतचेतस एव विस्मयं
ययु रन्येऽद्भुतलक्ष्य दर्शनात् ।१७॥

अपरे कुहकैः प्रतारिता
इतरे यन्त्र चमत्कृता नृपाः ।
इति भूपति पंक्ति संस्थितौ
चतुरालि लपतिस्म मद्रजां ।१८॥

अथ युग्मकं । नटनायेति । इह नृपाः नटनाय नृत्याय दृशः नेत्राणि ददुः प्रेरयामासुः च केचित् सभा सुसज्जया सभाशोभया हृतचेतसः आकृष्टहृदयाः सन्तः अन्ये अपरे राजानः अद्भुतस्य विस्मयजनकस्य लक्ष्यस्य पणभूत शरव्य सदर्शनात् अवलोकनाद्धेतोः विस्मयं आश्चर्य्यं ययुः प्रापुः । अतिशयोक्तिः । १७ ॥

अपर इति । अपरे राजानः कुहकैः इन्द्रजालादिभिः प्रतारिताः वञ्चिताः इतरे अन्ये नृपाः यन्त्रैः कारुकौशलैः चमत्कृता वभूवुरितिशेषः । इति । एवं पूर्वोक्तरित्या भूपतिपंक्तीनां राजसमूहानां संस्थितौसत्यां अवस्थाने सति चतुराभावाभिज्ञा आलिः सखी मद्रजां लक्ष्मणां लपतिस्म कथयामास । वक्ष्यमाणमितिशेषः । १८ ॥

क्षितिपाः सखितावका धरा-
मृतपानेच्छव एत्य दुर्भिदं।
प्रसमीक्ष्य शरव्य मीनकं
सदसीमे स्थगिता वकादिव।१६॥

सखिपश्य विधाय संगतान्
स्ववधू वक्त्र सरोज मुद्रणां।
नृपचन्द्र मसः सदस्यमून्
हरितेजो मलिनान् सहस्रशः।२०॥

क्षितिपा इति। हे सखि तावकस्य त्वत्सम्बन्धिनः अधरामृतस्य यत्पानं आस्वादनं तदीच्छन्तीति तथोक्ताः भवल्लिप्सव इत्यर्थः। इमे पुरोवर्त्तिनः क्षितिपा राजानः एत्य आगत्य सद्मितिशेषः सदसि सभायां दुर्भिदं दुर्वेध्यं शरव्य मीनञ्च पणलक्ष्यभूत मत्स्यं प्रसमीक्ष्य दृष्ट्वा बकादिव स्थगिताः निश्चेष्टाः भवन्तीति शेषः "नैरश्यादितिभावः" रूपकोपमे। १६ ॥

सखीति। हे सखि स्ववधूनां निजस्त्रीणां वक्त्रसरोजानां मुद्रणां मालिन्यं विधाय कृत्वा सङ्गतान् उपस्थितान् अमून् पुरोवर्त्तिनः सहस्रशः नृपचन्द्रमसः राजचन्द्रान् सदसि सभायां हरितेजोभिः कृष्णप्रभावैरेव सूर्य्यकिरणैः मलिनान् विवर्णान् पश्य अवलोकय। रूपकं। २० ॥

सखि लक्ष्य कषोपले नृपा
न्निजतेजांसि परीक्षयिष्यतः।
प्रविलोकय प्राक् सुवर्णका
निह दुर्व्वर्णतया युतानिमान् ।२१॥

अभिमान धराग्रवर्त्तिनः
क्षितिपालौ मतल स्थितां स्वतः।
विदतोऽत्र सुयोधनस्य भा
न सभायां कथमीक्ष्यतां सखि ।२२॥

सखीति। प्राक् पूर्व्वं सुवर्णकान् उज्ज्वलवर्णान् सुवर्णा नीतिध्वनिः। इह लक्ष्ये शरव्ये एव कषोपलेनिकषग्रावणि निजतेजांसि स्वपराक्रमान् स्वदीप्तीश्च परीक्षयिष्यतः अतः दुर्व्वर्णतया मलिनवर्णत्वेन रजतत्वेन च युतान् युक्तान् इमान् पुरोवर्त्तिनः नृपान् प्रविलोकयपश्यरूपकं। दुर्व्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि, अत्र प्राक् पूर्व्वस्ययकारस्य प्रक्रुवेति विकल्पविधायक पिङ्गलसूत्रानुसारेण ह्रस्वत्वं। २१॥

अभिमानेति। हे सखि अत्र सभायां अभिमानः गर्व्व एव धरः पर्व्वतः तस्य अग्रवर्त्तिनः शिखरस्थितस्य गर्व्वपर्व्वतारूढस्य इत्यर्थः। क्षितिपालौं स्वतः स्वस्मात् अपेक्षयातिशेषः। मतल स्थितां अधोवर्त्तिनौं विदतः जानतः सुयोधनस्य धृतराष्ट्र पुत्रस्यभा शोभा कथं न दृश्यतां न दृश्यतां त्वयेतिशेषः दुर्य्योधनं पश्येत्यर्थः। रूपकं। २२॥

हरतोऽरिनृपश्रियो बलात्
खगदादूतिकया प्रयुक्तया।
मगधाधिपतेः समीक्ष्यता
मधुना लक्ष्य विभेदनोत्कता ॥२३॥
युग्मकं।

स्वगुणस्य लवं विशेषयन्
गुणयन् दोषततीं रतिस्वरं।
सुहृदैष विकत्थिनोद्धुरः
शिशुपालः करचालना परः ॥२४॥

हरतः प्रसभं च रुक्मिणीं
यदुनाथस्य मनोहरा मसौ।

हरत इति। हे सखि प्रयुक्तया प्रेरितया खगदा एव दूतिका तया करणेन अरिनृपश्रियः शत्रुराजलक्ष्मीः बलात्-हरतः राजमण्डलमवरुन्धत इत्यर्थः मगधाधिपतेः जरासन्धस्य मधुनाइदानीं लक्ष्यविभेदनोत्कता लक्ष्यवेधनार्थमुत्कण्ठा समीक्ष्यतां अनुमीयतामित्यर्थः लक्ष्यवेधनोत्कं जरासन्धं पश्येति भावः। रूपकं। २३ ॥

( युग्मकं ) स्वगुणस्येति। एषः पुरोवर्त्ति शिशुपालः चैद्यः स्वगुणस्यलवं लेशं विशेषयन् दोषततिं स्वदोषसमूहं रतिलवं मीषं गुणयन् गुणत्वेनापादयन् करचालनापरः भावाविष्कारणार्थं हस्तसंचालनतत्परः सुहृदा मित्रेण सह विकत्थनोद्धुरः आत्मश्लाघासक्तः भवतीतिशेषः। २४ ॥

हरत इति। विचिन्त्येतिवार्थेः असौ शिशुपालः रुक्मिणीं पात्नार्थेनिरूपितामित्यर्थः प्रसभं बलात्कारेणहरतः यदुनाथस्य

भवतीं निज जीवितेश्वरीं
प्रविधातुं प्रधनैरपीच्छति ।२५॥
अयिभात्यय मङ्गभूषणं,
सखि कर्णः समितौ दधत् स्फुरन् ।
सहजं निजमङ्गभूषणं,
कवचं कुण्डलयो र्द्वयं च सत् ।२६॥
व्यथितो हरिसत्कृतीच्छया-
विजय स्पर्द्धितया च सूतजः ।

यदुनाथस्य श्रीकृष्णस्य मनोहरां मनोहारिणीं कमनीया मित्यर्थः। भवतीं प्रधनैः युद्धैः अपि लक्ष्यवेधनाशक्ताविल्यर्थः निजजीवितेश्वरीं स्वप्राणेश्वरीं प्रविधातुं कर्त्तुं इच्छति युद्धेनापित्वां नेतुमिच्छतीत्यर्थः। काव्यलिङ्गमलङ्कारः। २५॥

अयीति। अयि सखि स्फुरत् देदीप्यमानं सहजं जन्मना सह प्राप्तं निजं स्वकीयं अङ्गभूषणं शरीरालङ्कारभूतं सत् उत्तमं कवचं कुण्डलयोः कर्णभूषणयोः द्वयं युगलं च दधत् धारयन् अङ्गस्य देशविशेषस्य भूषणं अलङ्कारभूतः तद्देशाधिप इत्यर्थः अयं हस्तनिर्द्दिष्टः कर्णः आधिरथिः समितौ सभायां भाति शोभते। २६॥

व्यथित इति। हे सखि हरेः श्रीकृष्णस्य सत्कृतिः सत्कारः तस्याः ईच्छया दर्शनेन व्यथितः दुःखित चित्तः च पुनः विजयेन अर्ज्जुनेन सहया स्पर्द्धिता स्पर्द्धा तया हेतुना लक्ष्यविवेधने शरव्यवेधने

सखिलक्ष्य विभेदनोत्सुको
भवदुत्थातनुना विभिद्यते ॥२७॥
हरिणा युधि कर्त्तितान् कचान्
स्थगयन् तन्वि शिखण्डकाकृतीन्।
मुकुटोज्ज्वल वेष्टन ग्रहा
दिहकृष्णो समितौ विराजते ॥२८॥
सखिहास शुचोरलं समां
मुखशोभां दधदेष कारुषं।

उत्सुकः उत्कण्ठितः, अर्ज्जुनः पाञ्चाल लक्ष्यमिवाहं एतत् भेत्स्यामीतिउत्कण्ठितः सूतजः कर्णः भवदुत्थेन भवद्धेतु केन अतनुना कन्दर्पेण विभिद्यते भीन्नोभवति भवद्विषयक कामाविष्ट चेता अयं लक्ष्यवेधने न पारयिष्यतीति हृदयं। २७॥

हरिणेति। हेतन्वि कृशाङ्गि युधि युद्धे रुक्मिणी हरण हेतुके इत्यर्थः। हरिणा श्रीकृष्णेन कर्त्तितान् अतः शिखण्ड काकृतीन् काकपक्षावस्थान् नवप्ररूढ़त्वादितिभावः। कचान् केशान् मुकुटेन किरीटेन उज्ज्वलं यद्वेष्टनं उष्णीषं तस्य ग्रहात् ग्रहणाद्धेतोः स्थगयन्नाच्छादयन् अपचिह्नत्वादिति भावः। विराजते। विशेषालङ्कारः। २८॥

सखीति। हे सखि हासशुचोः हसनक्रन्दनयोः अलं अत्यन्तं समां समानां सुखशोभां दधत् धारयन् दन्तुरत्वादिति भावः। कारुषं देशविशेषं दर्शनिशादर्शां अमावास्या रवाऽ वस्थां दुःखान्धकारमित्यर्थः। लघु शीघ्रं वहन् प्रापयन् तद्देश

लघु दर्शनिशादशां वहन्
समितौ तिष्ठति दन्तवक्रराट् ।२९॥
अयि कल्पित कौस्तुभादिका-
च्युतलक्ष्मा सखि वासुदेवराट् ।
इत एष चतुर्भुजोऽस्तुते
मधुवैरीक्षण कामपूरकः ।३०॥
मधुसूदन वेश धारणा
ल्लघुता मुंह्णतेस्म संसदि ।
मुख मस्य विहाय पृष्ठकं,
श्रयतेह्रौ रपिपौण्ड्र केशितुः ।३१॥

विहाय आगत इत्यर्थः। दन्तवक्त्रराट् दन्तवक्त्रनामा राजा समितौ सभायां तिष्ठति। निदर्शनातिशयोक्त्यलङ्कारौ। २९।

अयीति। अयिसखि कल्पितानि रचितानि कौस्तुभादिकानि कौस्तुभप्रभृतीनि अच्युतलक्ष्माणि विष्णुचिह्नानि येन सः चतुर्भुजः कल्पित बाहुद्वयेन भुजचतुष्टयधारीत्यर्थः। एषः वासुदेवराट् वासुदेवनामापौण्ड्रकोराजा इतः अस्मिन् प्रदेशे ते भवत्या मधुवैरीक्षण कामस्य श्रीविष्णु दर्शनाभिलाषस्य पूरकः अस्तु भवतु तं वासुदेवं वीक्ष्य विष्णुदर्शनसुखमनुभवतु इत्यर्थः। सपरिहासोक्तिरियं। ३०।

मधुसूदनेति। मधुसूदनवेशधारणात् विष्णुवेश स्वीकरणाद्धेतोः अमुं वासुदेवं लघुता लाघवं संसदि सभायां वृणुतेस्म अशिश्रयत् समासोक्तिः। अपिच ह्रीः लज्जा अस्यपौण्ड्रकेशितुः वासुदेवस्य मुखं वदनं विहाय पृष्ठकं पृष्ठदेशं श्रयते आश्रयते। ३१।

कदलीकुसुमान्तिमाकृति
दधता बद्ध कचोच्चयेननो ।
कथनावसरेंऽसचारिणा,
परिचीयेत किमुत्कलेश्वरः ।३२॥
युग्मकं ।

सुरभाषित कल्प भाषया
मुखरे पूर्व्व समुद्र सेविते ।
बहुरम्य पवित्र भूभृते
सुनदीमातृकता मुपागते ।३३॥

कदलीति । उत्कलेश्वरः उत्कलाधिपतिः कदलीकुसुमस्य या अन्तिमा शेषिका आकृतिः आकारः तां दधता धारयता कदलीपुष्प मध्यगत कलिकाकारेण कथनावसरे आलापकाले अंसचारिणा स्कन्धचारिणा शिरःकम्पनादितिभावः । बद्धेन संयमितेन कचोच्चयेन केशसमूहेन स्वजूटकेनेतियावत् न परिचीयेत किमु परिचीयेत एव भवत्येतिशेषः । सम्भावनायां लिङ् । निदर्शना । ।३२ ॥

युग्मेनाह । सुरेति । अरिभिरितिच । सुरभाषित कल्पया गीर्व्वाण वाणीतुल्यया विशुद्धयेत्यर्थः भाषया मातृभाषया मुखरे शब्दायमाने पूर्षे इत्यर्थः । उत्कलभाषायाः संस्कृतभाषा सौसादृश्यात् एवमुक्तं । पूर्व्वसमुद्रेण सेविते बहवः रम्याः मनोहराः पवित्राः पूताः याः भुवः एकाम्रकाननादयः भूभागाः ताभिः भृते पूर्षे सुनद्य एवमातरः यस्मिन् सः सुनदीमातृकः तस्य भाव स्तत्तातां उपागते प्राप्ते ।३३ ॥

अरिभिः सुचिरानवेक्षिते
विषये सर्व्वकलाढ्य उत्कले ।
प्रमदोषित एष पार्थिवो
भवदाशा सरिता प्रवाहितः ।३४॥

अयिलोकय नारिकेलजा-
सव मत्तः सखि बङ्ग नायकः ।
मदनाशुग लक्ष विक्षतो
मृदुदेहो वहु लक्ष्य मीक्षते ।३५॥

दयिता परिरम्भणे रणे
बहुसाहाय्य करीं भुजाटवीं ।

अरिभिः । शत्रुभिः सुचिरमनवेक्षिते अनवलोकिते पराक्रमशालित्वादितिभावः सर्व्वाभिः चतुः षष्ठिभिः कलाभि र्आढ्ये पूर्णे उत्कले विषये देशे निवृज्जनपदोदेशविषय इत्यमरः । प्रमदेन आनन्देन उषितः स्थितः एषः पार्थिवः राजा उत्कलेश्वरः भवत्यां या आशा लिप्सा सैव सरित् नदीतया प्रवाहितः प्रेरितः भवतीतिशेषः । उपमा स्वभावोक्ति रूपकालङ्काराः । ३४ ॥

अयीति । अयि सखि लोकय पश्य नारीकेलजासवेन नारीकेल मद्य पानेन मत्तः मृदुदेहः कोमलाङ्गोवङ्गनायकः वङ्गेश्वरः मदनाशुगलक्षेण कामवाण समूहेन विक्षतः विद्धः सन् भवदा सक्त इत्यर्थः । वहु बहुबारं लक्ष्यं पणशरव्यं ईक्षते पश्यति भवदा सक्तं लक्ष्यमवलोकयन्तं वङ्गेश्वरं पश्येत्यर्थः ।३५॥

दयितेति । हे सखि दयितापरिरम्भणे प्रियालिङ्गने च रणे युद्धे वहुसाहाय्यकरीं प्रभूत सहायां भुजाटवीं 'वहुसहस्र'

दधतं धृत शैव लक्षणां
सखि वाणं कुरु नेत्रकौतुकं ।३६॥
करयुग्मनिसृष्ट दातृता,
ममनो तृप्तिकरीति नन्दने।
शयपंक्ति मभीप्सत स्तपः-
फलभूतो बलिनो बले रयं ।३७॥
दितिजोऽदिति कुण्डले दधन्
नरको भूपतिरेष भूसुतः।
उदयास्तधरस्थपुष्पवद्रु-
चिरःकाल इव प्रदीप्यते ।३८॥

दधतं धारयन्तं धृतं शैवलक्षणं रुद्राक्षादि शिवचिह्नं येनतं वाणं बाणासुरं नेत्रकौतुकं कुरु पश्येत्यर्थः। ३६ ॥

करेति। करयुग्मेन हस्तद्वयेन निसृष्टा सम्पादिता दातृता दानं मम तृप्तिकरी सन्तोषदायिका न इति विचार्येत्यर्थः। बलेर्बहुदानशीलत्वादित्याशयः। नन्दने स्वपुत्रे शयपंक्तिं हस्त समूहं अभीप्सतः अभिलषितवतः बलिन. बलेः वैरोचनेः तपसां तपस्यानां फलभूतः अयं वाणः भवतीतिशेषः। अतिशयोक्तिः। । ३७ ॥

दितिजइति। अदित्याः देवमातुः कुण्डलेदधत् धारयन् दितिजः दैत्य स्वभावः भूसुतः धरापुत्रः एषः नरकः भूपतिः तन्नामा राजा उदयास्तधरस्थौ पूर्व्वचरमपर्व्वतस्थितौ यौ पुष्पवन्तौ चन्द्रसूर्यौ एकयोक्त्या पुष्पवन्तौ प्रभाकर निशाकरा-वित्यमरः। ताभ्यां रुचिरः कालः सन्ध्याकाल इव प्रदीप्यते शोभते नरकासुरः अदित्याः कुण्डले आहृतवानिति पौराणिकी कथात्रानुसन्धेया। उपमा। ३८ ॥

अयि पीतककुद्मिजाधरा-
मृततुच्छीकृत नायिकान्तरः ।
शरदिन्दु मुखो दिदृक्षया
समितौ भात्यसिताम्बरो बलः ।३९॥

खर रूपधरं सबान्धवं
त्वमुना कृष्णसखेन धेनुकं ।
तरुषूत्क्षिपता स्तृता मही
सखिताले र्जलदै र्नभो यथा ।४०॥

छलगोपवपुः प्रलम्बको
विजितो नर्मणि संवहन्नमुं ।

अयीति । अयि सखि पीतेन आस्वादितेन ककुद्मिजायाः रेवत्याः अधरामृतेन हेतुना तुच्छीकृतं निकृष्टीकृतं अनादृतमिति यावत् नायिकान्तरं अन्यनायिका येन सः शरदिन्दु मुखः शरच्चन्द्रवदनः असिताम्बरः नीलाम्बरः बलः बलदेवः समितौ सभायां दिदृक्षया लक्ष्यवेधन दर्शनेच्छया न तु लक्ष्यवेधनार्थे मित्यर्थः, स्त्र्यन्तरपरिजिघृक्षाभावात् इतिभावः भाति शोभते । उपमालङ्कारः काव्यलिङ्गं च । ३९ ॥

खरेति । हे सखि खररूपधरं गर्द्दभरूपधारिणं सबान्धवं बन्धुसहितं धेनुकं तन्नामानमसुरं तरुषु तालवृक्षेषु उत्क्षिपता उत्पातयता अमुना बलदेवेन जलदैः मेघै र्नभो यथा आकाश इवताले स्तालफलै र्मही भूमी ततत्यै तिशेषः । स्तृता व्याप्ता ॥ बलदेवस्य धेनुकवध चरितं श्रीमद्भागवतेद्रष्टव्यं । उपमा ।४०॥

छलेति । छलेन कापटेन गोपवपुः गोपालदेहधारी कनकाढ्यः सुवर्णालंकृतः प्रलम्बकः तन्नामा असुरः नर्मणि

सतड़िन् घन सद्विधु प्रभो
कनकाढ्योऽनुमितोऽमुनाहतः ॥४१॥
मरणोन्मुख मादिशे न्मृड़ो
मनुजं यत्र सुतारकं मनुं।
शिवशूल शिखाश्रयास्य सा
सखिकाशी बसति मंहीशितुः ॥४२॥
विमलोत्तरवाही जाह्नवी-
सलिलादर्श फलन्निजाकृतिः।

बालक्रिड़ायां विजितः परास्तः बलदेवपर्चीयैरितिशेषः। अतः अमुं वलं संवहन् निरूपितस्थानपर्य्यन्त मुद्वहन् अतः सतड़ित्घने विदुग्रत्सहिते मेघेसन् तन्निकटे वर्त्तमानः यः विधुः चन्द्रः तत्प्रभः तत्सदृशः सन् अमुनास्कन्धारूढ़ेन वलेन हतः वद्धः मुष्टिपातेनेतिशेषः। अत्र प्रलम्बस्य मेघेन सुवर्णालङ्काराणां तड़िता प्रलम्बास्कन्धारूढ़ बलदेवस्य विधुनासादृशं तर्कणीयं। उपमा। प्रलम्बवध चरितं दशमस्कन्धे द्रष्टव्यं। ४१॥

मरणेति। यत्र यस्मिन् काशीप्रदेशे मृडः शिवः मरणोन्मुखं मुमूर्षुं मनुजं मनुष्यं सुतारकं मनुं तारकमन्त्रं आदिशेत् इति पुराणप्रसिद्धं। शिवस्य शूलशिखायां त्रिशूलाग्रभागेशेते इति तथोक्ता त्रिशूलाग्रस्थितेत्यर्थः। सा काशी वाराणसी अस्य हस्तनिर्दिष्टस्य महिशितुः राज्ञः वसतिः वासस्थानं भवतीति शेषः। ४२॥

विमलेति। यदीयया यत्सम्बन्धिन्या नृपशालिकया राज भवनेन उपकारिकयेति वा पाठः। सौधोऽस्त्री राजसद न

नृपशालिकया यदीयया
सततं साद्भुतया निरीक्ष्यते ।४३॥
अयमाश्रित विश्वनाथ पत्
सखि गङ्गाजलधौतपातकः ।
अवितश्चिर मन्नपूर्णया
हरिदेवान् मनुते न यादवान् ।४४॥
नयनेन दृढ़दलं नृपं
कृतसाकेत निकेतनं व्रज ।

सुपकार्य्योपकारिकेतित्यमरः । विमले उत्तरवाहिन्याः जाह्नव्याः गङ्गायाः सलिलेजले एव आदर्शे फलन्ती प्रतिबिम्बिता निजस्य आकृतिः आकारः कर्म्म साद्भुतया आश्चर्य्यान्वितया सत्या सततं निरीक्षते दृश्यते, गङ्गाकूलेऽस्य सौधमित्यर्थः रूपकं ।४३॥

अयमिति । हे सखि आश्रितौ विश्वनाथस्य काशीश्वरस्य पदौ पादौ येन सः गङ्गाजलेन धौतं क्षालितं पातकं पापं यस्य सः अन्नपूर्णया काश्यधिष्ठात्र्या देव्याचिरं अवितः रक्षितः अयं काशीश्वरः हरिः कृष्णः देवः पालकः येषां तान् यादवान् यदुवंशीयान् न मनुते नगणयतीत्यर्थः, काव्यलिङ्गं । ४४ ॥

नयनेनेति । कृतं साकेते अयोध्यायां निकेतनं गृहं येन तं अयोध्याधीश्वर मित्यर्थः दृढ़दलं तन्नामानं नृपं नयनेन चक्षुषा व्रज प्राप्नुहि पश्येत्यर्थः । पद्मवान्धवः सूर्य्यः यस्य राज्ञः कुलं

कुलपद्म वनादि कन्दतां
भजते यस्य च पद्म बान्धवः ।४५॥
कवि वाक्व्रततो यदन्वय-
चितिभृद्भूरि महोन्नतिं श्रिता ।
कविता विपिने प्रकाशय-
त्यमितं भाव सुपुष्प संचयं ।४६॥
सखिसागर गङ्गयोर्द्वयं
गमितं कीर्त्त्युपमानतां बुधैः ।

वंश एव पद्मवनं तस्य आदिकन्दतां मूल कारणतां वंशप्रवर्त्तकत्वमित्यर्थः । भजते प्राप्नोति सूर्य्यवंश सम्भूतोऽयं महाराज इत्यर्थः रूपकं । ४५ ॥

कवीति । कवीनां वाल्मिक्यादीनां वाक् वाण्येव व्रतती लता यस्य इन्द्रदलस्य अन्वयेवंशे ये चितिभृतः राजानः एव पर्व्वताः तेषां भूरिः प्रभुता या महोन्नतिः महोदय एव महोच्छ्रायः तां आश्रितासती कविताविपिने कवित्वकानने अमितं अपरिमितं भावाः अभिप्रायाः एव सुपुष्पाणि कुसुमानि तेषां संचयं समूहं प्रकाशयति एतद्वंशीय नृपगुण वर्णने नैव वाल्मिक्यादीनां कवित्वमिति तात्पर्य्यं । रूपकं । ४६ ॥

सखीति । हे सखि सागरगङ्गयोः पयोधिभागीरथ्योः द्वयं युगलं बुधैः पण्डितैः कर्त्तृभिः कीर्त्त्याः यशसः उपमानतां साद्दश्यं गमितं प्रापितं, पण्डिताः सागरं गङ्गां च कीर्त्त्या तुलयन्तीति भावः । परं किन्तु तत् इदं गङ्गासागरद्वयं अस्य इन्द्रदलस्य वंशस्य कुलस्य यशः पताकिका कीर्त्तिपताकास्वरूपा

परमस्य नृपस्य शोभते,
तदिदं वंश यशः पताकिका ।४७॥
शुचिता कुलगा किमुच्यते
नृपतेरस्य च भर्त्तृदारिके ।
अजपौत्र इहान्वये ध्रुवः
परमात्माजनि रामनामभाक् ।४८॥
कुलमेत्य तु चक्रवर्त्तिता,
नृपतेः प्राय इहास्य वर्त्तिता ।
बहवो मघवत्सहासना,
अपिवीरा बिबभुश्चतुर्विधाः ।४९॥

शोभते राजते । सगर पुत्रैः खोदितः सागरः भगीरथेनानीता गङ्गेति पुराण प्रसिद्धं । रूपकं । ४७ ॥

शुचितेति । हे भर्त्तृदारिके अस्य नृपतेः इहद्दलस्य कुलगा वंशगता शुचिता विशुद्धिः किं उच्यते, अकथनीयेत्यर्थः । इह अन्वयेवंशे अजोऽजननशीलोऽपि परमात्मा रामनामभाक् रामनामधारी अजस्य दशरथपितुः पौत्रः नप्तासन् अजनि जातः अतोविशुद्धतमं कुलमस्येतिभावः । ४८ ।

कुलमिति । तु पुनः इह जगति चक्रवर्त्तिता सार्व्वभौमत्वं अस्य नृपतेः इहद्दलस्य कुलं वंशं एत्य प्राप्यप्रायः बाहुल्येन वर्त्तिता स्थिता । प्रायः एतद्वंशीयाः चक्रवर्त्तिनः इतिभावः । अपिच बहवः अनेके मघवत्सहासनाः इन्द्रेण सह एकासनासीनाः चतुर्विधाः वीराः दयाधर्म्म दान युद्धविराः । बिबभुः शुशुभिरे अस्मिन् वंश इति शेषः । ४९ ।

तिलकं मृगनाभि कल्पितं
धृतकाश्मीरजलेपनो दधत् ।
अयमिद्ध सुवर्ण वर्णभाक्
सखि काश्मीरपति र्विराजते ।५०॥

सखि धर्म्म मिवात्त विग्रहं
नृपमाराधय धर्म्मजं दृशा ।
रिपवः षडमुं भियेव नो
विजहू रक्तदृशं विलोक्य किं ।५१॥

तिलकमिति । हे सखि मृगनाभि कल्पितं कस्तूरीरचितं तिलकं दधत् धारयन् एतेन कस्तूरिका मृगवहुलोऽस्यदेश इति ध्वन्यते । धृतं काश्मीरजलेपनं येन सः कुङ्कुमानुलिप्त इत्यर्थः । अथ कुङ्कुमं, काश्मीरजन्माग्निशिखं वरं वाह्लीकपीतने, मृगनाभो मृगमदः कस्तूरी चेतिचामरः । इद्धस्य दीप्तस्य सुवर्णस्य वर्णं भजतीति तथोक्तः । अयं पुरो दृष्टः काश्मीर पतिः काश्मीरदेशेश्वरः बिराजते शोभते । निदर्शना । ५० ॥

सखीति । हे सखि आत्तविग्रहं देहधारिणं धर्ममिवस्थितं धर्मजं युधिष्ठिरं नृपं राजानं दृशा चक्षुषा आराधय पश्येत्यर्थः उत्प्रेक्षा । षट् रिपवः कामक्रोधादयः शत्रवः अमुंराजानं रक्तदृशं लोहितचक्षुषं विलोक्य दृष्ट्वा क्रुद्धं मत्वेत्यर्थः । भीयेव भयेनेव नो बिजहुः । न तत्यजुः किं तत्यजुरेव, उत्प्रेक्षा । युधिष्ठिरस्य रक्तचक्षुष्ट्वं अजातशत्रुत्वं च पुराण प्रसिद्धं ।५१॥

नृपति प्रकरे यथाऽयमयं
मुखपद्मेऽस्य सुदीर्घ नासिका।
लभते खलु सारतां यया
नुमितास्यापि च पाण्डवाग्रता ॥५२॥
अयमालि वृकोदरोयुवा
जगतीप्राणसुतो महाभुजः।
चतुरः सहजान् समातृका-
नवहत् पुष्प मिवाव्ययं च यः ॥५३॥

नृपतीति। हे आलि नृपतिप्रकरे राजसमूहे अयं यथा एष युधिष्ठिर इव अस्य युधिष्ठिरस्य मुखपद्मे वदनपङ्कजे सुदीर्घा उन्नता नासिका नासा सारतां उत्कर्षं लभते प्राप्नोति यया नासिकया अस्यापि राज्ञः पाण्डवाग्रता जेष्ठपाण्डवत्वं अनुमिता तर्किता। उपमा। युधिष्ठिरस्य उन्नत घोणत्वं सुलक्षणं महाभारते वर्णितं। ५२ ॥

अयमिति। हे आलि महाभुजः दीर्घबाहुः अयं पुरोदृष्टः युवा जगती प्राणसुतः वायुपुत्रः वृकोदरः भीमः दृश्यते इति शेषः। यः वृकोदरः समातृकान् कुन्तीसहितान् चतुरः सहजान् भ्रातॄन् पुष्पमिव अव्ययं अनायासं अवहत् धारयामास उपमा। जतुगृहदाहानन्तरं वनवासावसरे कान्तारेषु भीमः मातृसहितान् भ्रातॄनुद्दुह्य जगामेति महाभारते वर्णितमस्ति।
। ५३ ॥

रुचिरं यमुदीक्ष्य राक्षसी
निजसोदर्य्यवधं हिडिम्बिका।
अनपेक्ष्य चकार वल्लभं
सखि रागान्धतया वशीकृता ॥५४॥

वक मेष निहत्य भूसुरं
सुखयन् स्वोदरपूर्त्तिमाचरन्।
शुभमुत्तम सङ्गजं फलं
प्रथयन्नेड़ि किमेकचक्रया ॥५५॥

रुचिरेति। हे सखि यं भीमं रुचिरं मनोज्ञं प्रसमीच्य दृष्ट्वा रागेण अनुरागेण या अन्धता आन्ध्यं तया वशीकृता अधीना राक्षसी हिड़िम्बिका निजसोदर्य्यस्य स्वभ्रातुः हिड़िम्बासुरस्य वधं नाशं भीमकृत मितिभावः। अनपेच्य अगणयित्वा वल्लभं स्वामिनं चकार कृतवती। हिड़िम्बाचरितं महाभारते द्रष्टव्यं। काव्यलिङ्गं। ५४॥

वकमिति। सः भीमः वकं वकासुरं वारक्रमेण एकचक्रानगरवासिनां एकं एकं प्रत्यहं भक्षितवन्तं निहत्य विनाश्य भूसुरं ब्राह्मणं यस्यगृहे पाण्डवाः अवसन् तमित्यर्थः सुखयन् आनन्दयन् तस्य वारे स्वयं असुराहारार्थं स्वयं गच्छन्निति भावः। स्वस्य उदरपूर्त्तिं कुक्षिपूरणं आचरन् कुर्व्वन् शकटवाह्यैः वकोपहारभूतैः पिष्टकैरितिभावः। उत्तमस्य सज्जनस्य सङ्गात् जायते इति तथोक्तं शुभं मङ्गलकारं फलं प्रथयन् सज्जनसंसर्गात् शुभं फलं भवतीति प्रकटयन् एकचक्रया नगर्य्या तन्नगरवासिभिरित्यर्थः। न ऐड़ि किं ईड़ित एव। पर्य्यायालङ्कारः। वकासुर वधचरितं महाभारते द्रष्टव्यं। ५५॥

जननावसरेऽङ्ग सङ्गजात्
शतश्टङ्गाद्रि शिला विचूर्णनात्।
गुरुतां वपुषोऽस्य पश्यता
गुरुणाकारि न भीमनामकिं ॥५६॥
अरिकैतवतोगरं ग्रसन्
गतसत्त्वः सखि गाङ्गवारिणि।
निहित स्तललोकगः क्रमा
त्फणिदष्टोऽभव देष जीवितः ॥५७॥

जननेति। जननावसरे जन्मसमये अस्य अङ्गसङ्गजात् अङ्गसंसर्गजनितात् शतश्टङ्गाद्रेः शिलाविचूर्णनात् हेतोः अस्य वपुषः शरीरस्य गुरुतां पश्यता तर्कयता गुरुणापित्रा पाण्डुना भीम इति नाम आख्यान अकारि किं कृतमेव एतच्चरितमपि महाभारते द्रष्टव्यं काव्यलिङ्गं। ५६॥

अरीति। हे सखि अरीणांशत्रूणां दुर्य्योधनादीनां कैतवतः कपटात् गरं विषं ग्रसन् गतसंज्ञः विगतचेतनः अतः गाङ्गवारिणि गङ्गाजले निहितः निक्षिप्तः अतः क्रमात् तललोकगः पातालगतः एषः भीमः फणिभिः सर्पैः पातालस्थैरितिभावः। दष्टः सन् जीवितः उज्जीवितः अभवत् आसीत् विषमालङ्कारः। विषाक्तस्य सर्पदंशनेन विषमोचनादिति भावः। विषस्य विषमौषधमिति न्यायात्। चरितमेतत् महाभारते विस्तृतं वर्णितमस्ति। ५७॥

शिशुकेलिषु कन्दुकायितान्
धृतराष्ट्रात्मज मस्तकान् मिथः।
बहुधा परिघट्टयनसौ
द्विषतां द्वेषमवर्द्धयन्निजे ।५८॥

जगदप्रतिमौ सहासनौ
नरनारायण संज्ञकौ पुरा।
नवनीरद जित्वरद्युतौ
सखि कृष्णौ सुहृदौ विलोकय ।५९॥

अनयोः कृतलक्ष्यवेधनः
सखि कृष्णां ननु सव्यगोऽहरत्।

शिशुकेलिष्विति। असौ भीमः शिशुकेलिषु बालक्रीड़ासु कंदुकायितान् कन्दुकवदाचरितान् धृतराष्ट्रात्मजानां दुर्य्योधनादीनां मस्तकान् मिथः परस्परं बहुधा बहुवारं परिघट्टयन् ताड़यन् द्विषतां शत्रूणां द्वेषं वैरं निजे स्वस्मिन् अवर्द्धयत् वर्द्धयामास काव्यलिङ्गं। एतच्चरितमपि महाभारते द्रष्टव्यं।५८॥

जगदप्रतिमाविति। हे सखि जगत्सु अप्रतिमौ अनन्यसदृशौ सहासनौ एकासनासीनौ पुरा नरनारायणसंज्ञकौ नवनीरदजित्वरद्युतौ नवीनमेघ सवर्णौ सुहृदौ परस्परमित्रे कृष्णौ श्रीकृष्णार्जुनौ विलोकय पश्य।५९॥

अनयोरिति। हे सखि अनयोः श्रीकृष्णार्जुनयोः सव्यगः वामपार्श्ववर्त्ति युवा अर्जुनः कृतं लक्ष्यवेधनं येन सः सन् पाञ्चाल नगरे लक्ष्यवेधं कृत्वे त्यर्थः कृष्णां द्रौपदीं अहरत् ननु। दक्षिणः

भवतीं खलु दक्षिणो युवा,
मधुहा तद्वदिहाहरिष्यति ।६०॥
सखि मध्यमपाण्डवेन ते,
पतिमित्रेण पवित्र कीर्त्तिना ।
परिहास रसोऽमुना समं
भविता भाग्यतरेण भूपजे ? ।६१॥
शिखिनो भजतोऽग्निमन्दतां
सखि यौ श्वेतकि सत्रसर्पिषा ।
सुरवैद्यरुचौ स्म खाण्डवौषध-
दानात् कुरुता रुजात्ययं ।६२॥

तयोर्दक्षिणभागवर्त्ति युवा युवकः मधुहा श्रीकृष्णः इह तद्वत् अर्जुनः द्रौपदीमिव भवतीं आहरिष्यति खलु । ६० ॥

सखीति । हे सखि भूपजे राजसुते पवित्र कीर्त्तिना विशुद्ध यशसा ते पतिमित्रेण अमुना मध्यमपाण्डवेन अर्जुनेन समं ते परिहासरसः परिहासानुभवः भाग्यभरेण सुप्रभादृष्ट महिम्ना भविता भविष्यति । ६१ ॥

शिखिन इति । हे सखि सुरवैद्य रुचौ अश्विनीकुमार सदृशौ यौ श्रीकृष्णार्जुनौ श्वेतकेः तन्नाम्नः महाराजस्य सत्रे यज्ञे यत् सर्पिः घृतं तेन तद्भक्षणेनेत्यर्थः । अग्निमन्दतां उदराग्निमान्द्यं भजतः प्राप्नुवतः शिखिनः वह्नेः खाण्डवौषध-दानात् खाण्डववनस्थितौषध प्रदानात् रुजात्ययं अग्निमान्द्य रोगविनाशं कुरुतःस्म अकार्ष्टां । उपमा । खाण्डवदाह चरितं महाभारते द्रष्टव्यं । ६२ ॥

अधिगत्य तदा सुदर्शनं
सखि गाण्डीव मिमौ वरायुधे ।
अधिरुह्य च कौश केतनं
रथमिन्द्रस्य हतः स्म संवलं ।६३॥
सखि गौतम शाप मर्च्चय
न्मघवा नेत्र सहस्रमात्मजे ।
विनिवर्त्त्य जयन्ततोऽर्ज्जुने,
मुदमस्मिन्निदध त्समश्नुते ।६४॥

अधिगत्येति । हे सखि तदा खाण्डवदाहावसरे इमौ श्रीकृष्णार्ज्जुनौ सुदर्शनं तदाख्यं चक्रं गाण्डीवं तन्नामकं धनुश्च वरायुधे उत्कृष्ट प्रहरणे अधिगत्य प्राप्य वह्नेरिति भावः च पुनः कौशकेतनं कपिकेतनं रथं अधिरुह्य इन्द्रस्य सम्बलं वज्रादिकं हतः स्मः नाशयामासतुः । अत्र महाभारतीय चरित मनुसन्धेयं । ६३ ॥

सखीति । हे सखि मघवा इन्द्रः गौतमस्यमहर्षेः शापं चक्षु सहस्र दायिनं इतिभावः । अर्च्चयन् बहुमन्यमानः चक्षुर्द्वयेन अर्ज्जुनशोभा दर्शनस्यापर्य्याप्तत्वात् इतिभावः । नेत्रसहस्रं स्वकीयं जयन्ततः पाकशासनेः विनिवर्त्त्य प्रत्यावर्त्त्य तदपेक्षया अर्ज्जुने-वात्सल्यातिशयादिति भावः । आत्मजे पुत्रेऽस्मिन् अर्ज्जुने निदधत् निक्षिपन् सन् मुदं आनन्दं समश्नुते प्राप्नोति । व्यतिरेकः अतिशयोक्तिः । इन्द्रस्य प्रियपुत्रोऽयमिति भावः । ६४ ॥

जलकेलि रहस्य विघ्नतः
कुपितं चित्ररथं पराक्रमैः ।
परितोष्य सखित्वबन्धना-
द्वशगं शक्रसखं व्यधा दसौ ।६५॥
गुण वागुरया वशीकृतां
सखि भद्रां हरिणीदृशं बलात् ।
बलि यादव वृन्द दावतो
हरतानेन तृणीकृतो बलः ।६६॥

जलकेलीति । असौ अर्जुनः जलकेलिरहस्यस्य जलक्रीड़ा व्यापारस्य विघ्नतः अन्तरायात् हेतोः कुपितं क्रुद्धं चित्ररथं गन्धर्व्वराजं पराक्रमैः परितोष्य नन्दयित्वा इन्द्रसखं इन्द्रमित्रं एनं सखित्वं मित्रत्वमेव बन्धनं तस्मात् वशगं अधीनं व्यधात् विहितवान् । रूपकं । पुराकिल वनवासावसरे पाण्डवेषु रात्रौ गङ्गायां जलक्रीड़ासक्तस्य स्त्रीसहितस्य चित्ररथस्य अन्तराय भूतेषु सत्सु क्रुद्धोऽयं अर्जुनेन सह नियुध्य पराभूतः अनेनमैत्री मकरोदिति महाभारतीय कथात्रानुसन्धेया । ६५ ॥

गुणेति । हे सखि गुणाः सौन्दर्य्यादय एव वागुरावन्धनी तया वशीकृतां हरिणीदृशं मृगीनयनां भद्रां सुभद्रां कृष्णास्वसारं बलिनां बलवतां यादवानां वृन्दं समूहः एव दावः वनवह्निः तस्मात् हरता अपहरता युद्धेन यादवान् पराजित्येति भावः । अनेन अर्जुनेन बलः बलदेवः तृणीकृतः तुच्छीकृतः रूपकं । श्रीकृष्णामन्त्रणायार्जुनो निजासक्तां सुभद्रां युद्धेन बलदेवादीन् पराभूय अपजहारेति पौराणिकी वार्त्ता अनुसन्धेया । ६६ ॥

हरिचक्रमिवामराः पृथा
तनयाः कार्मुकमस्य विश्रुतं ।
अवलम्ब्य शयेशयं जग-
ज्जयमिच्छन्त इमेऽकुतोभयाः ।६७॥

चरणौ दधतोऽवराङ्कका-
न्नयता पञ्च वराप्सरोगतिं ।
सलिलाशयपञ्चकं नु किं
सखि तीर्थीकृतमस्ति नामुना । ६८॥

हरिचक्रमिति । अमराः देवाः हरिचक्रं सुदर्शनमिव इमे पृथातनयाः पाण्डवाः विश्रुतं प्रसिद्धं अस्य अर्जुनस्य कार्मुकं धनुः गाण्डीवं अवलम्ब्य आश्रित्य जगतां जयं विजयमेव इच्छन्तः अभिलषन्तः सन्तः अकुतोभयाः निर्भयाः भवन्तीति शेषः । उपमा । ६७ ।

चरणाविति । हे सखि चरणौ पादौ दधतः धारयतः स्नान समये भक्षणार्थं अर्जुन पादौ धारयतः पञ्च पञ्चसंख्यकान् अवराङ्ककान् कुम्भीरान् ग्राहोऽवहारोनक्रस्तुकुम्भीर इत्यमरः । वराप्सरसां उत्कृष्टस्वर्वेश्यानां गतिं दशां नयता प्रापयता अमुना अर्जुनेन तीर्थीकृतं पूण्यक्षेत्ररूपेण परिणतं सलिलाशयपञ्चकं पञ्चजलाशयादित्यर्थः । नास्ति किमु अस्त्येव वनवाससमये अर्जुनेन कुम्भीरान् नाशयित्वा जलाशय पञ्चकं तीर्थंकृतं अमुना वर्त्तते इति भावः । विषमालङ्कारः ।६८ ।

मणिपूर्व्व पुरेश्वितुः सुतां
परिणीयान्वयतन्तु मर्ज्जुनः।
छिदुरं द्रढ़यत्य सौ निजौ
रससम्पादनया स्म तस्य च ।६६॥

मदनानल दग्ध लज्जया
तललोकं सखि भोगि कन्यया।
गमितोय मपूजि नोत्कया-
किमुलप्या तनुरत्नदानतः। ७० ॥

मणीति। अर्जुनः मणिपूर्व्वपुरेशितुः मणिपुराधिपस्य सुतां कन्यां चित्राङ्गदां परिणीय उपयम्य निजौरसस्य निज पुत्रस्य सम्पादनया संस्थापनयाच्छिदुरं छिदशीलं अपुत्रिकत्वा-दितिभावः तस्यराज्ञः अन्वयतन्तुं वंशसन्तानं द्रढ़यतिस्म दृढ़ीकृत वान्। रूपकं। अर्जुनः मणिपुर राजपुत्रीं परिणीय बभ्रुवाहनं नाम पुत्र मुत्पाद्य मणिपुर राजवंशं दृढ़ीचकारेति पौराणिकी वार्त्तानु सन्धेया। ६६ ॥

मदनानलेति। हे सखि ! मदनानलेन कामाग्निना दग्धा लज्जा यस्या स्तया उत्कया उत्कण्ठितया भोगिकन्यया सर्प-कन्यया उलूप्या तदाख्यया तललोकं पातालं। गमितः प्रापितः अयं अर्जुनः तनुः स्वशरीर मेवरत्नं तस्य दानतः सम्भोगदानेनेत्यर्थः। न अपूजि किं पूजित एव। रूपकं। ७० ॥

भिषजौ रविजौ हविर्भुजां
गमितौयौरुचिरोपमानतां।
यमजौ वसतस्तदात्मजौ
नकुलोऽयं सहदेव एष च ।७१॥
परिरभ्य दृशान्तिमाविमौ
सरले पाण्डुसुतौ सुमञ्जुलौ।
अनियत्तामिदं तयोः परं
मनसा सेचनकत्व मुन्नय ।७२॥

भिषजामिति। रविजौ सूर्यपुत्रौ यौ हविर्भुजां देवानां भिषजौ वैद्यौ अश्विनीकुमारौ स्वर्वैद्यावश्विनीसुतावित्यमरः। रुचिराणां सुन्दरपुरुषाणां उपमानतां उपमानत्वं गमितौ प्रापितौ कविभिरितिशेषः। तयोः आत्मजौ पुत्रौ यमजौ युग्मजातौ अयं पुरोदृष्टः नकुलः एषः अग्रस्थितः सहदेवः च वसतः उपविशतः। अश्विनीकुमारपुत्रौ एतौ नकुलसहदेवौ तिष्ठत इतिभावः। ७१॥

परिरभ्येति। हे सरले सरलस्वभावे सुमञ्जुलौ सुन्दरौ इमौ पुरोवर्त्तिनौ अन्तिमौ कनिष्ठौ पाण्डुसुतौ नकुलसहदेवौ दृशा चक्षुषा परिरभ्य आलिङ्ग्य दृष्ट्वेत्यर्थः। नास्ति इयत्वं इयत् परिमाणं यस्य तत् अपरिमितमित्यर्थः। परं उत्कृष्टं तयोः नकुलसहदेवयोः इदं एतत् आसेचनकत्वं स्वसौन्दर्य्यहेतुकानन्ददायित्वं मनसाचित्तेन उन्नय अनुभव। तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनादित्यमरः। ७२।

सखि सात्यकिमुख्य यादवाः
समितौ भान्ति दिवीव निर्जराः।
ननु यद्गुण नाम कर्म्मणां
कथने मे रसनावसीदति।७३॥

सखिशाल्वमुख चितिचिता
मियतैकैकश एव भाषितुं।
समयेन सदः सदां वलं
मम नैषा मभिधान सञ्चयं।७४॥

सखीति। ननुसखि सात्यकिः मुख्यो येष ते यादवाः यदुवंशीयाः समितौ सभायां दिवि स्वर्गे निर्जराः देवा इव भान्ति शोभन्ते येषां यादवानां गुणाः सौन्दर्य्यादयः नामानि च कर्म्माणि कार्य्याणि विजयादीनि च तेषां कथने वर्णने मे मम रसना जिह्वा अवसीदति अवसन्नाभवति। तद्गुणादीनां प्रभूतत्वात् इतिभावः उपमातिशयोक्ती। ७३।

सखीति। हे सखि सदः सदां सभास्थितानां एषां शाल्वमुखानां शाल्वादीनां चिति चितां राज्ञां अभिधानसंचयं नामसमूहं इयता एतावता अल्पपरिमाणेनेत्यर्थः। समयेन कालेन एकैकशः प्रत्येकं भाषितुं कथयितुं मम बलं शक्तिः न अस्तीतिशेषः। केवलं नाम कथने समयोनास्ति किमुत गुणादि वर्णने इति भावः। उपमार्थापत्ती। ७४।

सदसः परिपूरका इमे
सखि दुःशासनमुख्यकौरवाः।
कलुषीकरवाणि नेदृशां
परितोक्त्या रसनां सुशंसिनीं ।७५॥
यमृते तव ताप माहितं
व्ययितुं व्ययिताभि र्जलाशयाः
रहिता नलिनीभि रासते
परितार्थाः स कथं न दृश्यते ।७६॥

सदस इति। हे सखि इमे पुरोवर्त्तिनः दुःशासन मुख्याः दुःशासनादयः कौरवाः धार्त्तराष्ट्राः सदसः सभायाः परिपूरकाः परिपूर्त्तिकारिणः नतु उत्कर्षविश्वाइत्यर्थः। 'ईदृशां एतादृशानां परितोक्त्या चरितवर्णनेन सुशंसिनीं सद्वर्णनकारिणीं रसनां मदीयामिति शेषः नकलुषीकरवाणि दूषयामि दुःशासनादीनां दुश्चरितत्वात् तद्वर्णनं नोचितमितिभावः। ७५।

यमिति। यं ऋतेविना यद्विरहेणेत्यर्थः। ऋतेयोगे द्वितीयापीतिद्वितीया। आहितं जातं तवभवत्याः तापं सन्तापं व्ययितुं निवारयितुं व्ययिताभिः म्लानताभिः नलिनीभिः पद्मिनीभिः रहिताः शून्याः जलाशयाः जलाधाराः परितार्थाः सार्थनामानः केवलं जलमात्रावशिष्टाः आसते वर्त्तन्ते सः श्रीकृष्णः कथं न दृश्यते दृश्यतामितिभावः भक्तिशयोक्तिः श्रीकृष्णं पश्येत्यर्थः। ७६।

(युग्मकं)

समुदेत्य विधुर्यदोः कुलो—
दयशैले ततकीर्त्ति दीधितिः।
रिपुचक्र भयङ्करोऽसतां
तमसा मेष विनाशकः सखि ।७७॥

भजदान्तर कैरवोत्करं
प्रविकाश्याचिचकोरतृप्तिदः।
गणयन्नृप तारकाकुलं
परिषद्व्योम्नि परं विराजते ।७८॥

(युग्मकं) समुदेत्येति। हे सखि एषः विधुः श्रीकृष्णः चन्द्रश्च यदोः राज्ञः कुलं वंश एव उदयशैलः पूर्व्वपर्व्वतः तस्मिन्समुदेत्य आविर्भूय तता व्याप्ता कीर्त्तयः यशांसि एव दिधितयः किरणाः यस्य सः रिपवः शत्रव एव चक्राः चक्रवाकाः तेषां भयङ्करः भयावहः असतां असज्जनानां तमसां अन्धकाराणां व्यस्त रूपकं विनाशकः। ७७।

भजदिति। भजतां भक्तानां आन्तराणि अन्तःकरणान्येव कैरवाणि कुमुदानि तेषां उत्करं समूहं प्रविकाश्य उल्लास्य अक्ष्णां चक्षुषां एव जनानां इति शेषः। चकोराणां तृप्तिदः आनन्द-दायकः एषः विधुरित्यत्र योज्यं परिषत् सभैवव्योम आकाशः तस्मिन् नृपाः अन्येराजान एव तारकाः नक्षत्राणि तेषां कुलं समूहं गणयन् ज्ञापयन् सन् परं अधिकं विराजते शोभते। रूपकं। ७८।

हरिरेषच पद्मिनीपति
र्जगतांपङ्कविशोषकः सखि ।
लघयन्नितराम् स्वतेजसा
पृथुतेजस्विन ईषदीक्ष्यतां ।७९ ॥
निगडैर्निरभेदि यामिकैः
शयितं बद्धकपाट शृङ्खलैः ।
स्खलितं फणिनातपत्रितं
जननेऽस्यार्कजयास्थलायितं । ८० ॥

हरिरिति । किंचेतिचार्थः हे सखि पद्मिनीनां तज्जातीयानां स्त्रीणां कमलिनीनां च पतिः जगतां पङ्कविशोषकः पापहारकः कर्दमशोषकश्च इतरान् अन्यान् पृथून् उत्कृष्टान् तेजस्विनः तेजीयसः मागधादीन् अन्यत्र वङ्गादीन् स्वतेजसा निजपराक्रमेण स्वकिरणेन च लघयन् लघूकुर्वन् एषः हरिः श्रीकृष्णः सूर्य्यश्च इषत् स्वल्पं ईक्ष्यतां दृश्यतां त्वयेतिशेषः । रूपकं । ७९ ॥

निगडैरिति ॥ अस्य श्रीकृष्णस्य जननेजन्मनि सति निगडैः लौहमयबन्धनैः वसुदेव गतैरितिशेषः ॥ निरभेदि निर्भिन्नं । यामिकैः प्रहरिभिः शयितं निद्रितं ॥ बद्धानि निबद्धानि यानि कपाटेषु शृङ्खलानि तैः स्खलितं शिथिलितं फणिना शेषदेवेन आतपत्रितं छत्रायितं ॥ अर्कजया यमुनया स्थलायितं स्थलवदाचरितं ॥ विषमोपमा पर्य्यायालङ्काराः ॥ चरितमेतत् दशमस्कन्धे द्रष्टव्यं श्रीकृष्ण जन्मसमये एतान्याश्चर्य्ये घटनान्यभवन्नितिभावः । ८० ॥

सखि नन्दसुतां बलिं ददत्
वसुदेवः किल कंस रक्षसे।
निभृतं भृतवानमुं व्रजे
त्वधुनापुत्रवतां धुरि स्थितः। ८१ ॥
जगतीं सकलां यशोदया
सखि जृम्भाविवृते मुखोदरे।
प्रसमीक्ष्य शिशो रमुष्य
संभ्रमितं संशयितं च विस्मितं ।८२॥
नवनीत हरो धृतोऽम्बया
सखि एष्टः कियदाहृतं त्विति।

सखीति। हेसखि वसुदेवः नन्दस्य व्रजेश्वरस्यसुतां कन्यां अम्बिकां कंसरक्षसे कंसराक्षसाय बलिं उपहारं ददत् ददानः सन्किलेति वार्त्तायां अमुं श्रीकृष्णं व्रजेघोषे निभृतं प्रच्छन्नं भृतवान् पालितवान् सन् अधुनातु पुत्रवतां पुत्रिणांधुरिअग्रे स्थितः वर्त्तते,कौशलेन श्रीकृष्णं वर्द्धयन् वसुदेवः पुत्रवतामग्रणीर्भवती तिभावः। चरितमेतत् दशमस्कन्धे द्रष्टव्यं। ८१॥

जगतीमिति। हेसखि यशोदया नन्दपत्न्या शिशोः बालस्य अमुष्य श्रीकृष्णस्य जृम्भया जृम्भणेन विवृते प्रकटिते मुखोदरे वदनमध्ये सकलां समग्रां जगतीं लोकंप्रसमीक्ष्य दृष्ट्वा संभ्रमितं किमेतत् इति सम्भ्रान्तं संशयितं एतत्सत्यं नवेति संदिग्धं च पुनः विस्मितं एतत् कथमिति विस्मितयाभावि क्रियादीपकं। ८२।

नवनीतेति। हेसखि नवनीतहरः नवनीतचौरः अयं श्रीकृष्णः धृतः कयाचित्गोप्या बद्धः। अतः अम्बया मात्रा कियत्परिमाणकं

इयदित्ययमुच्चरन् कुचं
प्रदधौ कक्षगतो व्रजस्त्रियाः। ८३॥

अयमालि परं न गोकुलै
र्विपिनं तैरपि गोप सुभ्रुवां।
व्रजतिस्म परं न नन्दनो
निजपित्रोः स च सर्वचक्षुषां। ८४॥

शयनैकगतेन शैशवे
पदपाणीरण मात्र कर्मणा।

आहृतं अपहृतं त्वयेतिशेषः इति एतत् पृष्टः जिज्ञासितः सन् इयत् एतावत् परिमाणकं इति हस्तनिर्दिष्टं आहृतंमयेति शेषः इति एवं उच्चरन् कथयन् व्रजस्त्रियाः कस्याश्चित् गोपाङ्गनायाः कुचं स्तनं कक्षगतः कक्षस्थः प्रदधौ प्रकृष्टं धारयामास। बाल्ये प्राय मितादृक् विलासीति भावः। विशेषालङ्कारः। ८३॥

अयमिति। हे आलि अयं श्रीकृष्णः गोकुलैः गोसमूहैः परं केवलं विपिनं वनं न व्रजतिस्म अगमत् किन्तु गोपसुभ्रुवां गोपस्त्रीणां तैः गोकुलैः चक्षुः समूहैः सह व्रजतिस्म। गोकुलं गृहीत्वा वनगमनसमये गोपस्त्रीणां नयन्याकृष्टवानयमित्यर्थः। किंचेतिचार्थः निजपित्रोः स्वमातापित्रोः परं केवलं नन्दनः पुत्रः न, किन्तु सर्वेषां जनानां यानि चक्षूंषि तेषां सः नन्दनः आनन्ददायकः भवतीतिशेषः समस्तलोचनानन्दकः इतिभावः।
८४॥

शयनेति। शैशवे वाल्ये शयनैकगतेन केवलं शय्यास्थितेन उपवेष्टुमशक्तेन पदयोः पादयोः पाण्योः हस्तयोः ईरण मात्र चालनं एव कर्म कार्य्यं यस्यतेन केवल हस्त पादचालनकर्म्मणेन

अमुनाङ्घ्रि कनिष्ठयाद्भुते
शकटो ब्वर्त्तनयान्यमज्जि पूः । ८५ ॥
परिपालयगां भरान्विता
मिति यत्केशमुखामरार्थितः ।
उदितो हरिरेष किं ब्रजे
तदिहाभ्यस्यति गाः स्म पालयन् ।८६॥
महिमास्य महान्न सद्गतिं
गरित स्तन्यदपूतना यतः ।

अमुना श्रीकृष्णेन कर्त्ता अंघ्रिकनिष्ठया पादकनिष्ठाङ्गुल्या करणेन या शकटस्य असुरविशेषस्य उद्वर्त्तनाउल्लोठनं तया हेतुना पूः व्रजपुरं अद्भुते आश्चर्य्ये न्यमज्जि निमज्जिता शकटो ब्वर्त्तन व्रतान्तं दशमस्कन्धेऽनुसन्धेयं । ८५ ।

परिपालयेति । एषः हरिः भरान्वितां दुष्टभारविशिष्टां गां पृथ्वीं परिपालय रक्ष इति एवं कः ब्रह्माईशः शिवश्च मुखं प्रधानः येषां तैः अमरैः देवैः अर्थितः प्रार्थितः यत् अतः इह व्रजे घोषेउदितः आविर्भूतः गाः धेनूः पालयन् रक्षन् तत् ब्रह्मादि प्रार्थितं गोरक्षणं अभ्यस्यति स्म किं परिशीलयामास इव उत्प्रेक्षा । भारावतरणार्थं अवतारग्रहणाय हरिः देवैः प्रार्थित इति पुराण प्रसिद्धं । ८६ ॥

महिमेति । अस्य श्रीकृष्णस्य महिमा माहात्म्यं महान् भवतीतिशेषः । नु यतः हेतोःगरितं यत् स्तन्यं क्षीरं तत् ददातीति तथोक्ता पूतना तन्नाम्नी राक्षसी सद्गतिं मुक्तिं अगमत् पुनः सहज स्नेहेन स्वभाविक वात्सल्येन गलन्तःपयोभराः क्षीरप्रवाहाः यासां ताः मातरः पुनः किं सद्गतिं अगमन् इति किमुवक्तव्यं ।

अगमत्किमु मातरः पुनः
सहज स्नेह गलत्पयोभराः। ८७॥
ब्रजमश्रु जले निमज्जयन्
सखि वात्याहृत एष दुर्भराः।
गल पीड़न सूदितं त्वणां
न तृणावर्त्तमपातयत् किमु। ८८॥
घृत मेष हरन् यशोदया
कटितो द्व्यङ्गुलकोनता हृतैः।
गृह दामभिरर्द्दितोऽखिलैः
सखि दामोदर नामतां गतः। ८९॥

अर्थापत्तिः पूतनावधवृत्तान्तं दशमस्कन्धादौ द्रष्टव्यं। ८७।

ब्रजमिति। हेसखि वात्यया वातसमूहात्मक तृणावर्त्तेन हृतः उत्क्षिप्तः एषः श्रीकृष्णः ब्रजं घोषं तद्वासिन इत्यर्थः। अश्रुजले लोतक सलिले निमज्जयन् शोचयन्नित्यर्थः। दुर्भरः दुरुद्वहशरीरः सन् गलपीड़नेन कण्ठनिष्पीड़नेनस्वकृतेनेत्यर्थः सूदितं मृतं तृणावर्त्तं तन्नामानमसुरं त्वणं अल्पकालं अत्यन्त संयोगेद्वितीया, न अपातयत, किमु पातयामास एव। रूपकं एतच्चरितं दशमस्कन्धेऽन्वेषणीयं। ८८॥

घृतमिति। हेसखि एषः श्रीकृष्णः घृतं हरन् अपहरन् बालचापल्यादितिभावः। कटितः उदरात् द्व्यङ्गुलकाभ्यां या ऊनता न्यूनता तया हेतुना आहृतैः आनीतैः अखिलैः समग्रैः गृहदामभिः गृहस्थितरज्जुभिः करणैः यशोदया नन्दपत्न्या अर्द्दितः पीड़ितः बद्ध इति यावत् दामोदर इतिनाम यस्य तस्य भावः तत्ता तां गतः प्राप्तः भवतीतिशेषः। काव्यलिङ्गं। ८९।

सखि बद्ध उलूखलं शिशुः
प्रविकृष्यार्जुनयोर्विभञ्जनात् ।
अपियच्च तया तयो र्यं
जनतासाध्व संविस्मयौ व्याधात् ।९०॥

सखि वत्सतनुं सुरद्विषं
पदपुच्छग्रह मेष घूर्णयन् ।
भृश मुद्गमयन् कपित्थका
त्सुरसूनैः प्रसवा नपातयत् । ९१ ॥

सखीति । हेसखि । शिशुः बालः अयं श्रीकृष्णः बद्धः संयमितः बालचापलहेतुकापराधात्मात्राउलूखल इति भावः । उलूखलं मुषलं प्रविकृष्य अर्जुनयोर्मध्यइतिशेषः अर्जुनयोः तदाख्यद्रुमयोः विभञ्जनात् उत्पाटनात् श्रीकृष्णाकृष्टोलूखलाघातजातादिति भावः । अपिच तयोरर्ज्जुन द्रुमयोर्यच्चतया शापमोचनेन यच्चशरीरधारणाद्धेतोः जनतायाः लोकसमूहस्य साध्व संविस्मयौ भयाश्चर्य्ये व्यधात् विहितवान् । काव्यलिङ्ग । यामलार्जुन भञ्जन चरितं दशमस्कन्धे द्रष्टव्यं । ९०॥

सखीति । हेसखि एषः श्रीकृष्णः वत्सतनुं वत्सशरीरधारिणं सुरद्विषं असुरं पदपुच्छग्रहं पादलाङ्गूलग्रहणपूर्वकं यथा तथा घूर्णयन् भ्रमयन् भृशं अत्यर्थं उद्गमयन् उत्पातयन् सुराणां देवानां सूनैः पुष्पैः समं देवपुष्प वृष्ट्यासह कपित्थकात् वृक्षविशेषात् प्रसवान् फलानि अपातयत् अस्खलयत् सहोक्तिः । एतच्चरितमपिदशमस्कन्धे चित्रितमस्ति । ९१ ॥

गिलितो गरवद्गलं दहन्
सहसो ह्नीर्स्य दूवेरकामसौ।
सुहृदार्त्ततया वकस्य किं
सह नो चञ्चुमपाटयद्धठात्। ६२॥
विधुना कृत पीन मूर्त्तिना
ग्रसमानाघघनं विभिन्दता।
सखिभालि रकाशिपातितं
सुख पीयूष मनेन गोकुले।६३॥

गिलितइति। गिलितः भक्षितः बकेनेति शेषः। गरवत् विषमिव गलं कण्ठं दहन् ज्वलयन् अतः सहसा हठात् उद्गीर्णः उद्वान्तः असौ श्रीकृष्णः एरकां ईषिकां इव, वकस्य वकासुरस्य चञ्चु त्रोटिं सुहृदां मित्राणां आर्त्तितया श्रीकृष्ण दर्शनहेतुकेन दुःखेनसह हठात् शीघ्रं न अपाटयत् किं पाटयामासैव। उपमांसद्भोक्ति। बकासुरवध चरितं दशमस्कन्धे विवृतं। ६२॥

विधुनेति। कृता विरचिता पीनामूर्त्तिः स्वाकारो येन तेन ग्रसमानं भक्षयन्तं अन्यत्र आच्छादयन्तं अघं तन्नामानमसुर विशेषमेव घनं मेघं विभिन्दता विदारयता अनेन विधुना श्रीकृष्णचन्द्रेण सखायः मित्राण्येवभानि नक्षत्राणि तेषां आलिः समूहः नक्षत्र मृक्षं भंतारा तारकाप्युडुवास्त्रियामित्यमरः। अकाशि प्रकाशिता आनन्दितेत्यर्थः गोकुले व्रजे सुख मानन्द एव पीयूषं अमृतं पातितं विकीर्णं। रूपकं। अघघातो दशमस्कन्धे विवृतं। ६३॥

हरता विधिनार्भकान् गवां
सृजतोऽमुष्य च तादृशोऽपरान् ।
विदितान् प्रसमर्प्य तान्पदो
मुकुटै रार्चि नखेन्दुमण्डलौ ।६४॥
ह्रद निर्विषता कृते फटा-
नटकोऽयं सखि कालियस्य च ।
मणिभिर्मदमस्रु भोगिनी
नयनाच्चा स्खलयत् सुहृद्व्यथां ।६५॥

हरतेति । गवां धेनूनां अर्भकान् वत्सान् हरता अपहरता श्रीकृष्णमाहात्म्य जिज्ञासार्थमितिभावः विधिना ब्रह्मणा तादृशः तत्सदृशान् अपरान् वत्सानितिशेषः । सृजतः विरचयतः अमुष्य श्रीकृष्णस्य पदोः पादयोः विदितान् ज्ञातान् तान् हृत वत्सान् समर्प्य नखेन्दुमण्डलौ पादनख चन्द्रसमूहः मुकुटैः स्वकिरीटैः चतुर्मुखत्वात् मुकुटानांबहुत्वं । आर्चि अपूजि हृत वत्ससमर्पण पूर्वकं ब्रह्मा श्रीकृष्णचरणारविन्दे प्रणाममकरोदिति वत्सहरण वृतान्तं दशमस्कन्धे विवृतं । ६४ ॥

ह्रदेति । हे सखि ह्रदस्य कालिय ह्रदस्य निर्विषता कृते विषशून्यता करणार्थं कालियस्य तन्नाम्नः सर्पविशेषस्य फटायां फणायां नटकः नर्त्तकः अयं श्रीकृष्णः मणिभिः फणारत्नैः सह मदं गर्वं कालियस्येतिशेषः च पुनः भोगिनीनयनात् सर्पिणी चक्षुषः अस्रु लोतकं पुनः सुहृदां स्वमित्राणां व्यथां दुःखं कालियकृत श्रीकृष्ण वन्धनहेतुकं अस्खलयत् स्खलयामास । सहोक्ति पर्य्यायोक्तावलङ्कारौ । कालियदलन चरितं दशमस्कन्धे वर्णितं । ६५ ॥

ग्रसतेऽनल मैन्द्र जालिको
वितथं तच्च तनोति विस्मयं ।
अय मुग्रवनाग्नि मग्रस-
न्मृड़वत् च्वेड़ महिं मयूरवत् ।८६॥
गलितं दृषता शिलायितं
रवि पुत्र्या सममोहि चेतनैः ।
उदजीवि विचेतनैः स्वने
विततेऽस्या धरचुम्बिवेणुजे ।८७॥

ग्रसत इति । ऐन्द्रजालिकः कुहकजीवी वितथं मिथ्याभूतं अनलं अग्निं ग्रसते भक्षयति त च्च मिथ्याग्निभक्षणमपि विस्मयं आश्चर्य्यं तनोति विदधाति । किन्तु अयं श्रीकृष्णः उग्रवनाग्निं प्रचण्डदावानलं च्वेड़ं विषं मृड़वत् शिव इव अहिं सर्पं मयूर वत् मयूर इव अग्रसत् अभक्षयत् इति यदाश्चर्य्यं तत्किमुवक्तव्यं इतिं भावः । मालोपमार्थापत्त्यलङ्कारौ । दावाग्नि भक्षण चरितमपि दशमस्कन्धे विवृतं । ८६ ॥

गलितमिति । अस्य श्रीकृष्णस्य अधरचुम्बी मुखसंलग्नः यः वेणुः वंशी तस्मात् जायत इति तथोक्ते स्वने ध्वनौ वितते व्याप्ते सति दृषता पाषाणेन पाषाणः प्रस्तरग्रावोपलाश्मानः शिला दृषदित्यमरः । गलितं द्रुतं, रविपुत्र्या यमुनया शिलायितं प्रस्तर वदाचरितं, चेतनैः प्राणिभिः सममोहि सम्मोहितं, विचेतनैः जड़ैः उदजीवि उज्जीवितं । वंशीध्वनिमाधुर्य्या देव मेव मभवदित्यर्थः । विषमालङ्कारः । पर्य्यायोक्तिश्च । ८७ ॥

स्खलयन् सखि खेचरी ततै
रपि नीवीं ब्रजसुभ्रुवां त्रपां।
धृति मप्यथ योग धारणां
यतिनां वेणुरवोऽभवद्धरेः ।९८॥
वसनो पधिना हरन् ब्रजे
सखि माया वृति मेष योषितां।
विदधे बहु पुण्य निर्मितां
परम प्रेम परम्परात्मतां ।९९॥

स्खलयन्निति। हे सखि अस्यहरे श्रीकृष्णस्य वेणुरवः वंशीध्वनिः खेचरी ततेः दर्शनागताकाशचारिणी समूहस्यापिनिवीं वस्त्र ग्रन्थिं चपुनः ब्रजसुभ्रवां गोपस्त्रीणां त्रपां लज्जां धृतिं धैर्य्यं पुनश्च यतिनां योगिनां योगधारणां स्खलयन् भ्रंशयन् अभवत् अभूयते त्यर्थः। पर्य्यायोक्तिः। ९८॥

वसनोपधिनेति। हेसखि एषः श्रीहरिः ब्रजे घोषि योषितां गोपीनां वसनोपधिना वस्त्रकपटेन मायावृतिं मायावरणं हरन् बहुभिः पुण्यैः निर्मितां सम्पादितां परमप्रेम्णां यापरंपरा प्रवाहः तदात्मतां तदभिन्नत्वं प्रेममयत्व मित्यर्थः। विदधे विहितवान्। श्रीकृष्णः ब्रजस्त्रीणां वस्त्रहरणेन मायावरणमपसार्य्य प्रेम मयत्वं व्यदधादिति भावः। एतच्चरितं दशमस्कन्धे द्रष्टव्यं। अपह्नवालङ्कारः। ९९॥

सखि भक्ति वशीकृतः क्षुधा
कपटं भक्तमयं प्रयाच्य तत्।
ददती दयितातिवर्त्तिनी
रुदहार्षीद् यजमान योषितः।१००॥
मख विघ्नरुषेन्द्र चोदिता
निल निर्घात महोग्रवृष्टिभिः।
व्रज मेष उपद्रुतं दधत्
सखि गोवर्द्धन माव दार्त्तिहा।१०१॥

सखीति। हेसखि। भक्तिवशीकृतः भक्ताधीनः अयं श्रीहरिः क्षुधाकपटं बुभुक्षाव्याजं यथा तथा भक्तं अन्नं प्रयाच्य प्रार्थ्य यजमानपत्नी रितिशेषः तत् भक्तं ददतीः ददानाः दयितातिवर्त्तिनीः स्वपतीनपिलंघयन्तीः यजमान योषितः विप्रपत्नीः उदहार्षीत् संसारबन्धादुद्धृतवानित्यर्थः। अपह्नवः। विप्रपत्न्यन्न याचन चरितं दशमस्कन्धे विवृतं। १००॥

मखेति। हेसखि आर्त्तिहा एषः श्रीकृष्णः मख विघ्नेन याग भङ्गेन या रुट् क्रोधः तया हेतुना इन्द्रेण चोदिताभिः प्रेरिताभिः अनिल निर्घाताभ्यां झञ्झावात वज्रपाताभ्यां महोग्राभिः प्रचण्डाभिः वृष्टिभिः वर्षणैः उपद्रुतं उपप्लुतं व्रजं गोवर्द्धनं तदाख्यं पर्व्वतं दधत् धारयन् सन् आवत् अरक्षयत् गोवर्द्धनोद्धारण चरितं दशमस्कन्धे द्रष्टव्यं। १०१।

स्तुवता विजितेन जिष्णुना
सुर गो शैवलिनी पयोभरैः ।
अभिषेचयता वनाङ्गवां
सखि गोविन्द इतीड़ितोह्ययं ।१०२॥
हरता वरुणो व्रजेश्वरं
सखि भृत्येन भृशानुकम्पितः ।
यददः पदपद्म पांशुभिः
परिपूतत्व मगात्तदालयः । १०३॥
वरुणालयतो व्रजेश्वरो-
द्धरणात् घोष निवासिभिः स्तुतः ।

स्तुवतेति । हेसखि अयं श्रीकृष्णः विजितेन परास्तेन अत एव स्तुवता जिष्णुना इन्द्रेण सुरगोः सुरभिरेव शैवलिनी नदी तस्याः पयोभरैः क्षीरप्रवाहैः अभिषेचयता अभिषेकं कुर्वतासता गवां धेनूनांअवनात् पालनात्गाः विन्दतीति गोविन्दइतिईड़ितः स्तुतः अभवदितिशेषः । रूपकं ॥ एतच्चरितं दशमस्कन्धे द्रष्टव्यं ।१०२॥

हरतेति । हेसखि व्रजेश्वरं नन्दं हरता अपहरता भृत्येन स्वपरिचारकेण वरुणः जलाधिपः भृशं अत्यर्थं अनुकम्पितः अनुगृहीतः । यत् हेतोः तस्य वरुणस्य आलयः गृहं अदः पद पद्मपांशुभिः यस्य श्रीकृष्णस्य पादपद्म रजोभिः परिपूतत्वं पवित्रतां अगात् प्रापत् । रूपकं । नन्दानयनार्थं वरुणालयं श्रीकृष्णः अगमदिति दशमस्कन्धीयवार्त्तानुसन्धेया । १०३ ॥

वरुणालयतइति । हेसखि अयं हरिः श्रीकृष्णः वरुणालयतः वरुणलोकात् व्रजेश्वरस्य नन्दस्य उद्धरणात् आनयनात्

निजलोक मदर्शयच्चतान्
सखि मायाबशगानयं हरिः ।१०४॥
सखि वेणुरवेण रश्मिना
ललना गोकुल मेष गोकुले।
विनिबद्ध्य नख प्रभाभरैः
स्वपदोः संविदधे तृषोज्झितं ।१०५॥
मुरली रव माधुरीमयं
परमस्या प्युपलभ्य सौरभं।

हेतोः घोषनिवासिभिः व्रजवासिभिः स्तुतः सन् मायावशगान् मायाधीनान् तान् व्रजवासिनः निजलोकं स्व गोलकं अदर्शयत् दर्शयामास। काव्यलिङ्ग। अत्रापिपौराणिकीवार्त्तानुसन्धेया।
१०४॥

सखीति। हेसखि एषः श्रीकृष्णः गोकुले व्रजे ललनानां गोपाङ्गनानां गोकुलं इन्द्रिय समूह मेव धेनुबृन्दं वेणुरवेण वंशी ध्वनिना रश्मिना रज्वाव्यस्तरूपकं विनिबद्ध्य संयम्य स्वपदोः निजपादयोः नख प्रभाभरैः नख कान्तिप्रवाहैः तृषोज्झितं तृषा रहितं संविदधे स्वपादपद्मप्रदर्शनेन गोपाङ्गनानामिन्द्रियसमूहं सुस्थं चकारेतिभावः। १०५॥

मुरलीति। हेसखि गोपवधूः व्रजाङ्गनाः एव पिपीलिकाः कीटविशेषाः अस्य श्रीकृष्णस्य मुरलीरवमाधुरीमयं वंशीध्वनि माधुर्य्य स्वरूपं सौरभं परं उपलभ्य प्राप्य यूथ शतं वनगाः

सखि गोपवधू पिपीलिकाः
वनगा यूथ शतं श्रुतंमया । १०६ ॥
चरणागतघोष योषितां
सखि धर्म्योक्ति सुकर्त्तरी शतैः ।
दृढ़ भाववटीं विपाटितुं
नपटुः संयमितोऽयमेतया ।१०७॥
कुतुकी शरदिन्दु सुन्दरे
सखि वृन्दाविपिने मृगीदृशां ।

असंख्य यूथाकारेण वनगताः बभूवुः इति मयाश्रुतमिति भावः । अस्य वंशीध्वनिं श्रुत्वा गोपवधूः यूथीभूय वनमगमन्निति ब्रह्म वैवर्त्ते विवृतं । रूपकं । १०६ ॥

चरणेति । हेसखि ! अयं श्रीकृष्णः चरणागतानां वंशीध्वनि श्रवणेन स्वसमीपागतानां घोषयोषितां व्रजाङ्गनानां भावः अनुराग एव वटी गुणः तां । दामरज्जुर्वटी गुण इति कोषः । धर्म्योक्तयः धर्मोपेतवाक्यान्येव सुकर्त्तर्य्यः कर्त्तरिकाः तासां शतैः विपाटितुं विघटयितुं नपटुः नसमर्थः प्रत्युत एतया भाव वट्या संयमितः बद्धः । आसीदितिशेषः । रूपकं ॥ वंशीध्वनि श्रवणागतानां व्रजाङ्गनानां स्वस्मिन् अनुरागं धर्म्यवचनैः विघटयतु मपारयन् प्रत्युत तत्प्रणयेन स्वयं बद्ध इति दशम- स्कन्धीयचरितमत्रानुसन्धेयं । १०७ ॥

कुतुकीति । हेसखि कुतुकी रसिकः एषः श्रीकृष्णः शर- दिन्दुना शरच्चन्द्रेण सुन्दरे मनोहरे वृन्दा विपिने वृन्दावने मृगीदृशां स्त्रीणां यथेष्ट केलीजं यथेष्टं क्रीड़ाजनितं मदं गर्वं

मद्मैष यथेष्ट केलिजं
श्रमयन्नन्तरधात्सराधिकः ।१०८॥
विरहेऽस्य तदोन्मदस्तरु
नपिपृच्छन् गति मेतदात्मकः ।
अनुकृत्य च पूतना बधा
दिकचेष्टाः प्रमदा गणोऽभ्रमत् ।१०६॥
पृथु सौभग नुन्नया सितु
स्पृहयन्त्यां स दृशास्य राधया ।

श्रमयन् कृसयन् सराधिकः राधिकासहितः सन् अन्तरधात् अन्तर्हितोबभूव। एतच्चरितं रासपञ्चाध्याय्यां द्रष्टव्यं। १०८॥

विरह इति। तदा श्रीकृष्णान्तर्द्धानावसरे अस्य श्रीकृष्णस्य विरहे उन्मदः उन्मत्तः प्रमदागणः स्त्रीसमूहः गतिं श्रीकृष्णस्ये-तिशेषः तरून् बृक्षान् अपि पृच्छन् जिज्ञसमानः सन् एतदात्मकः एतच्छ्रीकृष्णात्मकः सन् पूतनाबधादिकचेष्टाः पूतनावध प्रभृति श्रीकृष्ण चेष्टितानि अनुकृत्य अभिनीय अभ्रमत् बभ्रम। चरितमेतत् रासपञ्चाध्याय्यामनुसन्धेयं। १०६।

पृश्विति। पृथुना उत्कृष्टेन सौभगेन पति वाल्लभ्येन सर्वगोपी परित्याग पूर्वक स्व संभोगजनितेन नुन्नया प्रेरितया राधिकया अस्य श्रीकृष्णस्य अंसे स्कन्धे आसितुं उपवेष्टुं स्पृह यन्त्या ईच्छन्त्या सत्या अंविलोकनतः स्कन्दारोहणावसरे अन्तर्द्धानाद्धेतोः श्रीकृष्णादर्शनाभावात् शुकमरिति शोकमयां

अविलोकनतो निपत्य शुक्त-
सरिति प्रापि सगोपिका गणः ।११०॥
यदद्दोऽंसगता ब्रजेश्वरी
कुसुमानि स्म लुनाति वृक्षतः ।
चपला जलदोपरिस्थिरा
यदि विद्येत तदा न तत्तुला ।१११॥
निजवर्ण्ण हरः कचोच्चयो
वृषभानो दुहितुः शिरोगतः ।

निपत्य सः पूर्वं परित्यक्तः प्रमदागणः गोपीसमूहः प्रापि प्रापितः रूपकं। रासपञ्चाध्याय्या मेतद्वृत्तान्तं विवृतं । ११० ॥

यदिति । व्रजेश्वरी श्रीराधिका अमुस्य श्रीकृष्णस्य अंसगता स्कन्धारूढ़ा सती वृक्षतः कुसुमानि पुष्पाणि लुनातिस्म अचिनोत् श्रीकृष्णेन सह एकान्त विहारावसर इतिभावः। चपला विद्युत् जलदोपरि स्थिरा अचञ्चला विद्येत वर्त्तेत यदि तर्हि तत्तुला तत् साम्यं न भवतीतिशेषः। अतिशयोक्तिः एतदपिपञ्चाध्यायी चरितं । १११ ॥

निजेति । हेनृपजे राजपुत्रि निजस्य वर्णं हरः वर्णचौरः स्वमदृश कृष्ण इत्यर्थः। पुनः वृषभानोः दुहितुः श्रीराधिकायाः शिरोगतः मस्तकस्थितः कचोच्चयः केशपाशः इति किं स्ववर्णचौरत्वात् श्रीराधाशिरोगतत्वा चेति हेतोः किं। रसिकेन अमुना वने वृन्दावने एकान्त विहारावसर इति भावः भाग्रहं

इति किं रसिकेन साग्रहं
त्रपजे संयमितोऽमुना बने ।११२॥
रमणी परन्त्रतात्मकं
रसिकत्वं प्रथयन्महीतले ।
किमरञ्जयदेष नोऽरुणौ
सखि राधाचरणौ च लाक्षया ।११३॥
विधुरेष तदातिरोहितः
सखि वाधातिमिरेण गोपिकाः ।
हतबुद्धिपथाश्च विस्मृता
लयकृत्याः स्वगुणै र्व्यलापयत् ।११४॥

सादरं संयमितः बद्धः प्रसाधित इति यावत् उत्प्रेक्षा। एतच्चरितमपि रासपञ्चाध्यायी गतं । ११२ ॥

रमणीति। हेसखि एषः श्रीकृष्णः रमणी परतन्त्रतात्मकं स्त्रीपराधीनता स्वरूपं रसिकत्वं मह्नीतले प्रथयन् रसिकाः स्त्रीपराधीना इति ख्यापयन् अरुणौ राधाचरणौ लाक्षया नोऽरञ्जयत् किं अरञ्जयदेव। एकान्त विहारावसरे इति भावः रासपञ्चाध्यायी विवृत चरितमेतत्। काव्यलिङ्गं । ११३ ॥

विधुरिति। हेसखि तदा रासावसरे तिरोहितः अन्तर्हितः एषःविधुः श्रीकृष्णचन्द्रः बाधा तिमिरेण दुःखान्धकारेण हतबुद्धि पथाः नष्टबुद्धिमार्गाः विस्मृतालयकृत्याः गृहकार्य्याणि विस्मृत वतीः गोपिकाः गोपीः स्वगुणैः हेतुभिः व्यलापयत् विलापयामास। रूपकं। एतदपि रासपञ्चाध्यायी चरितं। ११४ ॥

कदनं कुच योगतो ययोः
कलितं ते क्षिपता कथं पदे।
क्वगतं बहुकण्टके वने
भवतेतीम मपेक्ष्यता जगुः। ११५॥

हरिणा व्रज पद्मिनी तते
र्मुख पद्मादमुना अश्रुशीकरं।
अपहर्त्तुं मुदेत्य यातना
तिमिरं चापि पुनः कृपा कृता।११६॥

कदनमिति। कुचानां स्तनानां अस्माकमितिशेषः। योगतः स्पर्शात् हेतोः ययोः पदोः कदनं क्लेशः कलितं दृष्टं अस्माभिरिति शेषः। अथवा अनुभूतं भवते इतिशेषः। ते कुच योगादपि पीड़िते पदे पादौ बहुकण्टके कण्टकपूर्णे वने कथं केनप्रकारेण क्षिपता न्यस्यता भवता क्वगतं कुत्रप्रस्थितं। इति एतत् वाक्यादिकं ताः विरहिण्यः गोपिकाः इमं श्रीकृष्णं अपेक्ष्य उद्दिश्य जगुः गायन्तिस्म। यत्ते सुजात मिति रासपञ्चाध्यायी प्रसिद्ध पद्यस्य तात्पर्य्यमेतत्। काव्यलिङ्गं। ११५॥

हरिणेति। अमुना हरिणा श्रीकृष्णेन सूर्य्येणच व्रज पद्मिनी ततेः व्रजाङ्गना समूहस्य पद्मलता समूहस्य च मुखपद्मात् वदनपङ्कजात् अश्रुशीकरं लोतक शीकरं च पुनः यातना पीड़ैवतिमिरं अन्धकारः तदपि अपहर्त्तुं अपनेतुं पुनः उदेत्य आविर्भूय कृपा दया कृता आत्मसंदर्शनेन गोपाङ्गनानां दुःखं विनाश्य अनुगृहीतवानिति पञ्चाध्याय्यां वर्णितं। रूपकं।११६॥

उडुभिः शशिवच्च शक्तिभिः
पुरुषोवा ब्रजकामिनी गणैः ।
यमुना पुलिनेऽय मावृतः
पटुभिस्ताःस्म धिनोति चाटुभिः ।११७॥
ब्रजवामदृशां द्वयो र्द्वयोः
सखिमध्येऽ प्रविशन्नसौ हरिः ।
कृतकाय निकाय आचरत्
परिरब्धः खलु रासमण्डलं । ११८॥
गगने भगणेन विस्मय-
स्थगितोऽभूद्विधुरस्य रासके ।

उडुभिरिति। उडुभिः तारकाभिः शशिवत् चन्द्र इव च शक्तिभिः इच्छाज्ञानक्रियात्मकाभिः पुरुषो वा आत्मेव ब्रज कामिनीगणैः गोपीसमूहैः आवृतः वेष्टितः अयं श्रीकृष्णः यमुना पुलिने पटुभिः उचिताभिः चाटुभिः चाटूक्तिभिः ताः ब्रजाङ्गनाः धिनोतिस्म प्रीणयामास। मालोपमा। एतदपि पञ्चाध्यायी चरितं। ११७॥

ब्रजेति। हेसखि असौ हरिः श्रीकृष्णः कृतः रचितः काय निकायः देह व्यूहोयेनसः ब्रजवामदृशां ब्रजस्त्रीणां द्वयोः द्वयोः मध्ये प्रविशन् परिरब्धः ताभिः आलिङ्गितः सन् रासमण्डलं मण्डलाकाररासोत्सवं आचरत् कृतवान्। एतदपि पञ्चाध्यायी गत वृतान्तं। ११८॥

गगन इति। अस्य श्रीकृष्णस्य रासके रासोत्सवे विधुः चन्द्रः गगने आकाशे भगणेन नक्षत्र समूहेन सह विस्मय स्थगितः

करपल्लवतो वियच्चरी-
व्रततीनां कुसुमान्यवापतन्। ११९॥
बहुकेलि भरै र्गुरु श्रमा
व्रजवामाः करिणीः करी यथा।
कलयन् जल केलि कौतुकी
यमुनां मण्डितवानयं हरिः। १२०॥
सखिरास कृतेऽस्य मायया
विहिता ब्रह्मनिशा तथापराः।

चमत्कारेण स्थिरीभूतः अभूत् पुनः वियच्चरिणां आकाशवर्त्तिनीनां देवस्त्रीणा मेव व्रततीनां लतानां करपल्लवतः हस्त किसलयेभ्यः कुसुमानि पुष्पाणि अवापतन् पेतुः रूपकं। रासदर्शनेन चन्द्रस्यापिस्थिरीभूतत्वं देवस्त्रीणां पुष्पवृष्टिश्चाभूदिति रासपञ्चाध्यायी विवृतं। ११९।

वहिति। अयं हरिः श्रीकृष्णः बहुकेलिभरैः यथेष्ट क्रिड़ातिशयैः गुरुश्रमाः श्रान्ताः व्रजवामाः गोपीः करिणीः हस्तिनीः करीयथा हस्तीव कलयन् नयन् जलकेलि कौतुकी जलक्रीड़ासक्तः सन् यमुनां नदीं मण्डितवान् भूषयामास। उपमा। एतदपि रास पञ्चाध्यायी विवृतं। १२०॥

सखीति। हेसखि रासकृते रासोत्सवार्थं अस्य श्रीकृष्णस्य मायया ब्रह्मनिशा ब्रह्मरात्रिः विहिता कृता तथा पशुपानां गोपालानां प्रतारणायां वञ्चनायां मोहन इति यावत् निपुणाः अपराः अन्याः दयिताः प्रियाः गोपिकाः इति यावत् विहिताश्च

दयिताः पशुप प्रतारणा
निपुणा स्वेति रहः श्रुतं मया ।१२१॥
ऋषि शापवशा दहि ग्रसन्
सखि नन्दं निहतः पदामुना ।
परिमुच्य चतां स्वसर्पता
मिह विद्याधर आपसद्गतिं ।१२२॥
विहरन् युवती हृतः क्षणं
क्षण विघ्नं सखि शङ्खचूड़कं ।

रासे ब्रह्म निशायां गोपीनां वर्त्तमानत्वात् गोपालानां प्रतारणाय अन्याः गोपिकाः ससर्ज इति मयारहः श्रुतं विदितं । एतदपि पञ्चाध्यायो वृतान्तं । १२१ ॥

ऋषिशाप वशादिति । हे सखि ऋषीणां अङ्गिरसां शाप वशात् .अभिशापाद्धेतोः अहिः सर्पः तदाकारेण परिणत इत्यर्थः । नन्दं व्रजेश्वरं ग्रसन् भक्षयन् अमुना श्रीकृष्णेन पदापादेन करणेन निहतः ताडितः तां स्वसर्पतां निजसर्पभावं परिमुच्य विहाय विद्याधरः सुदर्शननामा कश्चित् वियच्चरः सन् इह सद्गतिं आप प्राप । एतदपि दशमस्कन्ध विवृत चरितं ।१२२॥

विहरन्निति । हे सखि युवती वृतः स्त्रीवेष्टितः अयं श्रीकृष्णः विहरन् क्रीड़न् क्षणविघ्नं रासोत्सव विघ्नभूतं शङ्खचूड़कं तन्नामानमसुरं क्षणं क्षणकालं अत्यन्त संयोगे द्वितीया निजलोकं स्वर्गोलोकं आपयत् प्रापयामास निहतवान् इत्यर्थः । च पुनः इष्टं तस्य शङ्खचूड़स्य शिरोमणिं मस्तकरत्नं बलं

निज लोक मयं च तच्छिरो-
मणि मिष्टं बलमापयद्द्रुतं । १२३ ॥
व्रजरिष्ट मरिष्ट मुत्कटं
वृषवर्ष्माण मयं विषाणयोः ।
दधदार्द्र मिवात्र पोथयन्
वसनं खात् कुसुमान्य वर्षयत् ।१२४॥
सखि केशिबधाद्दिवौकसां
हृदयेभ्यो दरमेष आहरन् ।

बलदेवं द्रुतं शीघ्रं आपयत् प्रवेशयामास एतदपि चरितं दशमस्कन्धे विवृतं । १२३ ॥

व्रजरिष्ट मिति । अयं श्रीकृष्णो व्रजस्य गोपपुरस्य रिष्टं अमङ्गल भूतं उत्कटं वृष वर्ष्माणं वृषभदेहधारिणं अरिष्टं तन्नामानमसुरं विषाणयोः शृङ्गयोः दधत् दधानः आर्द्रं वसनं वस्त्रमिव अत्र भूतले पोथयन् पेषयन् मारयन्निति यावत्। खात् आकाशात् कुसुमानि अवर्षयत् अपातयत् । अरिष्टवध हेतुकं सुरकुसुम वृष्टिमकारयदित्यर्थः । उपमा अरिष्ट बध चरितं दशमस्कन्धे स्फुटं । १२४ ॥

सखीति । हे सखि ! व्रजबामानां गोपीनां रससाम्प्र-दायिकः रसशिक्षकः एषः श्रीकृष्णः केशिनः तन्नाम्नः असुरस्य बधात् हेतोः दिवौकसां देवानां हृदयेभ्यः चित्तेभ्यः दरं भयं असुरहेतुकमित्यर्थः । आहरन् आनयन् कंसस्य भोजपतेः चेतसि हृदये न्यदधात् निहितवान् खलु केशिबधात् द्वेषाः,

न्यदधात् खलु कंसचेतसि
व्रजवामारस साम्प्रदायिकः ।१२५॥
छलगोप वपुः शुभे हरन्
पशुपान् व्योममहासुरोऽमुना ।
पशुमार ममारि गोदुहो
गिरिदर्य्याश्च विमोचिताः सुखं ।१२६॥
प्रहितः सखि मृत्युना धनु
र्मखसन्दर्शन कैतवा दमुं ।
सबलं खलु काल पन्नगं
ननुकंसः स्वपुरं समानयत् । १२७ ॥

निर्भयाः कंसस्य भीतइत्यर्थः। केशिवध चरितं दशमस्कन्धे द्रष्टव्यं । परिसंख्यालङ्कारः। १२५ ॥

छलेति। हे शुभे कल्याणि छलेन कपटेन गोपवपुः गोपालरूपी पशुपान् गोपालान् हरन् भक्षणार्थं अपहरन् व्योमनामा महासुरः अमुना श्रीकृष्णेन पशुमारं पशुमिवमारयित्वा ममारि मारिताः, चपुनः गोदुहो गोपालाः गिरिदर्य्याः पर्ब्बतकन्दरायाः सुखं अक्लेशं विमोचिताः उद्धारिताः। उपमा। व्योमासुरवध चरितं दशमस्कन्धे विवृतं। १२६ ॥

प्रहित इति। ननु सखि मृत्युना प्रहितः प्रेरितः कंसः भोजपतिः सबलं बलदेवसहितं खलकालपन्नगं दुष्टानां कालव्यालभूतं अमुं श्रीकृष्णं धनुर्मखस्य धनुर्यज्ञस्य संदर्शन कैतवात् दर्शनव्याजेन स्वपुरं मथुरां समानयत् गोपतो मथुरामानयदित्यर्थः। रूपकं एतदपि दशमस्कन्ध चरितं। १२७॥

सखि भोजपति प्रचोदितो
ब्रजतो दानपति र्जगत्पतिं।
शुगपांपति मज्जिता दमुं
मथुरा मानय दुन्नताशयः। १२८ ॥

ज्वलयत्यय मुत्कटं ब्रजे
प्रमदानां विरहानलं भृशं।
सखि लोतकनिर्झरै र्नकिं
प्रकट स्नेहभरै रहर्निशं। १२९ ॥

दृढ़भाव मया ब्रजाङ्गना
अदसीयांघ्रि सरोज सेवनं।

सखीति। हे सखि उन्नताशयः महाशयः दानपतिः अक्रूरः भोजपतिना कंसेन प्रचोदितः प्रेरितः सन् शुगपाम्पति मज्जितात् शोकसमुद्र निमज्जितात् कृष्णविरहाशङ्कया शोकाकुलात् ब्रजतः गोपपुरात् जगत्पतिं जगन्नाथं अमुं श्रीकृष्णं मथुरां आनयत् प्रापयत्। एतदपि दशमस्कन्धे द्रष्टव्यं। १२८॥

ज्वलयतीति। हे सखि अयं श्रीकृष्णः ब्रजेगोपपुरे प्रमदानां गोपिकानां प्रकटस्नेहभरैः प्रव्यक्तप्रेमातिशयैः तैलमयैरितिच ध्वन्यते। लोतकनिर्झरैः अश्रुप्रवाहैः उत्कटं उल्बणं विरहानलं विरहाग्निं भृशं अत्यर्थं अहर्निशं सर्व्वदाज्वलयति। श्रीकृष्ण-परित्यागात् ब्रजाङ्गनाविरहार्त्ताबभूवुरिति दशमस्कन्धे स्पष्टं रूपकं। १२९॥

दृढ़ेति। हे सुगात्रि सुन्दरि, दृढ़भावमयाः प्रगाढ़भक्ति पूर्णाः ब्रजाङ्गनाः गोपिकाः विरहे विच्छेदेऽपि जागरे

विरहेऽपि सुगात्रि जागरे
किमुत स्वप्नदशासु कुर्वते । १३० ॥
स्वमदर्शय देष साग्रजं
सलिलान्तः सखि गान्दिनी सुतं ।
कृत मज्जन मास्थितो रथं
भ्रमभूविश्वभवैन्द्रजालिकः । १३१ ॥
बलकृष्णौ सलिले विलोकयन्
पुनरुन्मज्ज्य रथेऽपिता विभौ ।

जागरावस्थायां यदसीयस्य एतच्छ्रीकृष्णसम्बन्धिनः अंघ्रिसरोजस्य पादपद्मस्य सेवनं सेवां कुर्व्वते कुर्व्वन्ति । श्रीकृष्णाभावभाविता गोप्यो वृन्दावने नित्यसंनिहितस्य अस्य श्रीहरे पादपद्मसेवां विरहेऽपिकुर्व्वन्तीति पौराणिकी प्रवृत्तिः । स्वप्नदशासु स्वप्नावस्थासु किमुत कुर्व्वन्तीतिभावः । अर्थापत्तिः । १३० ॥

स्वमिति । हेसखि भ्रमभुवां भ्रमसंभूतानां विश्वेषां प्रपञ्चानां भवेत्यतो ऐन्द्रजालिकः मायिकः सर्व्वप्रपञ्चप्रवर्त्तक इत्यर्थः । एषः श्रीकृष्णः रथमास्थितः रथारूढ़ः मथुरापथीति शेषः । कृतमज्जनं स्नानं कुर्व्वन्तं गान्दिनीसुतं अक्रूरं सलिलान्तः जलमध्ये साग्रजं वलदेवसहितं स्वंआत्मानं अदर्शयत् दर्शितवान् एतदपि दशमस्कन्धे विवृतं । परिकरः । १३१ ॥

बलकृष्णाविति । सः गान्दिनीसुतः सलिले जलमध्ये ईमौ एतो बलकृष्णौ श्रीरामकृष्णौ विलोकयन् पश्यन् पुनः उन्मज्ज्य विस्मयात् जलादुद्धृत्य रथे स्यन्दनेऽपि तौ ईमौ श्रीरामकृष्णौ

प्रसमीक्ष्य निमज्य शेषगं

स चतुर्बाहु मिमं किलास्तवीत ।१३२॥

प्रविशन् सवलासमाशुगो

मथुरा मेष कृशाङ्गि माधवः ।

प्रमदा ब्रततौ ततेः सम-

स्फुटयन् विभ्रम सून सञ्चयं । १३३ ॥

वरमम्बर मालुशन्निरा-

कृत एषोऽहरदंशुकैः सह ।

प्रसमीक्ष्य पूर्ब्ववत् रथस्थितौ दृष्ट्वा इत्यर्थः। निमज्य परीक्षणार्थं पुनर्जले मज्जन् शेषगं शेषशायिनं चतुर्बाहुं इमं श्रीकृष्णं प्रसमीक्ष्य अस्तवीत् अस्तौत् किल । एतदपि दशमस्कन्ध वर्णितं । १३२ ।

प्रविशन्निति । हे कृशाङ्गि एषः माधवः श्रीकृष्णः वसन्तश्च बलः बलदेव एव असमाशुगः कन्दर्पः तेन सह वर्त्तमानः सन् मथुरां नगरीं प्रविशन् प्रमदाः स्त्रिय एव व्रतत्यः लताः तासां ततेः समूहस्य विभ्रमाः विलासा एव सूनानि कुसुमानि तेषां संचयं समूहं समस्फुटयत् प्राकाशयत्। मथुरायां पुराङ्गनाः एनं दृष्ट्वा विभ्रमानदर्शयद्गिति दशमस्कन्ध प्रसिद्धं रूपकं ।१३३॥

वरमिति । हे आलि ! एषः श्रीकृष्णः वरं उत्कृष्टं अम्बरं वस्त्रं उशन् वाञ्छन् रजकादितिशेषः। निराकृतः सन् प्रत्यादिष्टः रजकेनेतिशेषः। रजकस्य कंसवसन निर्णेजकस्य अंसदेशतः स्कन्धप्रदेशात् तलघातेन चपेटप्रहारेण अंशुकैः वस्त्रैः सह शिरः

रजकस्य शिरोऽसदेशत
स्तलघातेन फलं तरोर्यथा। १३४॥
सखि सूर्पणखा स्पृहावती
रघुनाथेऽत्र कुलद्वयीं स्वकं।
प्रविलोप्य च कर्ण नासिकां
समभूद् भावभरै स्त्रिकुब्जिका।१३५॥
किमतोऽङ्गविलेप सत्क्रिया-
प्रतिशोधं रुचिरत्वमेत्य सा।
समतोषय देत मिष्टदं
सखि कुब्जानहि केलिकौतुकैः।१३६॥

मस्तकं तरोः वृक्षात् फलं यथा अहरत् अपजहार। उपमा सह्योक्ती, रजकदमन वृत्तान्तं दशमस्कन्धे द्रष्टव्यं। १३४॥

सखीति। हे सखि! रघुनाथे रामचन्द्रस्वरूपिणि अत्र श्रीकृष्णे स्पृहावती अभिलाषिणी सूर्पणखा तदाख्या रावण भगिनी स्वकां स्वकीयां कुलद्वयीं मातापितृकुले च पुनः कर्णौ नासिकां च प्रविलोप्य विनाश्य राघवेणेतिशेषः। भावभरैः अनुरागातिशयैरेवभारै त्रिकुब्जिका त्रिस्थानकुब्जा समभूत्। उत्प्रेक्षा सूर्पणखारामावतारे तदासक्ता सती अधुना कुब्जारूपेण अवस्थितेति ब्रह्मवैवर्त्त प्रमाण मत्रानुसन्धेयं। १३५॥

किमिति। हे सखि! सा कुब्जा अतः श्रीकृष्णात् अङ्गविलेपः अङ्गलेपनमेव सत्क्रिया सत्कारः तस्याः प्रतिशोधः परिशोधभूतं रुचिरत्वं सौन्दर्य्यं एत्य प्राप्य इष्टदं कामप्रदं एतं श्रीकृष्णं केलिकौतुकैः कामक्रीड़ाभिः न समतोषयत् किं, अतोषयदेव। उत्प्रेक्षा कुब्जाविहार वृत्तान्तं दशमस्कन्धे द्रष्टव्यं। १३६॥

सबलः सखि पुष्प मालया
च्चिंतएषोऽपि वराटकार्घया ।
इह बंश बशम्बदां श्रियं
निज दास्य न्यदधाच्च मालिके । १३७ ॥
गजमुद्धरतो ऽस्य नक्रतो
यशसा संविततेन पूर्व्वतः ।
सखि कंस करीन्द्र नाशना
न्नयदाकुञ्चित मत्र बिस्मये । १३८ ॥

सबलइति । हेसखि ! सबलः, बलदेवसहितः एषः श्रीकृष्णः वराटकार्घया काकणीमूल्यया पुष्पमालया अर्च्चितः पूजितः सन् मालाकारेणेतिशेषः इह वंश बशम्बदां कुलानुगतां श्रियं सम्पत्तिं च पुनः निजदास्यं स्वभक्तत्वं मालिके मालाकारे न्यदधात् । निहितवान् दत्तवानितियावत् मालाकार बरप्रदान चरितं दशमस्कन्धेऽनुसन्धेयं । परिवृत्तिरलंकारः । १३७ ।

गजमिति । हे सखि ! पूर्व्वतः पूर्व्वस्मिन् काले नक्रतः कुम्भीरात् गजं हस्तिनं उद्धरतः उद्धृतवतः अस्य संविततेन अतिविस्तृतेन यशसा कर्त्रा कंसकरीन्द्रनाशनात् कुवलयापीड़-मर्द्दनात् यत् न आकुञ्चितं, न नष्टं अत्र अस्मिन्विषये विस्मये विस्मितास्मि, विशेषोक्तिः । अयं श्रीकृष्णः कुवलयापीड़ं निहतवा-नित्यर्थः । एतच्चरितमपि दशमस्कन्धे बिवृतं । १३८ ॥

दधदेष करेण कार्म्मुकं
किमु कंसस्य मदं विखण्डयन्।
गजदन्तु मिवारवै र्दिशां
द्विरदानां बधिराः श्रुतीर्व्यधात्॥१३६

पितृयौवत मल्ल योगिभिः
क्रमतोऽयं शिशुरात्मभूः पविः।
परतत्त्व मतर्कि रङ्गगः सखि
कंसेन यमश्च साग्रजः।१४०॥

दधदिति। एषः श्रीकृष्णः करेण हस्तेन कार्म्मुकं कंस पूजित धनुः दधत् धारयन् सन् कंसस्य मदं गर्व्वं किमु गजः हस्ती दन्तुमिबविखण्डयन् भञ्जयन् आरवैः धनुर्भङ्गशब्दैः दिशांद्विरदानां दिग्दन्तीनां श्रुतीः कर्णान् बधीराः व्यधात् विहितवान्, उत्प्रेक्षोपमातिशयोक्तयः। धनुर्भङ्ग वृत्तान्त मपि दशमस्कन्धे दृश्यं॥ १३९ ॥

पित्रिति। हे सखि! रङ्गगः कंससभागतः, साग्रजः बलदेव सहितः अयं श्रीकृष्णः पितृभ्यां देवकी वसुदेवाभ्यां च यौवतैः युवती समूहैः मल्लैः चाणूरादिभिश्च योगिभिः क्रमतः क्रमात् शिशुः, बालकः आत्मभूः कन्दर्पः पविः बज्रं परतत्त्वं परमात्माच अतर्कि, तर्कितः। च कंसेन यमः अन्तकः अतर्कि। उक्तं च यथासंख्येमल्लनाम शनिरिति दशमस्कन्धोल्लिखितः श्लोकस्यानुवादोऽयं। १४० ॥

अयमालि बलोऽपि बालकौ
युवचाणूरक मुष्टिकौ बलात्।
अघ मोह भरौ यथा हतां
सुकृत ज्ञानलवौ नु लीलया। १४१॥
सखि कंस मसौ कचोच्चये
प्रविकर्षन्न नयत्सरूपतां।
जनता म् मातृ पितृ द्रुहं खलं
किमुतात्यन्तिक भक्ति निर्म्मलं। १४२॥
दृढ़ संसृति बन्ध मस्य सं-
भजतां च द्विषतां विभिन्दतः।

अयमिति। हे आलि! अयं श्रीकृष्णः बलः बलदेवोऽपि बालकौ बालकावस्थौ युवानौ युवकौ यौ चाणूरक मुष्टिकौ तन्नामानौ कंसमल्लौ तौ बलात् स्वबलमाश्रित्य सुकृतज्ञानयोः पुण्यसद्ज्ञानयोः लवौ लेशौ अघमोहयोः पापाज्ञानयोः भरौ अतिशयौ यथा अहतां, अनाशयतां, उपमायथासंख्ये। मुष्टिक चाणूरवधवृत्तान्तं दशमस्कन्धे द्रष्टव्यं। १४१॥

सखिति। हे सखि! असौ श्रीकृष्णः जनतां स्वपितरौ च द्रुह्यतीति तथोक्तं स्वपितृ वैरिणं खलं दुष्टं कंसं भोजाधिपं कचोच्चये केश पाशावच्छेदे प्रविकर्षन् सरूपतां स्वतादात्म्यं अनयत्। आत्यन्तिकभक्त्या, निर्म्मलं विशुद्धं जनं किमुत, सरूपता मनयदिति किमुवक्तव्यं। अर्थापत्तिः। कंसाकर्षण चरितं दशमस्कन्धे विवृतं। १४२॥

दृढ़ेति। द्विषतां शत्रूणां सम्भजतां भक्तानां च दृढ़ संसृति बन्धं निविड़ संसारबन्धनं विभिन्दतः भेदयतः खण्डयतः अस्य

न विचित्र मरिक्षयो त्तरं
निजपित्रो र्निगड़ात् बिमोचनं ।१४३॥
जगतां गुरुणा च सौरिणा-
खिलविद्या विदुषा मुनापिच ।
उपदेष्टु मकारि नो जनान्
किमु सान्दीपनि भूसरो गुरुः ।१४४॥
सकलागम पार मीयुषा
दिवसै र्वेद रसैः सकृद्ग्रहात् ।

श्रीकृष्णस्य अरिक्षयोत्तरं शत्रुबधानन्तरं निजपित्रोः देवकी वसुदेवयोः निगड़ात् शृङ्खलात् विमोचनं, मोक्षणं न विचित्र नाद्भुतं भवतीति शेषः। अर्थापत्तिः। वसुदेवदेवक्योर्निगड़ बन्धनमोक्षणं दशमस्कन्धे प्रव्यक्तं। १४३ ॥

जगतामिति। जगतां भुवनानां गुरुणा शिक्षकेन अखिल विद्याः समस्तविद्याः, विदुषा जानता असुना श्रीकृष्णेन अपिच सौरिणा वलदेवेन जनान् लोकान् उपदेष्टुं गुरुभ्यो विद्याध्ययनं कर्त्तव्यमिति शिक्षयितु नतु स्वयं शिक्षितुमिति भावः । सान्दीपनिभूसरः, सान्दीपनिनामा मुनिः गुरुः शिक्षकः न अकारि किमु, कृतएव । उत्प्रेक्षा, श्रीकृष्णस्य गुरुकुलवासोऽपि दशमस्कन्धे द्रष्टव्यः। १४४।

• सकलेति। वेदरसैः चतुःषष्ठिभिः दिवसैः दिनैः सकृद्ग्रहात् एकवारश्रवणात् सकलागमपारं समस्तशास्त्रशेषं इयुषा प्राप्त- वता स्वलेन वलदेवसहितेन असुना श्रीकृष्णेन, गुरोः सान्दीपने

अमुना मृत नन्दनो गुरोः
सबलेना द्रुतदक्षिणी कृतः । १४५ ॥
सखि कंस वधाधि वायुना
ज्वलतो मागध वह्निषोऽमुना ।
मथुरां दहतोऽस्त्र वर्षणैः
बलहेतिः शमिता घनत्विषा । १४६ ॥
मुचुकुन्द रुषाय मन्तयन्
यवनं रोगमिवौषधेन च

मृतनन्दनः मृत पुत्रः अद्रु तदक्षिणीकृत । आश्चर्य्यं दक्षिणात्वेन प्रदत्त इत्यर्थः । सान्दीपनि मृतपुत्रानयनं दशमस्कन्धे विवृतं । १४५ ।

सखीति । हे सखि ! कंसस्य वधः नाशः तेन यः आधिः मनोव्यथा स एव वायुः वातः तेन ज्वलतः क्रुद्धस्येत्यर्थः । अतः मथुरां तदाख्यां नगरीं दहतः विनाशयतः मागधः जरासन्धः एव वह्निः बह्निः स्तस्य बलहेतिः सैन्यरूपिणी शिखा, वह्नेर्हेतिः शिखा-स्त्रियामित्यमरः । घनत्विषा मेघसवर्णेनेन अमुना, श्रीकृष्णेन अस्त्रवर्षणैः आयुधवृष्टिभिः शमिता, निर्वापिता । रूपकं । जरासन्धेन कंसवधामर्षितेन मथुराबहुवारं अवरुद्धा । श्रीकृष्णेन तत्पराजय पूर्व्वकं स्वपुरोरक्षितेति दशमस्कन्धे प्रसिद्धं । १४६ ॥

मुचुकुन्देति । रोगं औषधेनैव मुचुकुन्दस्य तदाख्यस्य इक्ष्वाकु पुत्रस्य रुषा क्रोधेन यवनं कालयवनं अन्तयन् नाशयन् अयं माधवः हरिः श्रीकृष्णः वसन्तकालीन सूर्य्य इव वृषायः यादवाः पद्मिन्य इव ता॰ शिशिरादिव विपदः विपत्तेः अत्रायत

शिशिरादिव माधवो हरि
र्विपदोऽत्रायत हृष्णि पद्मिनीः ।१४७॥
रचिता सखि विश्वकर्मणा
परिखीभूत पयोधिरस्ति या ।
स्थित दिक्पति भूति रत्न सा
वसतिर्द्वारवती नु सम्प्रति । १४८ ॥
प्रणय प्रवणास्य रुक्मिणी
द्विज हूतेन शुभेऽमुना निजं ।

अरक्षत् । उपमा । देवदानवयुद्धश्रान्तेन मुचुकुन्देन कालयवन मनाशयदिति दशमस्कन्धीय चरितमत्रानुसन्धेयं । १४७ ॥

रचितेति । हे सखि ! विश्वकर्मणा रचिता निर्मिता अपरिखा परिखाभूतः परिखीभूतः पयोधिः समुद्रः यस्याः समुद्रपरिवेष्टितेत्यर्थः स्थिताः अवस्थिताः दिक्पतीनां इन्द्रादीनां विभूतयः ऐश्वर्य्याणि कल्पद्रुमादयः सम्पदश्च यस्यां सा या अस्ति विद्यते सा द्वारवती द्वारका नगरी सम्प्रति अधुना अस्य वसतिः वासस्थानं भवतीति शेषः । १४८ ॥

प्रणयेति । हे शुभे कल्याणि ! रुक्मिणी भीष्मकसुता अस्य श्रीकृष्णस्य प्रणय प्रवणा अनुरागाधीना सती द्विजेन दूतभूतेन हूतः आहूतः निमन्त्रित इति यावत् तेन अमुना एतेन श्रीकृष्णेन निजं आत्मानं अपहार्य्य हारयित्वा सहोदरस्य रुक्मिणः अजयं पराजयं केशच्छेदनादिरूपं सहमाना अनपेक्षमाणा सती अस्य जीवितेश्वरी पत्नी अजनि शोभते ।

अपहार्य्य सहोदरां जयं
सहमानांश्चति जीवितेश्वरौ ।१४९॥
मणिमेष सुतां स्यमन्तकं
सखि सत्राजित ऐद्विशङ्कितः।
त्रसतीह जनो यतो न किं
वसु तस्मै प्रददाति सान्त्वयन् । १५० ॥
सखि जाम्बवता स्य युद्धतो
विदता राघवतां स्यमन्तकः।

रुक्मिणीहरणवृत्तान्तं दशमस्कन्धे हरिवंशे च विवृतं। अत्र काव्यत्वेन सन्दृब्धं। १४९ ।

मणिमिति। हे सखि ! एषः श्रीकृष्णः विशङ्कितः स्यमन्तक जिहीर्षया कृष्णात् जीवनापायं शङ्कितवतः सत्राजितः तदाख्यात् यादवभेदात् सुतां तत्पुत्रीं सत्यभामां स्यमन्तकं मणिं रत्नञ्च ऐत् आपत् गत्यर्थानां प्राप्त्यर्थत्वात्। इह जनः यतः यस्मात् त्रसति बिभेति सान्त्वयन् सान्त्वं कुर्व्वन् तस्मै भयहेतवे किं वसु धनं न प्रददाति सर्व्वमेव ददातीत्यर्थः। अर्थान्तरन्यासः सत्यभामा परिणय प्रस्तावो दशमस्कन्धे प्राप्तव्यः। १५० ॥

सखीति। हे सखि ! युद्धतः स्यमन्तकानयनार्थं विलीकृतात् युद्धात् अस्य श्रीकृष्णस्य राघवतां रामचन्द्रत्वं जन्मान्तरभूतमित्यर्थः विदता जानता जाम्बवता तदाख्येन भल्लूकाधिपेन स्यमन्तकः तदाख्यमणिः अपि नन्दिनी पुत्री जाम्बवती विक्रमस्य

अपि विक्रम पारितोषिकी
क्रियते जाम्बवती स्म नन्दिनी ।१५१॥
निज पूर्ब्ब तपः फलायितं
चरणाम्भोज युगं स्वयं श्रिता ।
मनुते जनुषोऽति धंन्यतां
सखि कालिन्द्यः परास्य गेहिनी ।१५२
नृशिशुः श्वशिशुन् यथा वृषान्
सखि सप्तद्रुत मन्य दुर्द्दमान् ।
कलयन्नय मेक रज्जुना
व्यवहन्नाग्नजितीं पतिव्रतां । १५३॥

पारितोषिकी क्रियतेस्म पारितोषिकरूपेणास्मै प्रादादितिभावः । रूपकं । जाम्बवती प्राप्तिचरितं दशमस्कन्धे द्रष्टव्यं । १५१ ॥

निजेति । हेसखि ! अस्य श्रीकृष्णस्य अपरा अन्या गेहिनी भार्य्या कालिन्दी निजस्य स्वस्य पूर्व्वतपसां प्राक्तन पुण्यानां फलायितं फलभूतं अस्य चरणाम्भोजयुगं पादपद्मद्वयं स्वयं श्रिता आश्रिता सती जनुषः जन्मनः अतिधन्यतां अतिप्रशंस्यत्वं मनुते जानाति रूपकं कालिन्द्युद्वाहवृत्तान्तं दशमस्कन्धे द्रष्टव्यः ।१५२॥

नृशिशुरिति । हेसखि अयं श्रीकृष्णः नृशिशुः बालकः श्वशिशून् कुक्कुर शावकान् यथा अन्यैः अपरवीरैः दुर्द्दमान् दुर्द्धरान् सप्तवृषान् वृषभान् पशुभूतानितिभावः । एकरज्जुना एकेन रश्मिना कलयन् आयत्तीकुर्व्वन् पतिव्रतां नाग्नजितीं तदाख्यां नग्नजितः पुत्रीं व्यवहत् व्यूढ़वान्, नाग्नजितीपरिणय चरितं दशमस्कन्धे द्रष्टव्यं । १५३ ॥

सखिमित्र मयं स्वकामुकी
ननुविन्दन् सहज पितृस्वसुः ।
तनयां नृपमण्डलात् बलात्
तदभिख्यां स्म समर्थयत्यलं । १५४ ॥

गुण रूप वयो मनोहरा
तनया सोपहृता पितृस्वसुः ।
अमुना दयितास्त आहृता
सखि भद्रा वनमालिका यथा । १५५ ॥

सखीति । हे सखि ! सहजं मित्रं मातुलपुत्रत्वात् कन्यायाः सहजमित्रभूतः अयं श्रीकृष्णः स्वकामुकीं निजं कामयानां पितृस्वसुः तनयां मित्रविन्दाख्यां नृपमण्डलात् राजसमूहात् बलात् बलात्कारेण बिन्दन् प्राप्नुवन् तस्याः पितृस्वसृपुत्र्याः अभिख्यां मित्रविन्देति नाम अलं अत्यर्थं समर्थयतिस्म सार्थयामास समर्थप्रदात् तत्करोतीतिण्यन्ताल्लट्। मित्रं विन्दतीति मित्रविन्दा इत्येवं नामसार्थक्यमापादयामासेतिभावः। काव्यलिङ्गमलङ्कारः। मित्रविन्दाविवाहचरितं दशमस्कन्धे स्फुटं। । १५४ ॥

गुणेति। हेसखि गुणैः सौशील्यादिभिः रूपेण सौन्दर्येण बयसा यौवनेन च मनोहरा मनोहारिणी स्वस्मै उपहृता उपढौकिता पितृस्वसुः तनया भद्रा तदाख्या राजकुमारी अमुना श्रीकृष्णेण वनमालिका यथा वनमालेव आहृता सती दयिता प्रिया आस्ते वर्त्तते। भद्रापरिणय प्रस्तावो दशमस्कन्धे द्रष्टव्यः उपमा। १५५ ॥

सखिलक्ष मयं विभिद्य ते
विरहात् स्वस्य च गण्ड पाण्डुतां ।
अपनीय विपक्ष राजका
नन मालिन्य मलं करिष्यति । १५६ ॥

इति सूक्ति मौक्तिक सरं हृदि सके
लगयन्त्य सौ निजसखि रसज्ञया ।
ग्रथितं सुनायक गुणोज्ज्वलं मुदा
भृश संज्वरं नृपसुता जहौ तदा । १५७ ॥

उद्ग्रीवोत्कतया मुहुर्नतमुखी लज्जाभरेणाथ सा ।
दृष्टा प्रेष्ठ पदाप्ति निश्चयधिया मातुर्वियोगं पुनः ।

सखीति । हे सखि ! असौ श्रीकृष्णः लक्ष्यं पणभूतं शरव्यं विभिद्य भित्त्वा स्वस्य आत्मनः, विरहाद्धेतोः ते तव गण्ड-पाण्डुतां कपोल पाण्डिमानं अपनीय अपमार्ष्य भवतीं परिणीयेत्यर्थः विपक्षराजकस्य प्रतिपक्षराजसमूहस्य आनन मालिन्यं वदनवैवर्ण्यं अलं अत्यर्थं करिष्यति । १५६ ॥

इतीति । तदा असौ नृपसुता लक्ष्मणा निजसखीरसज्ञया स्वसहचरीजिह्वया ग्रथितं रचितं सुनायकस्य श्रीकृष्णस्य मध्यमणेश्च गुणैः शौर्यादिभिः तारल्यादिभिश्च उज्ज्वलं इति पूर्वोक्ता सूक्तिं सुवचनमेव मौक्तिकसरं मुक्तामालां स्वकेस्वकीये हृदि वक्षसि चित्ते च लगयन्ती दधानासती मुदा आनन्देन भृशसंज्वरं अतिसन्तापं जहौ तत्याज । रूपकं । मञ्जुभाषिणी वृत्तं । सजसाजगौ च यदि मञ्जुभाषिणीति लक्षणात् । १५७ ॥

उद्ग्रीवेति । तदा तस्मिन्नवसरे उत्कतया उत्कण्ठया उद्ग्रीवा उन्नमितमुखी अथ अनन्तरं लज्जाभरेण मुहुःनतमुखी

खिन्ना शङ्कय च भाविनं
नृपसुतेत्येवं दशान्दोलनै ।
राक्षिप्ता भिनवां क्षणांक्षणा
मगात्कामप्य भिख्यांतदा । १५८ ॥
तदा शराणां सुमनः शरस्य
शरव्यभूता नरपालसिंहाः ।
लक्ष्यस्य मद्रेश निदेशसीमां
विभेदनेऽतेत्रुममंसत द्राक् । १५९ ॥

नम्रवदना प्रेष्ठस्य प्रियस्य श्रीकृष्णस्य पदाप्तेः पादपद्मप्राप्तेः निश्चयधिया दृढ़बुद्धा हृष्टा आनन्दिता पुनः भाविनं भविष्यन्तं मातुः जनन्याः वियोगं विच्छेदं आशङ्का च खिन्ना खेदयुक्ता सा नृपसुता लक्ष्मणा इत्येवंरूपाणां दशानां अवस्थानां आन्दोलनैः आक्षिप्ता आविष्टासती क्षणं क्षणं प्रतिक्षणं अभिनवां कामपि अनिर्व्वचनीयां अभिख्यां शोभां अगात् प्रापत् । अतिशयोक्तिरलंङ्कारः । शार्द्दूल विक्रीड़ितं वृतं । १५८ ॥

तदेति । तदा सुमनः शरस्य कामस्य शराणां वाणानां शरव्यभूताः लक्ष्यभूताः नरपालसिंहाः राजश्रेष्ठाः लक्ष्यस्य पणभूत शरव्यस्य विभेदने वेधनविषये मद्रेशस्य बृहत्सेनस्य निदेशः नियम एव सीमा मर्य्यादा तां द्राक् अत्येतुं अतिक्रमितुं लक्ष्यवेधनमन्तरेण कन्यामपहर्त्तुमित्यर्थः अमंसत इच्छुः । रूपकं । १५९ ॥

योऽभूद् विष्णुरथस्यचित्ररचना दक्षस्य तूर्णं कवेः
धीरः श्रीभुवनेश्वरः सुविदुषा मग्नस्य पुत्रोरथः।
तस्य श्रीमति लक्ष्मणापरिणये काव्ये चतुर्थः कृतौ
सर्गो व्याकृतगुण्डिचाशतक सत्काव्यस्य शेषं गतः
। १६० ॥

यइति। व्याकृत व्याख्यातं गुण्डिचाशतकं तदाख्यं सत्काव्यं उत्तमं खण्डकाव्यं येनतस्य श्रीभगवत्कविरत्न कृत गुण्डिचाशतकस्य व्याख्यां कृतवत इत्यर्थः॥
चतुर्थः सर्गः शेषंगतः समाप्तः। १६० ॥

इति श्री लक्ष्मणापरिणय व्याख्यायां चतुर्थः सर्गः समाप्तः।





## पञ्चमः सर्गः ।

रात्रिचारिरुत मर्कसारथे
रुद्गमा दिव तदाथ शासनात् ।
मद्रभूभृत इयाय शान्ततां
गीतिकाद्यखिल संसदारवः । १ ॥

मद्रपोविनय चन्द्र मुद्रितं
स्वंकराम्बुज युगं दधत्तदा ।
नम्रकन्धर उपेत्य बाहुजान्
प्रीणयन्नि दमुवाच संसदि । २ ॥

### पञ्चमः सर्गः ।

रात्रीति । अथ तदा गीतिकाद्यखिलसंसदारवः शुभगीति प्रभृति समस्त सभाध्वनिः अर्कसारथेः अरुणस्य उद्गमात् उदयात् रात्रिचारिणां निशाचराणां रुतं ध्वनिरिव मद्रभूभृतः बृहत्सेनस्य शासनात् आज्ञाया शान्ततां शान्तिं इयाय प्राप । उपमा प्रायेणास्मिन् सर्गेरथोद्धता बृत्तं । तल्लक्षणन्तु रात्परै-र्नरलगैरथोद्धता । १ ॥

मद्रप इति । तदा संसदि सभायां विनय एव चन्द्रः तेन मुद्रितं मुकुलितं स्वं स्वकीयं कराम्बुजयुगं हस्तपद्मद्वयं दधत् विनयेन कृताञ्जलिपुटः सन् नम्रकन्धरः मद्रपः बृहत्सेनः उपेत्य बाहुजान् नृपतीन् प्रीणयन् हर्षयन् इदं वक्ष्यमाणं उवाच । रूपकं । २ ।

पार्थिवा मयि ययानुकम्पया
स्व स्वकार्य्य मपहाय सङ्गताः ।
वक्ष्यमाण बचने तया मम
क्षम्यतामिव सुतस्य दुष्टतां । ३ ॥
भोः सदोहृद वराम्बुजायिता
लक्ष मेतदिह वो कषो पलः ।
विक्रमस्य कतमक्रमेण तत्
भेत्स्यते ननु भवद्भिरुच्यतां । ४ ॥
लक्ष्मणारुचिर पाणिपीड़ने
लक्षवेधन मिदं पणीकृतं ।

पार्थिवा इति । हे पार्थिवा राजानः मयि यया अनुकम्पया दयया स्वस्व कार्य्यं स्वकीयकृत्यं अपहाय त्यक्त्वा सङ्गताः अत्र मिलिता भवथइतिशेषः मम वक्ष्यमाणवचने सुतस्येव दुष्टता दोषः तया अनुकम्पया क्षम्यतां सह्यतां । उपमा । ३ ॥

भोरिति । भोः सदोहृदे सभासरसि वराम्बुजायिताः प्रकृष्ट पद्मभूताः सभायां प्रकाशमानाः राजानः एतत् लक्षं पणभूतं शरव्यं वः युष्माकं विक्रमस्य पराक्रमस्य कषोपलः निकोषपल-भूतं भवतीतिशेषः तत् लक्षं कतमक्रमेण कयापरिपाट्या भेत्स्यते व्यधिष्यते भवद्भिः युष्माभिः उच्यतां निर्णीयतां ननु तद्वेधन क्रममितिशेषः । रूपकं । ४ ॥

लक्ष्मणेति । हे पार्थिवाः लक्ष्मणायाः रुचिरपाणिपीड़ने विवाहे इदं लक्षवेधनं शरव्यभेदः पणीकृतं शुल्कत्वेन निर्णीतं

एक एक इह वो भिनत्तु तं
न्मत्कृतेन नियमेन पार्थिवाः । ५ ॥
स्तम्भमूल जलकुण्ड सम्फल
ल्लक्ष्यमीन मभिवीक्ष्य केवलं ।
प्रापयन् गुणमिदं शरासनं
विध्यतां त्रिभिरमीभि राशुगैः । ६ ॥
भारती चितिपति षियं क्षणां
स्तम्भनास्त्र कृति माद्धौ तदा ।

मयेतिशेषः इह वः युष्माकं मध्ये एक एकः एकस्यानन्तर एकः नतु समकालं सर्वे इत्यर्थः मत्कृतेन अस्मन्निरूपितेन नियमेन समयेन तत् पणभूतं लक्ष्यं भिनत्तु विध्यतु । ५ ॥

नियम प्रकार माहस्तम्भेति । स्तम्भमूले शरव्याधार भूत स्तम्भाधः प्रदेशे यः जलकुण्डः तत्र संफलन् प्रतिबिम्बितः यः लक्ष्यमीनः शरव्यभूतो मत्स्यः तं केवलं अभिवीक्ष्य दृष्ट्वा इदं पुरोदृष्टं शरासनं धनुः गुणं मौर्वीं प्रापयन् योजयन् लक्ष्यमीनादर्शनात् पूर्व्वमित्यर्थः अमीभिः पुरोदृष्टैः त्रिभिः आशुगैः वाणैः विध्यतां वारत्रयेणेत्यर्थः । ६ ॥

भारतीति । तदा इयं सद्रोक्ता भारती वाणी चितिपतिषु सभास्थ राजसु,क्षणं स्तम्भनास्त्रकृतिं स्तम्भनास्त्रकार्य्यं स्तब्धतामित्यर्थः आदधौ सम्पादयामास मद्राधिपवाक्यं श्रुत्वा सभास्थाराजानः क्षणं स्तब्धावभूवुरित्यर्थः यतः विदुषः पण्डित स्यापि जिह्वया ईदृशं वेधनक्रमनिरूपणात्मकं प्रश्नं पृच्छां

जिह्वयापि विदुषः समाहितुं
प्रश्नमीदृश मलं विलम्ब्यते। ७॥
केचि दूचुरिह लक्ष्यवेधने
मुख्यता परिणयस्य भाति यत्।
वंशशुद्धि रवधार्य्यतां क्रमे
वन्धुतोल्लसति निर्म्मले कुले। ८॥
कैरभाणि यदि नः पराक्रमो
मद्रपेन तनया पणीकृतः।

समाहितुं उत्तरदानेन समर्थयितुं अलं अत्यर्थं विलम्ब्यते। अर्थान्तर न्यासः। ७॥

केचिदिति। केचित् राजानः उचुः कथयामासुः इह लक्ष्यवेधने शरव्यभेदे परिणयस्य विवाहस्य मुख्यता प्रकृष्टोद्देश्यता भाति शोभते यत् अतः क्रमे लक्ष्यवेधन परिपाव्यां वंशशुद्धिः अन्वयविशुद्धिः अवधार्य्यतां निरूप्यतां प्रथमतः शुद्धवंशीयाः लक्ष्यं भिन्दन्त्वित्यर्थः यतः वन्धुता यौनसम्बन्धः निर्म्मले कुले विशुद्धवंशे उल्लसति शोभते। युक्तिरलङ्कारः अर्थान्तरश्च।८॥

कैरिति। कैः कैश्चद्राजभिः अभाणि उक्तं हे नृपाः यदि मद्रपेन तृपतिनेन नः अस्माकं पराक्रमः तनयाधाः स्व-पुत्र्याः पणीकृतः शुल्करूपेणनिर्द्धारितः तर्हि नृपैः राजभिः इह तस्य पराक्रमस्य उच्चताक्रमात् आधिक्य-क्रमानुसारेण क्रम्यतां लक्ष्यं विध्यतामित्यर्थः। यः पराक्रमाधिकः स एव प्रथमं लक्ष्यं विध्यत्वित्यर्थः

श्रूयतामिह तदुच्यता क्रमात्
तन्नृपाः फलतु कर्तुरीप्सितं । ६ ॥
कैश्चिदुक्तमिह रूपसम्पदा
लक्ष्मणा खलु जगद्विलक्षणा ।
लक्ष्यमाकृतिमता विभिद्यतां
प्राग्भवेत्सदृशसङ्गमोऽपिवा । १० ॥
स्त्रीगुणामृतनदीं नु मद्रजा
मुद्दिशन्नरपति र्गुणाधिकः ।
विध्यतु प्रथममित्ययं क्रमः
सम्मतोऽस्तु कतिचित्तदा जगुः । ११ ॥

तत् तस्मात् कर्त्तुः वक्तुर्मे नस्य ईप्सितं मनोरथः फलतु सिध्यतु, युक्तिरलङ्कारः । ६ ॥

कैश्चिदिति । कैश्चित् राजभिः उक्तं कथितं इह लक्ष्मणा-रूपसम्पदा सौन्दर्य्य सम्पत्त्या जगद्विलक्षणा अलौकिकी भवतीति शेषः । खलु अतः आकृतिमता सौन्दर्य्य सम्पन्नेन राज्ञा लक्ष्यं शरव्यं प्राक् प्रथमं विभिद्यतां एवं सति सदृशयोः अनुरूपयोः स्त्रीपुंसोरितिशेषः सङ्गमः भवेत् सम्भवेदपिवा युक्तिरलङ्कारः ।१०॥

स्त्रीति । गुणाधिकः दयादाक्षिण्यादिभिरुत्कृष्टः नरपतिः राजा स्त्रीगुणा एव अमृतं तस्य नदीं आधारभूतां मद्रजां लक्ष्मणां उद्दिशन् प्रथमं पूर्वं विध्यतु लक्ष्यं भिनत्त्वित्यर्थः इति अयं क्रमः लक्ष्यवेधनपरिपाटी सम्मतः आदृतः अस्तु इति कतिचित् राजानः तदा जगुः कथयामासुः काव्यलिङ्ग ।.११ ॥

यौवनाभिनवता नुपूर्विका
स्वीकृता भवतु नः कृताविह ।
यूनि यत्तु युवती प्रसीदती
त्युच्यतेस्म कतिभिः सयुक्तिकं ।१२॥

बालको भजति भागमग्रतो
नीतिरित्थ मभितः स्थितायतः ।
विध्यतां प्रथमतः कनीयसा
लक्ष्मेतदिति चापरे जगुः ।१३॥

पूज्यता प्रवयसोऽग्रतो यतः
संसदीति विधिरस्ति सर्व्वतः ।

यौबनेति । इह कृतौ लक्ष्यभेदनरूपे कर्म्मणि नः अस्माकं यौवनस्य तारुण्यस्य या अभिनवता नूतनत्वं तस्याः आनुपूर्व्विका क्रमः स्वीकृता सम्मता भवतु प्रत्यग्र-यौवनक्रमेण राजानः लक्ष्यं भिन्दन्तु इत्यर्थः यत्तु युवती तरुणी युनि युवके प्रसीदति प्रसन्ना भवति इति एवं रूपेण सयुक्तिकं युक्तियुक्तं कतिभिः राजभिः उच्यतेस्म अवोचि । युक्तिरलङ्कारः । १२ ।

वालक इति । बालकः बहूनां मध्ये अल्पवयस्कः अग्रतः प्रथमतः भागं अंशं भजति प्राप्नोति इत्थं एवं नीतिः नयः सदाचरणमिति यावत् अभितः सर्व्वतः यतः हेतोः स्थिता वर्त्तते अतः कनीयसा अस्मासु कनिष्ठेन प्रथमतः आदौ एतत्लक्ष्यं शरव्यं विध्यतां भिद्यतां इति च अन्येराजानः जगुः कथयामासुः युक्तिरलङ्कारः । १३ ।

पूज्यतेति । संसदि सभायां प्रवयसः वृद्धस्य अग्रतः प्रथमतः पूज्यता पूज्यत्वं पूजेयति यावत् भवतीतिशेषः इति एवं विधिः

तत्कथं स्थविरता क्रमो ननो
वेधनेऽस्त्विति मतं ददुः परे । १४ ॥
दूरताक्रम इहाहृतो यतः
सद्मनां बहुविदाय कर्म्मणि ।
सोऽत्र तद्भवतु लच्च वेधने
सोपपत्तिक मितीतरे जगुः । १५ ॥
अन्य उचुरिह सम्पदाधिकः
प्राक्करोतु च शरव्य वेधनं ।

सर्व्वतः सर्व्वत्र अस्ति विद्यते यतः तत् हेतोः वेधने लच्चवेधे नः अस्माकं स्थविरताक्रमः वृद्धत्वक्रम एव कथं नास्तु वृद्धत्वक्रमेण लच्चवेधनं भवत्वित्यर्थः, इति एवं मतं अपरे राजानः ददुः प्रकाशयामासुः । युक्तिरलङ्कारः । १४ ॥

दूरतेति । यतः हेतोः बहूनां विदायकर्म्मणि विसर्जनकृत्ये सद्मनां निवासानां दूरताक्रमः आहृतः भवतीतिशेषः युगपद्बहूनां विदायकृत्ये अतिदूरवर्त्ती प्रथमं सम्भाव्यत इतिभावः, तद्धेतो रत्र लच्चवेधने सः वासस्थानदूरताक्रम एव भवतु इति इतरे राजानः सोपपत्तिकं सयुक्तिकं जगुः जगदुः । युक्तिरलङ्कारः ।१५॥

अन्य इति । अन्ये राजानः उचुः कथयामासुः इह सम्पदा ऐश्वर्य्येण अधिकः उत्कृष्टः प्राक् प्रथमं शरव्यवेधनं लच्चवेधं करोतु एव मादिकैः इत्यादिभिः पूर्वोक्तैः मतैः अभिप्राय प्रकाशक वाक्यैरेव ऊर्म्मिभिः लहरीभिः संकुले पूर्णे सदसीव

एव मादिक मतोर्मि सङ्कुले
मद्रपान्त रचलत्सदोह्रदे । १६ ॥
लक्ष्मीन मथ भूप विस्तर-
द्वादजाल कलितं भिदामितं ।
वेधन क्रम निरुक्ति सायकै
र्वीक्ष्य मद्रपतिजा भजद्विधुं । १७ ॥
नारदो गिरम्मृताभि वर्षणै
र्लक्ष्मीन परिखेलना शया ।

ह्रदे मद्रपस्य वृहन्मनस्य अन्तः अन्तःकरणं अचलत् निश्चया भावात् चचाल । रूपकं काव्यलिङ्गञ्च । १६ ॥

लक्ष्मीनमिति । अथ अनन्तरं मद्रपतिजा लक्ष्मणा लक्ष्मीनंपण भरवाभूत मत्स्यं भूपानां राज्ञां विस्तरन्ति विस्तृतानि यानि वादजालानि विवादसमूह रूपाः आनायाः ( जालं समूह आनाय गवाक्षजालकादपीत्यमरः) तैः कलितं आक्रान्तं वेधनक्रमि लक्ष्यभेदपरिपाट्यां याः निरुक्तयः पृथक् निश्चयवचनानि ताएव सायका वाणाः तैः भिदां विभिन्नरूपतां भेदनञ्च इतं प्राप्तं वीक्ष्य दृष्ट्वा लक्ष्यवेधनं अन्यथाभूतं ज्ञात्वेत्यर्थः । विधुं श्रीकृष्णं अभजत् मस्मारेतिभावः । रूपकं । १७ ॥

नारद इति । तदा नारदः देवर्षिः नारं जलं ददातीति नारदो मेघश्च लक्ष्यमीनेन भरवाभूत मत्स्येन यत् परिखेलनं राज्ञां वीर्य्यपरीक्षा परीक्षणार्थं खेला तदेव लक्ष्यसंख्यक मत्स्यानां क्रीडा तस्मिन् या आशा तया हेतुना गिरम्मृतानां

वादधूलि पटलञ्च भूभृतां
संजिहीर्षुरुदियाय खे तदा । १८ ॥
देव दानव विवाद नाटिका-
सूत्रधार ऋषिरेष साम्प्रतं ।
लक्ष्मणा करुणया वशीकृतो
लक्षविघ्न कलिमैच्छदर्दितुं । १९ ॥
राजराजिकलहः कलिप्रिये
वीक्षिते तमइवोष्णदीधितौ ।

वाचामेव जलानां अभिवर्षणैः भूभृतां राज्ञां गिरिणाञ्चेतिगम्यते वादाः लक्ष्यवेधन क्रमविवादा एव धूलयः रजांसि तेषां पटलं समूहं संजिहीर्षुः संहर्त्तुमिच्छुः सन् खे आकाशे उदीयाय उदितोबभूव तदा नारदः राज्ञां लक्ष्यवेधन क्रमविवादं निराकर्त्तुं आकाशे प्रचकाश इत्यर्थः । रूपकं । १८ ॥
कलिप्रियस्यर्षेः विवादमीमांसकत्वे हेतुमाह—

देवेति । देवदानवानां सुरासुराणां विवादा एव नाटिकाः दृश्यकाव्यविशेषाः तेषां सूत्रधारः प्रवर्त्तक इत्यर्थः एषः ऋषिः नारदः साम्प्रतं अधुना लक्ष्मणायां मद्रराजपुत्र्यां या करुणा दया तया वशीकृतः अधीनः सन् लक्ष्यस्य शरव्यस्य विघ्नभूतं कलिं कलहं अर्दितुं नाशयितुं ऐच्छत् इयेष । काव्यलिङ्गं ।१९ ॥

राजेति । उष्णदीधितौ सूर्य्ये वीक्षिते दृष्टे सति तम इव अन्धकार इव कलिप्रिये नारदे वीक्षिते दृष्टे सति राजराजि-कलहः नृपाणां लक्ष्यवेधनविवादः नाशं लोपं आप प्राप च पुनः सदः सरोवरे सभासरसि सभ्यपद्मानां सभासदामेव पद्मानां

नाश्रमाप च सदः सरोवरं
सभ्यपङ्क्ततिरुत्थिति मुदा । २० ॥
नारदाङ्घ्रि नखरामृतद्युते
र्भूभुजां मुकुटं रत्न तारकाः ।
सेवनं विदधुरत्र यत् स्वतो
नाद्भुतं विधिरयन्नु शाश्वतः । २१ ॥
मद्रराज दुहितु स्व सत्पति-
प्रापणाय परमासनस्थितं ।
सा सभा त मृषभं तपस्यतां
स्वी चकारपति मिष्टमर्च्चितं । २२ ॥

ततिः समूहः मुदा हर्षेण उत्थिति उत्थितं उद्गमञ्च आप प्राप । उपमा । रूपके । २० ॥

नारदेति । अत्र सभायां नारदस्य अङ्घ्रिनखरः पादनखर एव अमृतद्युतिः चन्द्रः तस्य सेवनं सेवां कर्म्म भूभुजां राज्ञां मुकुटरत्नानि किरीटमणय एव तारकाः नक्षत्राणि कर्त्तृ रः स्वतो विदधुः स्वयं विहितवत्यः यत् तत् अद्भुतं विस्मयकरं न, नु अयंविधिः सदाचरणं शाश्वतः प्रशस्तसिद्धः अस्तीतिशेषः । रूपकं । २१ ॥

मद्रेति । च पुनः सा सभा स्वयम्बरसभा परमासनस्थितं पराद्ध्यासनासीनं अर्च्चितं पाद्यादिभिः पूजितं तपस्यतां ऋषिणां ऋषभं श्रेष्ठं तं नारदं मद्रराजदुहितुः लक्ष्मणायाः सत्पतिप्रापणाय अनुरूपवर लम्भनाय इष्टं अभिलषितं पतिं स्वीचकार स्वीकृतवती नारदस्तदासभेशः लक्ष्यवेध कालि-नाशार्थं सभापतित्वेन वृत इत्यर्थः । रूपकं । २२ ॥

देव बन्दित ऋषिः चितिस्थितैः
पाद्य मुख्यबलिभिः समर्च्चितः।
तोषमाप बिनयेन सज्जनो
याबतोपकरणै र्नतुष्यति। २३॥
धर्म्म मूर्त्ति रथ धर्म्मजः सदः
कान्तिकीर्त्ति शुभकेतु दण्डतां।
उत्थितो बिरचय न्निवासना
द्व्याजहार मितवाक् कृताञ्जलिः।२४॥

देवेति। देवैः इन्द्रादिभिः वन्दितः नमस्कृतः दिव्योपचारैः पूजित इत्यर्थः ऋषिः नारदः चितिस्थितैः भूलोकोभूतैः पाद्यमुख्य बलिभिः पाद्यादि पूजोपकरणैः समर्च्चितः सम्यक् पूजितः सन् तोषं सन्तोषं आप प्राप, हि सज्जनः बिनयेन याबतापरिमाणेन तुष्यति उपकरणैः पूजासामग्रीभिः तावता न तुष्यति अर्थान्तर-न्यासः। २३॥

धर्म्ममूर्त्तिरिति। अथ नारदस्य सभापतित्वेन बरणानन्तरं मितवाक् स्वल्पवादी सत्यवक्तृत्वात् धर्म्ममूर्त्तिः धर्म्मस्वरूपः धर्म्मपुत्रत्वात् पुण्यात्मत्वाच्च धर्म्मजः युधिष्ठिरः आसनात् उत्थितः उत्तिष्ठन् सदसः सभायाः या कान्तिकीर्त्तिः शोभाहेतुक कीर्त्तिः तस्याः शुभकेतुदण्डतां मङ्गलध्वज यष्टित्वं बिरचयन् सभां शोभयन्नित्यर्थः कृताञ्जलिः सन् व्याजहार वक्ष्यमाणं जगादेत्यर्थः। रूपकं। २४॥

स्वेच्छया नु कृपयानुकम्पया
लक्ष्मणा सुदशया पिवा भवान् ।
आगतश्चिर तृषार्त्त चातका
नभ्रवृन्द मिवनोधिनोत्यलं । २५ ॥
प्राप्तिरत्र भवतो विना मधुं
माधवी सुमनसो यथा द्भुता ।
भाति नष्टनय भूभृतां तमो-
लुप्तवर्त्म न दुवैन्दवोदयः । २६ ॥

युधिष्ठिरोक्तिमाह—

स्वेच्छयेति । स्वेच्छया निजेच्छानुसारेण नु वा कृपयानुकम्पया दीनेषु दयया अपि लक्ष्मणायाः सुदशया शुभादृष्टेन हेतुना आगतः अत्रोपस्थितो भवान् चिरतृयार्त्तान् चिरपिपासितान् चातकान् पक्षिविशेषान् अभ्रवृन्दं मेघमण्डलमिव नः अस्मान् अलं अत्यर्थं धिनोति प्रीणयति । उपमा । २५ ॥

प्राप्तिरिति । मधुं वसन्तं विना माधवीसुमनसो यथा वासन्तीपुष्पसेव अद्भुता आकस्मिकत्वात् आश्चर्यावहा अत्र भवतः प्राप्तिः आगमनमित्यर्थः तमसा अन्धकारेण लुप्तं अप्रकाशितं वर्त्म मार्गों यस्य तस्य जनस्य ऐन्दवोदय इव चन्द्रोदय इव नष्टनयानां अदृष्टनीतीनां अनिश्चितलक्ष्यविधान क्रमाणामितियावत् भूभृतां राज्ञां ग इति शेषः भाति शोभते । उपमे । २६ ॥

देवदानव कदम्बके सुधा-
भागवादवति योषिदाकृतिः ।
दानवारिरिव भूपमण्डले-
ऽत्राविरस्ति च भवान् विवादिनि ॥ २७ ॥
वेधनक्रम विवाद मार्गणैः
लक्ष्यमेत दिह भिद्यते नृपैः ।
संशयाय तनुजासमर्पणं
मद्रपस्य भवतीति विस्मयः । २८ ॥
क्ष्माभुजामिह विवाद कर्द्दम
क्षिप्त निश्चयमणिं वचोऽमृतैः ।

देवेति । सुधायाः अमृतस्य भागो विभागः यः विवादः तद्वति तद्विशिष्टे अमृतार्थं विवदमान इत्यर्थः देवदानवकदम्बके सुरासुर समूहे योषिदाकृतिः मोहिनीमूर्त्तिः दानवारिः विष्णुरिव विवादिनि लक्ष्यवेधनार्थं विवदमाने अत्र राजमण्डले भवान् आविरस्ति आविर्भवति । उपमा । २७ ॥

वेधनेति । इह नृपैः राजभिः वेधनक्रमे लक्ष्यवेधनक्रमे ये विवादाः त एव मार्गणाः शराः तैः करणैः एतत् लक्ष्यं शरव्यं भिद्यते अन्यथाक्रियते विध्यते च मद्रपस्य तनुजासमर्पणं कन्यादानं संशयाय सन्देहाय भवति कन्यादाने सन्देहो भवतीत्यर्थः इति विस्मयः आश्चर्य्यं भवति एकैः लक्ष्यं भिद्यते अन्यस्मै कन्यासमर्पणमित्यसङ्गत्यलङ्कारः । २८ ॥

क्ष्माभुजामिति । इह क्ष्माभुजां राज्ञां विवादे लक्ष्यवेधक्रम कलह एव कर्द्दमे पङ्के क्षिप्तं पतितं अज्ञातमितियावत् निश्चयं

चालयन् करुणया शुलक्ष्मणा
क्षेमसाधन कृते प्रदर्शया । २९ ॥
कोकिलालि कल मन्यपक्षिणः
कालवेदिन इव क्षपात्यये ।
एव मेव मिति पार्थिवा जगुः
पार्थसूक्त मनुमोद्य तत्र तत् । ३० ॥
नारदो रदमयूख चन्द्रिका-
धौत संसदथ राज मण्डलं ।

अनेन प्रथमं लक्ष्यं भिद्यत इति निर्णयमेव मणिं रत्नं करुणया दयया वचोमृतैः बचनामृतैः चालयन् परिष्कुर्व्वन् लक्ष्मणायाः क्षेमसाधनकृते मङ्गलसम्पादनार्थं आशुशीघ्रं प्रदर्शय प्रकाशय त्वमितिशेषः निर्णयं कथयेत्यर्थः । रूपकं । २९ ॥

कोकिलालि कलमिति । क्षपात्यये निशावसाने कालवेदिनः समयसूचकाः अन्ये अपरे दात्यूहादयः पक्षिणः शकुनाः कोकिलालिकलं पिककुलरुतमिव तत्र सदसि तत् पूर्व्वोक्तं पार्थसूक्तं युधिष्ठिरसुभाषितं अनुमोद्यस्वीकृत्य एव मेवं यथार्थ मेतदिति जगुः कथयामासुः । उपमा । ३० ॥

नारद इति । अथ पार्थिवानुमोदनानन्तरं अत्र सभायां रदमयूखैः दन्तकिरणैरेव चन्द्रिकाभिः ज्योत्स्नाभिः धौता उज्ज्वलिकृता संसत् सभायेन तथोक्तः नारदः राजमण्डलं नृपसमूहं नन्दयन् प्रीणयन् संशयः लक्ष्यविधनक्रमसन्देह एव शुङ्ग विषं । इङ्गडन्तुगरलं विषमित्यमरः । तस्य गारुडमन्त्रं

नन्दय न्नवदद्‌त्र संशय-
स्पृड़ गारुड़ मनुं वचोऽमृतं । ३१ ॥
भूभृतो यदि भवन्त आनता
मामके वचसि निर्णयेच्छिणः ।
वेधयामि भवतः क्रमादहं
स्थीयतां ममसुखावलोकिभिः । ३२ ॥
सूत्रधार इव नाटके नटं
प्रेरयामि यमहं सपार्थिवः ।
निर्विवाद मुपयात्विमां कृतिं
कर्तुमत्र न पुनर्विचारणा । ३३ ॥

गारुडमन्त्रस्वरूपं संशय भञ्जकमित्यर्थः वचोऽमृतं वचनामृतं अवदत् अकथयत् रूपकं । ३१ ॥

नारदोक्तमाह—

भूभृत इति । हे भूभृतः ! राजानः ! आनताः मयि नम्राः भवन्त मामके मदीये वचसि वचने निर्णयेच्छिणः निश्चयापेच्छिणो यदि तर्हि अहं भवतः युष्मान् क्रमात् क्रमशः वेधयामि लक्ष्यवेधनं कारयामि मम मुखावलोककैः स्थीयतां भवद्भिर्ममादेशं अपेक्ष्य स्थीयतामित्यर्थः । ३२ ॥

सूत्रधार इति । नाटके दृश्यकाव्यप्रयोगे सूत्रधारः नटनेता नटमिव अहं यं राजानं प्रेरयामि लक्ष्यवेधनार्थं प्रेषयामि सः पार्थिवः इमां कृतिं लक्ष्यवेधनरूपं कार्यं कर्तुं निर्विवादं उपयातु गच्छतु अत्र अस्मिन् विषये पुनः विचारणा विचारो नास्ति । उपमा । ३३ ॥

मागधं प्रथम संप्रचोदना
मान्यतो पधिदृगन्त संज्ञया।
भाविभङ्ग भवमान नाशनं
संगमय्य सदिदेश वेधने। ३४॥

राजराजिमवरुध्य दर्पितो
लक्ष्यवेधन पुरः प्रचोदितः।
सभ्य मण्डलमवैत्तृणायसः
प्राप्तसत्कृति रुपोद्दलेत्खलः। ३५॥

मागधमिति। सः नारदः मागधं जरासन्धं प्रथमसम्प्रचोदना लक्ष्यवेधनार्थं प्राक् प्रेरणैव या मान्यता सम्मानं सैव उपधिः कपटं यस्मिन् तत् भावि भविष्यत् भङ्गभवं पराजयजनितं मान नाशनं मानहानिं सङ्गमय्य प्रापय्य वेधने लक्ष्यवेधने दृगन्त संज्ञया नेत्रप्रान्तसूचनया दिदेश आदिष्टवान्। नारदः प्रथमं भविष्यन्मानहान्यर्थं मागधं दृष्टिसंज्ञया लक्ष्यवेधने प्रेरयामासेत्यर्थः। अपह्नवः। ३४॥

राजराजिमिति। राजराजिं राजन्य समूहं अवरुध्य कारागारे क्षिप्त्वा दर्पितः गर्व्वितः सः मागधः लक्ष्यवेधने पुरः प्रचोदितः प्रथमप्रेरितः सन् सभ्यमण्डलं सभास्थ राजवृन्दं तृणाय अवैत् तृणवदवमेन इत्यर्थः प्राप्तसत्कृति लब्धसत्कारः सत्कृत इति यावत् खलः दुर्ज्जनः उपोद्दलेत् उद्रिक्तो भवेत्। अर्थान्तरन्यासः। ३५॥

मत्तकुञ्जर इवाद्रि शृङ्गतो
मञ्चकादवतरन् जरासुतः।
अक्षिलक्ष्य मपिलक्ष्य मावहन्
लक्ष्मणां स बुबुधे स्वपाणिगां। ३६॥

बध्नता परिकरं धनुर्ग्रहे
दक्षिणेतर भुजः परिस्फुरन्।
वारयन्निव ततोऽमुनाधरं
दंशता करतलेन ताड़ितः। ३७॥

मत्तकुञ्जर इति। सः जरासुतः जरासन्धः मत्तकुञ्जरो मत्तहस्ती अद्रिशृङ्गतः पर्व्वतशिखरादिव मञ्चकात् अवतरन् लक्ष्यं शरव्यं-अक्षिलक्ष्यं चक्षुर्ग्राह्यं दृश्यमित्यर्थः आवहन् कुर्व्वन्नपि लक्ष्यम्भश्यन्नपीत्यर्थः लक्ष्मणां स्वपाणिगां नजकर-गतां बुबुधे लक्ष्यवेधन कृतित्व निश्चयादिति भावः। उपमा-तिशयोक्ती। ३६॥

बध्नतेति। धनुर्ग्रहे धनुर्ग्रहणविषये परिकरं नीवीं बध्नता धनुर्ग्रहणार्थमुद्योगं कुर्व्वता अमुना जरासन्धेन परि-स्फुरन् उल्लसन् पराजयसूचनार्थमितिभावः अतः ततः धनु-र्ग्रहात् वारयन् निवारयन्निवस्थितः दक्षिणेतरभुजः वामबाहुः अधरं ओष्ठं दंशता सता करतलेन ताड़ितः वृथानिवारक-त्वात्प्रहृतः इव किं प्रकृतेतु आस्फालित इत्यर्थः। उत्प्रेक्षा। ३७॥

चाप यष्टिमथ मुद्दधत् तदा
तिष्ठिपन्नतमुखो यथा स्थितां।
लक्ष्मणासुभिरथोद्गतैः स्थितं
कण्ठतः प्रतिनिवृत्य पूर्ब्बवत्। ३८॥
पश्यतां हसित चन्द्रिकाः सभां
भासयन्त्य उदिता स्तदा भृशं।
मागध क्षितिप पक्षवर्त्तिना
माननाम्बुजततो रमुद्रयन्। ३९॥

चापयष्टिमिति। अयं जरासन्धः तदा तस्मिन्नवसरे चापयष्टिं धनुर्द्दण्डं उद्दधत् उत्तोलयन् नतमुखः नम्रवदनः सन् यथा स्थितां पूर्ब्बवदवस्थितां अतिष्ठिपत् सज्यां कर्त्तुमसमर्थः सन् स्थापयामास अथ उद्गतैः जरासन्ध धनुरुत्तोलन दर्शनाद्वहिर्गन्तु मुद्युक्तैः लक्ष्मणायाः असुभिः प्राणैः कण्ठतः गलप्रदेशात् प्रतिनिवृत्य परावृत्य पूर्ब्बवत् स्थितं सुस्थमवस्थितं जरासन्धे वैफल्यदर्शनादितिभावः। अतिशयोक्तिः। ३८।

पश्यतामिति। तदा जरासन्धपराजयावसरे पश्यतां दर्शकानां हसितानि उपहसितान्येव चन्द्रिकाः ज्योत्स्नाः सभां भृशं भासयन्त्यः दीपयन्त्यः उदिताः प्रकाशमानाः सत्यः मागध क्षितिपस्य जरासन्धस्य पक्षवर्त्तिनां सपक्षानां आननाम्बुजततीः मुखपद्म समूहान् अमुद्रयन् मुद्रयामासुः अवमाननदुःखादित्यर्थः, रूपकं। ३९॥

सत्सु विश्रुत गुणेषु राजसु
प्राङ्नियुक्ति बहुमान मापसः ।
नारदानुमत एव मागधो
निस्पृहैरपि खलाद्बिभीयते । ४० ॥

बाणआप्य तदनु प्रचोदनां
बाणवत्सुरमुनेर्विनिःसृतः ।
लक्ष्यदेश मुपगम्य पाणिभिः
सज्यमारभत सेवितुं धनुः । ४१ ॥

सत्स्विति । विश्रुत गुणेषु प्रथित पराक्रमादिषु राजसु नृपेषु युधिष्ठिरादिषु सत्सु विद्यमानेषु नारदेनानुमतः आदिष्टः सः मागधः जरासन्धः प्राङ्नियुक्तिः लक्ष्यवेधार्थं प्रथमनियोग एव बहुमानं सम्मानं तत् आप प्रापेव, हि निस्पृहैः निरीहैरपि खलात् दुर्ज्जनात् भीयते त्रस्यते। लोकोपद्रवशान्त्यर्थं नतु स्वोपकारार्थं मित्यर्थः। अर्थान्तरन्यासोऽलङ्कारः। ४० ॥

बाणइति । तदनु जरासन्धप्रत्यावर्त्तनान्तरं बाणः बलिपुत्रः सुरमुनेः नारदस्य प्रचोदनां लक्ष्यवेधार्थं प्रेरणां आप्य प्राप्य आङ्पूर्व्वादाप्धातोः ल्यप् । बाणवत् शरइव विनिर्गतः अतिशीघ्रं निःसृतः सन्, लक्ष्यदेशं शरव्यप्रदेशं उपगम्य गत्वा पाणिभिः हस्तैः सहस्रसंख्यकैरित्यर्थः धनुः सज्यं, गुणयुक्तं सेवितुं कर्त्तुमितियावत् आरभत् आरब्धवान् । उपमा ।
। ४१ ॥

तं सहस्रभुजजुष्ट कार्मुकं
शङ्कुरूढ़ पृथु वृश्चिकाकृतिं ।
लक्ष्मणाक्षि पदघट्टिताटनी
प्राप्य विद्ध मिव कण्टकैरभूत् । ४२ ॥

चाप मानमयितुं नपारय-
न्नात्मजो निजभुजावनं बलेः ।
प्रापयद्बहु गतोन्दुरु ग्रहा
शक्यतोत्थ लघुतां जनोदितां । ४३ ।

तमिति । लक्ष्मणायाः अक्षि चक्षुः सहस्रभुजैः सहस्र संख्यकबाहुभिः जुष्टं रक्षितं कार्मुकं धनुः येन तं अतः शङ्कौ कीलके रूढ़ः आरूढ़ः पृथुः स्थूलः यः वृश्चिकः तस्येव आकृति-र्यस्य तं पदेन पादेन घट्टिता अवष्टब्धा अटनी धनुष्कोटी येन तं तं बाणं प्राप्य दृष्ट्वेत्यर्थः कण्टकैः विद्धं क्षतमिवाभूत् । बाणस्य धनुर्ग्रहणं दृष्ट्वा लक्ष्मणाचक्षुः दुःसह वेदनमभूदित्यर्थः उपमोत्प्रेक्षे । ४२ ॥

चापमिति । बलेः आत्मजः बाणः चापं धनुः नमयितुं नपारयन् अक्षमः असमर्थः सन् जनैः दर्शकैः उदितां उक्तां बहून् अनेकान् जनान् गता प्राप्ता उन्दुरुग्रहे मूषिकग्रहणे या अशक्यता असमर्थता तया उत्थां उद्भूतां लघुतां लाघवं बहुभि-र्मूषिको न गृह्यत इति प्रवादजनितलाघवं भुजावनं बाहु-समूहं प्रापयत् समगमयत् । निदर्शना । सहस्रसंख्यकबाहुभिः धनुर्नमनासमर्थत्वा द्बहुभिर्मूषिको न गृह्यत इति प्रवादो-द्भूतलाघवं पात्रमभूदित्यर्थः । ४३ ॥

विष्णुवाहन भया दहीश्वितु
भोगमण्डल दशां भुजावने ।
प्रासर न्निगमयन् सभागृहा-
द्वीतगर्व्व बलिजो विलज्जितः । ४४ ॥

तत्परं नरकमीरितं जना
स्तालजंघ मुरसा भुजश्रिया ।
गोपुरारमथो पुरार्गलं
निर्जयन्त मुपलभ्य विस्मिताः । ४५ ॥

विष्णुवाहन भयादिति । वीतगर्व्वः अपगतदर्पः बलिजो-बाणः विष्णुवाहनभयात् गरुड़भीत्या अहीश्वितुः सर्पराजस्य भोगमण्डलदशां फणासमूहावस्थां सङ्कोचनमित्यर्थः भुजावने बाहुसमूहे निगमयन् प्रापयन् विलज्जितो लज्जितः सन् सभागृहात् प्रासरत् निर्जगाम । निदर्शना । ४४ ॥

तत्परमिति । तत्परं तदनन्तरं जनाः लोकाः ईरितं नारदेन तद्वधनाय प्रेरितं कालजङ्घं दीर्घजङ्घाविशिष्टं उरसा वक्षसा गोपुरारं पुरद्वारकपाटं अथो भुजश्रिया बाहुशोभया पुरार्गलं नगरविष्कम्भं निर्जयन्तं तिरस्कुर्व्वन्तं गोपुरन्तुपुरद्वारं, कपाटमररं तुलेत्र तद्विष्कम्भेर्गलं ननेति-चामरः । नरकं तन्नामानं असुरविशेषं उपलभ्य दृष्ट्वेत्यर्थः विस्मिताः आश्चर्य्यान्विता अभवन्निति शेषः । उपमा यथा संख्यकाव्यलिङ्गालङ्काराः । ४५ ॥

लक्ष्यदेश मभिगच्छतः सभा
तस्य कुण्डलरुचा विदीपिता।
द्राङ् निमीलित बिलोचनै र्जनैः
स्तम्भितैः क्षणमिवास्त चित्रिता ।४६॥
वीक्ष्य लक्ष्यगत दुःख लक्ष्यतां
निर्विलक्ष इव नन्दनः क्षितेः।
अक्षि दोष जनकं वयोऽत्ययं
धिक् चकार बिनिवर्त्त्य सत्वरं। ४७ ॥
प्रेक्षका जगुरयं दृथोन्नतः
शाल्मलिद्रुम इवाल्प सारकृत्।

लक्ष्यदेश मिति। लक्ष्यदेशं शरव्यप्रदेशं अभिगच्छतः तस्य नरकासुरस्य कुण्डलयोः अदितोकर्णानीतयोरित्यर्थः। रुचा कान्त्या विदीपिता उज्ज्वलीकृता सभा द्राङ्निमिलितानि हठान्मुद्रितानि लोचनानि येषां तैः स्तम्भितैः सञ्जातस्तम्भैः जनैः सभास्थै रित्यर्थः उपलक्षिता सती क्षणं चित्रिता आलिखितेव आस्त अभवत्। उत्प्रेक्षा काव्यलिङ्गं। ४६॥

वीक्ष्येति। क्षितेः भूमेः नन्दनः पुत्रो नरकः लक्ष्यगतां शरव्यस्थितां दुःखलक्ष्यतां दुर्निरीक्ष्यत्वं दुर्लक्ष्यत्वञ्च वीक्ष्य ज्ञात्वा निर्विलक्षः निर्लज इव सत्वरं विनिवर्त्त्य लक्ष्यदेशा-त्प्रत्यावृत्य अक्षिदोषस्य चक्षुर्विकारस्य दर्शनाशक्यत्वस्य जनकं उत्पादकं वयसः यौवनस्य अत्ययं अतिक्रमं वृद्धत्वमित्यर्थः धिकचकार तिरस्कारं। समाधिरलङ्कारः। ४७॥

प्रेक्षका इति। प्रेक्षका दर्शका जगुः कथयामासुः अयं नरकः शाल्मलीद्रुमइव वृथोन्नतः वृथादीर्घाकारः अल्पसार

हासतूल जनको जनव्रजे
स्वप्नतोऽपि न कदापिलज्जितः। ४८ ॥
दन्तवक्र मथ दन्त शोभया
संहसन्त मिव शर्व्व पर्व्वतं।
रुद्धहास ऋषिरत्र कृच्छ्रतो
व्यादिदेश स शरव्य वेधने। ४९ ॥
लक्ष्मणाप्ति वदवेत्य नारदा-
च्चप्रि मुच्चतर मञ्चका दसौ।

भृत् जनव्रजे लोकसमूहे हासानामुपहासानां तूलानामिव जनकः उत्पादकः सन् कदा कस्मिन्नपि काले स्वप्नतः स्वप्नावस्थाया मपि न लज्जितः न लज्जते। उपमा। ४८ ॥

दन्तवक्रमिति। अथ नरक प्रत्यावर्त्तनानन्तरं सः ऋषिः नारदः दन्तशोभया शर्व्व पर्व्वतं कैलासमुद्दिश्येत्यर्थः संहसन्तं उपहसन्तमिवस्थितं दन्तवक्रं तन्नामानं राजानं कृच्छ्रतः कष्टेन रुद्धः अवरुद्धः हासः दन्तवक्रस्वरूपदर्शनजनितइत्यर्थः। येन सः सन् अत्रसभायां शरव्यवेधने लक्ष्यवेधने व्यापिदेश आदिष्टवान्। उत्प्रेक्षाकाव्यलिङ्गे। ४९ ॥

लक्ष्मणेति। असौ दन्तवक्रः नारदस्य आप्तिं लक्ष्य-वेधार्थमादेशं लक्ष्मणायाः आप्तिवत् प्राप्तिमिव अवेत्य ज्ञात्वा उच्चतरमञ्चकात् अत्युन्नतासनात् उत्पतन् उत्थितः सन् जनैः निमेषमात्रं ईक्षितः अवलोकितः रसन् सशब्दः अथवा असन्

उत्पतन्निमिषमात्र मीक्षितो
लक्ष्यदेश मगमत् जनैर्हसन् । ५० ॥
श्टङ्गमेक मय मुद्दधत्तत
श्चाप मंसमधिरोप्य चापरं ।
तोलयन् भुजयुगेन भारतः
पेषितोपि दशनैः सुरचितः । ५१ ॥
दन्तलग्न धरणी रजांसिकै
नोप्यलोकिषत तस्य लज्जया ।

खलः लक्ष्यदेशं अगमत् अतिशीघ्रं जगामेत्यर्थः। उपमातिशयोक्ति। ५० ॥

शृङ्गमिति। अयं दन्तवक्रः एकं शृङ्गं धनुष्कोटीं उद्दधत् उत्तोलयन् ततः तदनन्तरं चापं धनुः अंसं स्कन्धं अधिरोप्य धनुर्मध्यं स्कन्धे निधाय च पुनः अपरं अन्यतश्शृङ्गं तोलयन् उत्थापयन् सन् भारतः धनुषः गुरुतया पेषितः भूतले पोथितोऽपि दशनैः स्वदन्तैरतिदीर्घैरित्यर्थः सुरचितः भूव्यवधानान्नाति पेषितोऽभूत्। स दन्तघातं भूमौपपातेत्यर्थः, अतिशयक्तिः ।५१॥

दन्तेति। लज्जया कर्त्र्या हासैः लोकोपहासैः शुक्लायाः सदसः सभायाः गलग्रहं गलग्रहपूर्व्वकं प्रेरितस्य निष्काशितस्य च पुनः नतानन नम्रमुखं यथातथा यतः गच्छतः अस्य दन्तवक्रस्य दन्तेषु लग्नानि संसृष्टानि धरणीरजांसि धराधूलयः कर्म्म कैरपि जनैः नालोकिषत न दृष्टानि। लोकहासधुक्ती

हास शुक्ल सदृशो गलग्रहं
प्रेरितश्च च यतो न ताननं । ५२ ॥
तत्परं सुरमुनि प्रचोदना
वात्यया तृणवदुत्पतन् लघुः ।
सात्वतीसुत उवाच घर्घरं
कृत्य पूर्व्वमपटु र्विकत्थते । ५३ ॥
रुक्मिणीहरण वन्न वर्त्ततां
मत्रसंसदि मुने हठग्रहः ।
ब्राह्ममत्र भवतोऽह माश्रये
दुर्विनीत विहिता नयोदये । ५४ ॥

कृतायाः सभायाः लज्जया नम्रमुखं गच्छतोऽस्य दन्तभ्रमरजसां शुक्लता निम्नवर्त्तित्वाचादृष्टत्वमिति भावः । काव्यलिङ्गं । ५२ ॥

तत्परमिति । तत्परं दन्तवक्त्रनिर्गमनानन्तरं सुरमुनेः नारदस्य प्रचोदनैव वात्या तया उत्पतन् तृणवत् लघुहृदय इत्यर्थः सात्वतीसुतः शिशुपालः घर्घरं उवाच घर्घरस्वरं वचः माणं जगाद अपटुरसमर्थः कृत्यपूर्वं कृतेः कार्य्यस्य प्राक् विकत्थते श्लाघते । रूपकोपमार्थान्तरन्यासाः । ५३ ॥

रुक्मिणीति । मुने ! हे महर्षे ! अत्र संसदि सभायां रुक्मिणीहरणवत् हठग्रहो बलत्कारेण कन्याहरणमित्यर्थः न वर्त्ततांभवतु, दुर्व्विनीतैः दुष्टैः विहितः कृतः यः अनयोदयः अन्यायागमः तस्मिन् सति अहं अत्रभवतः पूज्यस्य तव ब्रह्मं ब्रह्मण्यमाश्रयेऽवलम्बे यदि कश्चिदन्यायो भविष्यति तर्हिभवान् ब्रह्मण्येन तत्प्रतिकारं करिष्यतीतिभावः । उपमा । ५४ ॥

मैव मैव मितिवादिनं मुनिं
स प्रणम्य निभृतस्मितं द्रुतं।
चापमाप बलशालिता तुला-
दण्ड मत्त मुरगं त्वहं कृतीः। ५५॥

कार्म्मुकं सकल सद्बलं व्ययं
यत्नवानपि शशाकनो यथा।
कर्त्तु मुत्थित मयं तथा ननं
हृद्गतां मिव चुचुम्बिषु ह्रियं। ५६॥

मैवमिति। सः शिशुपालः मैवमेवं एवं माभविष्यतीति वादिनं कथयन्तं मुनिं निभृतस्मितं विघ्नाभावश्रवणजनिता नन्दोत्थमन्दहास गोपनपुरःसरं प्रणम्य बलशालितायाः बलिष्ठत्वस्येत्यर्थः तुलादण्डं परिमाणदण्डस्वरूपं अहङ्कृतीः अभिमानान् अत्तुं नाशयितुं उरगं सर्पस्वरूपं चापं धनुः द्रुतमाप शीघ्रं प्राप धनुर्निकटं शीघ्रं जगामेत्यर्थः। रूपकं। ५५॥

कार्म्मुकमिति। अयं शिशुपालः सकलसद्बलव्ययं समस्त बलव्ययपूर्ब्बकं यत्नवान् चेष्टमानोऽपि यथा येन प्रकारेण कार्म्मुकं धनुः उत्थितं कर्त्तुं उत्थापयितुं नो शशाक तथा तेन प्रकारेण हृद्गतां हृदयस्थितां ह्रियं लज्जां चुचुम्बिषु चिम्बितुमिच्छुरिव स्थितं आननं स्वमुखं उत्थितं कर्त्तुं न शशाक। धनुरुत्तोलना शक्त्या नात्रमुखोऽभूदित्यर्थः। तुल्ययोगितत्प्रेक्षे। ५६॥

रुक्मिणी हरण कालतो
मृतप्राय एष पुनरत्र किं गतः ।
मत्तु मेति वहुशोपि निर्ज्जितो
निस्त्रपो न शममित्य निन्दि सः ।५७॥
यातु साधयितु मेष सौभपो
लक्ष्यमित्यमर मुन्यु दीरितः ।
शाल्व आप धनुरुन्मदो बली
दृष्टसारमपि हृष्ट मानसः । ५८ ॥
वीर्य्यं दर्पजलधेः सकार्म्मुकं
मन्दरायित महीन्द्र वल्गुना ।

रुक्मिणीति । रुक्मिणीहरणकालतः मृतप्रायः मृतकसदृशः म्लान इत्यर्थः एषः शिशुपालः पुनः मत्तुं निरस्तमानो भवितुमित्यर्थः अत्र किं कथं गतः प्राप्तः, हि निस्त्रपो निर्ल्लज्जो वहुशः वहुवारं निर्जितः परास्तोऽपि शमं शान्तिं न एति न प्राप्नोति इति एवंप्रकारेण सः शिशुपालः कर्म्म अनिन्दि निन्दितः दर्शकैरितिशेषः । ५७ ॥

यात्विति । एषः सौभपः शाल्वः लक्ष्यं शरव्यं साधयितुं वेद्धुं यातु गच्छतु इति एवंप्रकारेण अमरमुनिना नारदेन उदिरितः प्रेरितः उन्मदः बली शाल्वः हृष्टमानसः सन् दृष्टसारं परीक्षित वलं मपि धनुः आप प्राप धनुः समीपं जगामित्यर्थः ।
। ५८ ॥

वीर्य्येति । सः शाल्वः वीर्य्यदर्पो बलगर्व्वः एव जलधिः समुद्रः तस्य मन्दरायितं मन्थनपर्व्वतायमानं अहीन्द्रवल्गुना

सङ्गुणेन शिथिलेन संयुतं
स्तम्भ वत् प्रविदधे निमेषतः। ५९ ॥
कोटि मस्य विनिपीड़यन्
पदा लस्तकाहित पदान्तरः परं
शृङ्ग मन्य दवलम्ब्य पाणिना
कार्म्मुकस्य नति माततान सः। ६० ॥
मुग्धता तमसि लक्ष्मणा गुणान्
पातयन् झटिति सौभनायकः।

सर्पराजसुन्दरेण शिथिलेन श्लथेन सद्गुणेन सुमौर्व्या संयुतं कार्म्मुकं धनुः निमिषतः निमिषमात्रेण स्तम्भवत् प्रविदधे दण्डायमान मकरोत्। उपमे। ५९॥

कोटिमिति। सः साल्वः अस्य धनुषः कोटिं अग्रं पदा पादेन विनिपीड़यन् अवष्टम्भयन् लस्तके धनुर्म्मध्ये आहितं दत्तं पदान्तरं अन्यपादः येन सः सन् परं केवलं अन्यत् अपरं शृङ्गं धनुष्कोटिं पाणिना हस्तेन अवलम्ब्य कार्म्मुकस्य नतिं नमनं माततान कृतवान्। स्वभावोक्तिः। ६०॥

मुग्धतेति। वली सः सौभनायकः शाल्वः लक्ष्मणायागुणान् इन्द्रियाणि "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु"। मुग्धता तमसि मोहान्धकारे पातयन् प्रक्षिपन् आनतं नम्रं चापं धनुः अमलाशयं निर्म्मलान्तःकरणं जनमिव अञ्जसा अक्लेशं झटितिशीघ्रं गुणं मौर्वीं शौर्य्यादिं अजीग्रहत् ग्राहया-

चापमानत मिवा मला श्रयं
सोऽञ्जसा गुण मजीग्रहद्वली । ६१ ॥
तस्य तां कृति मुदीक्ष्य दर्शकाः
साधु साध्विति वभाषिरे तथा ।
शाल्व सौहृद जुषः प्रियं प्रियं
किं च कष्टमिति लक्ष्मणालयः ।६२॥
सव्यहस्त धृत लस्तकः कृता-
लीढ़ संस्थितिरयं विकम्पयन् ।

मास शाल्वस्य धनुषि गुणारोपणं दृष्ट्वा लक्ष्मणा मुमोहेत्यर्थः उपमा । ६१ ॥

तस्येति । दर्शका जनाः तस्य शाल्वस्य तां कृतिं गुणारोपणकार्य्यं उदीक्ष्य उन्मुखं दृष्ट्वा साधुसाध्विति वभाषिरे कथयामासुः प्रशंससुरित्यर्थः तथा तेनप्रकारेण शाल्वसौहृदजुषः शाल्वमित्राणि प्रियं प्रियमितिवभाषिर इति पूर्ब्बेणान्वयः किञ्च लक्ष्मणाया आलयः सख्यः कष्टं महत्कष्टमिति वभाषिरे पर्य्यायालङ्कारः । ६२ ॥

सव्येति । सव्यहस्तेन वामकरेण धृतं लस्तकं धनुर्म्मध्यं येन सः "लस्तकन्तु धनुर्म्मध्यमित्यमरः" कृता आलिढ़संस्थितिः आलिढ़ाख्यस्थानकभेदो येन सः । आलिढ़ लक्षणन्तु "स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियां त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति । अन्वर्थं स्यात्समपद मालीढ़न्तु ततोऽग्रतः । दक्षिणे वाम माकुञ्च्य प्रत्यालीढं विपर्य्ययः । अयं शाल्वः वैरिवीरहृदयानि

वैरिवीर हृदयानि शिञ्जिनीं
टं चकार धनुषो धरास्पृशः। ६३ ॥
वाममुष्टि विनिपीड़ितान्तरं
चाप मुच्छ्रित ममुष्य कुर्वतः।
भारभुग्न भुजभाज ऐक्षत
ज्याविलग्न नतकन्धरां जनः। ६४ ॥
तत्क्षणं विहसितैः श्चमत्कृतीः
पश्यतां स्वगुण कृष्टि हेतुकाः।

विकम्पयन् धरास्पृशः भूमिनिहिताग्रस्य धनुषः शिञ्जिनीं मौर्वीं टङ्कार टं कृतवान्। स्वभावोक्तिः। ६३ ॥

वामेति। जनः दर्शकः वाममुष्ट्या विनिपीड़ितान्तरं निष्पीड़ित मध्यं चापं धनुः उच्छ्रितं उर्द्धीकृतं कुर्व्वतः विदधतः अतः भारेण धनुषः गुरुतया भुग्नं वक्रं भुजं वाहुं वाममित्यर्थः भजतीति तथोक्तस्य अमुष्य शाल्वस्य ज्यया धनुर्गुणेन विलग्नां विषक्तां नतां नम्रां कन्धरां ग्रीवां ऐक्षतापश्यत्, धनुरुत्तोलयतोऽस्य धनुर्भारेण हस्तस्यनमनात् ग्रीवा धनुर्गुणविषक्ता सती नम्राभूदित्यर्थः। काव्यलिङ्गं। ६४ ॥

तत्क्षणमिति। तत्क्षणं तत्कालं सः शाल्वः पश्यतां दर्शकानां स्वस्य आत्मनः गुणकृष्टिः ज्याकर्षणं हेतुः कारणं यासां ताः धनुर्गुणकर्षणजनिताः चमत्कृतीः चमत्कारान् विहसितैः उपहासैः ग्रीवायां ज्याविषञ्जनजनितैः पश्यतामितिशेषः अविलम्बं शीघ्रं अपभारयन् वहिर्व्वांत्वेन ज्याविषक्त ग्रीवत्वात् लोकानां

सोऽविलम्ब मपसारयन् शिरो
ज्याविषक्त मुदमूमुचच्चिरं। ६५ ॥
मूर्च्छयाशु महलक्ष्मणाहृदः
सोऽप्यपासरदथो सदोगृहात्।
दर्पभङ्ग लघुरेति नो पुरः
श्वासवायुभि रिवेरितः सतां। ६६ ॥
तत्परं सुरमुनेः प्रचोदना-
भ्रूधनु र्धुवनतः स्फुटीकृता

गुणाकर्षणजनित चमत्कार उपहासे शीघ्रमपसृतः इतिभावः।.
शाल्वः शीघ्रमपसारयन्, ज्याविषक्तं धनुर्गुणलग्नं शिरः स्वमस्तकं चिरं दीर्घकालेन उदमूमुचत् उन्मोचयामास अति प्रयासलज्जा मन्थरं मोचयामास। अतिशयोक्तिः। ६५ ॥

मूर्च्छयेति। अथोतोऽपि शाल्वः लक्ष्मणाया हृदः हृदयात् मूर्च्छया मोहेन सह सभागृहात् आशुशीघ्रं अपासरत् निर्जगाम सहोक्तिः। अर्थान्तरं न्यस्यति यतः दर्पभङ्गेन मानहान्या लघु नीचः गुरुत्वहीनश्च जनः सतां श्वासवायुभिः निःश्वासवातैः ईरित इव प्रेरित इव पुरः अग्रं सतामितिशेषः नो एति नागच्छति उत्प्रेक्षा। ६६ ॥

तत्परमिति। तत्परं शाल्व निर्गमनानन्तरं सुरमुनेः भ्रूधनुर्धुवनतः भ्रूरूपधनुषः कम्पनेन लक्ष्यवेधनकृते शरव्य वेधार्थं स्फुटीकृता व्यक्ता अन्यत्र धनुः कम्पनेन प्रकाशमाना प्रचोदना प्रेरणा आदेश इति यावत् इषुर्यया शरइव "चालम्ब

लक्ष्यवेधन कृते विदूरथं
लक्ष्यभूत मकरोदिषुर्यथा। ६७॥
दुर्द्धरं धनुरवेक्ष्य धन्विभि
र्दुःखलक्ष्य मपिलक्ष्य मेवसः।
वेधने प्रशिथिल ग्रहोमुनेः
प्रेरणेन गलहस्तितोऽभ्यगात्। ६८॥
चक्षुषा गुरुधनु र्विदूरतो
धारयन् कृशवलो विदूरथः।

मार्गणाशरा पत्नीरोपदृष्टयोः" इत्यमरः विदूरथं तन्नामानं राजानं लक्ष्यभूतं उद्देश्यं शरव्यभूतञ्च अकरोत् कृतवतौ तदनन्तरं नारदोऽभ्यसूयया लक्ष्यवेधार्थं विदूरथमतिशीघ्र मदिशदितिभावः। श्लिष्टोपमा। ६७॥

दुर्द्धरमिति। सः विदूरथः धन्वीभिः धनुर्द्धरैः दुर्द्धरं धर्त्त-मशक्यं धनुः कार्म्मुकं अवेक्ष्य दृष्ट्वा अपि धन्विभि दुःखलक्ष्यं कृच्छ्रवेध्यं लक्ष्यं शरव्यं अवेक्ष्य ज्ञात्वा वेधने लक्ष्यवेधने प्रशिथिलग्रहः श्लथाग्रहोऽपीत्यर्थः मुनेः नारदस्य प्रेरणेन आदेशेन गलहस्तितः कृतगलहस्तः सन् अभ्यगात् अक्षवेधार्थे मगमत्। ६८॥

चक्षुषेति। विदूरथः विदूरतो दूरात् गुरु दुर्भरं धनुः चक्षुषा धारयन् गच्छन् पश्यन्नित्यर्थः, आस्तां निकटे हस्तेन धारणमितिभावः, कृशवलः धनुर्द्दर्शनेनेव क्षीणवलः अतः चेतसा मनसापि नमयितुं नम्रीकर्त्तुं अपारयन् असमर्थः, आस्तां

चेतसा नमयितुं न पारयन्
पार्थिताल इवनम्र मौलिरैत्। ६९॥
(युग्मकं)

कर्त्तुमेष यदशक्य मीहते
लज्जितो न जननान्तरे ततः।
स्वप्नतोऽपि च हरः स्मरं यथा
व्रीडितं दहति वास्य निर्भरं। ७०॥

स्वाधिकै रपि दुरूहां कृतिं
वीक्ष्यसार लघुतां निजस्य च

हस्तेन धनुर्नमनमितिभावः, अकिञ्चित्करः सन् पार्थिताल इवैः जनानां करतालशब्दैः नम्रमौलिः सन् ऐत् अगात् सभाया इति शेषः। लक्ष्यदेश मगलेतिभावः। काव्यलिङ्गं। ६९॥

(युग्मकं)

कर्त्तुमिति। एषः विदूरथः अशक्यं असाध्यं कर्त्तुं साधयितुं ईहते चेष्टते यत् ततः हेतोः जननान्तरे अन्यजन्मनि स्वप्नतः स्वप्नावस्थायामपि न लज्जितः लज्जितवान् च अथवा हरः शिवः स्मरं यथा काममिव व्रीडितं लज्जां निर्भरं दहतिस्म सर्व्वथा निर्लज्जोऽयमितिभावः। अतिशयोक्त्युपमे। ७०॥

स्वाधिकैरिति। स्वाधिकैः स्वस्मादतिवलैरपि दूरुहां दुःसाध्यां कृतिं लक्ष्यवेधनरूपां च निजस्य आत्मनः सारलघुतां वलल्लाघवं वीक्ष्य आत्मा एतदन्यः एतस्मात् आत्मनः भिन्नः कः परं केवलं लज्जितुं तत् कार्य्यं साधयितुमित्यर्थः इह संयतेत

एतदन्य इह संयतेत को
लज्जितुं परमितीरका जगुः । ७१ ॥
सैन्धवो नयन सूचना कशा
नोदितः सुरमुने र्लघुव्रजन् ।
लक्ष्यदेश मजहान् जयद्रथः
स्वाहिता नपिकृते विवेचनां । ७२ ॥
सौभपाधिगुणितं धनुर्दधत्
कर्त्तुं मुच्छ्रितमयं यदेच्छत ।

यत्नवान् भवेत् इति एवं प्रकारेण ईरका: दर्शका: जगुः कथयामासुः । ७१ ॥

सैन्धव इति । जयद्रथः तन्नामकः सैन्धवः सिन्धुदेशाधिश्वरः अश्वश्च सुरमुनेः नारदस्य नयनसूचना नेत्रसङ्केत कशा अश्व ताड़नी तया नोदितः प्रेरितः अतः लघुशीघ्रं गच्छन् लक्ष्यदेशं शरव्यस्थानं उद्दिश्य आगत्य अजहात् तत्याज अतिचक्रामेत्यर्थः धावनवेगेन लक्ष्यदेशमतोत्य कतिपदानि उच्चालेतिभावः । रूपकं । अपि स्वाहिता स्वस्मिन् निहितां कृतौ कार्य्य विषये लक्ष्यवेधनरूपे विवेचनां अथवा कृतेः कार्य्यस्य लक्ष्यवेधन रूपस्य विवेचनां विचारं यथानियमं लक्ष्यवेधन विचारं अजहात् तत्याज । लक्ष्यवेधनियममति चक्रामेतिभावः ।७२॥ जयद्रथस्य नियमलङ्घन प्रकारमाह—

सौभपेति । अयं जयद्रथः सौभपेन शाल्वेन अधिगुणितं कृताधिज्यं धनुः दधत् धारयन् यदा उच्छ्रितं कर्त्तुं उत्थापयितुं

मान्यरोपित गुणेन पौरुषं
दर्शयत्विति तदा जना जगुः। ७३॥
वाक्य वाण उदितः सदः सदां
सिन्धुभू मघवतः शरासनं।
भूतले करतलान्य वीविशत्
नीति मुज्झति नवारितो प्यसन्। ७४॥
शिञ्जिनीं श्लथयितुं जयद्रथो
यावदानति मवापिपद्धनुः।

ऐक्षत अचेष्टत तदा जनाः दर्शकाः अन्यरोपितगुणेन अन्येन शालुन आरोपितमौर्व्वी पौरुषं पुरुषकारं मा दर्शयतु भवानितिशेषः इति एवं प्रकारेण जगुः। ७३॥

वाक्यवाण इति। उदितः उच्चरितः सदः सदां सभ्यानां वाक्यबाणः वाक्शरः शरासनं धनुः सिन्धुभूमघवतः सिन्धुदेशेन्द्रस्य जयद्रथस्य करतलात् हस्तात् भूतले भूमौ न्यवीविशत् निवेशयामास अस्थापयत। रूपकं। सभ्यानां निषेधात् जयद्रथः धनुः भूमावस्थापयदिति भावः। अर्थान्तरं न्यस्यति असन् असाधुरपि वारितः सद्भिर्निषिद्धः सन् नीतिं नयंनोज्झति न त्यजति। एतेन जयद्रथस्य असाधुत्वं सूचितं। ७४॥

सिञ्जिनीमिति। जयद्रथः सिञ्जिनीं मौर्वीं शाल्वाधिरोपितामित्यर्थः श्लथयितुं शिथिलयितुं धनुत्र इतिशेषः धनुः यावत् आनतिं नमनं अवापिपत् प्रापयामास धनुर्नमयामासेत्यर्थः तावता तावत्कालं श्लथगुणं शिथिलमौर्व्वीकं शरासनं

तावताथ गुणं शरासनं
दूरतोऽक्षिपदुदस्य तं जवात् । ७५ ॥
पातजात मवधूय पीड़नं
प्रासरच्च न विमाष्टुं मैहत ।
स्वायशोभिरिव पांशुभि र्वपुः
संवृतं मगणयन्नति व्यथां । ७६ ॥
धिग्वचोऽट्टहसितं विवर्णतां
तेन संजनयता मुखव्रजे ।

धनुः तं जयद्रथं जवादुदस्य वेगेनोत्क्षिप्य दूरतः अक्षिपत पातयामासेत्यर्थः । विषमालङ्कारः । ७५ ॥

पातजात मिति । सः जयद्रथः पातजातं पतनसम्भूतं पीड़नं पीड़ां अवधूय अविगणय्य प्रासरत् सभाया निर्जगामेत्यर्थः च पुनः स्वस्य अयशोभिः अकीर्त्तिभिरिव स्थितैः पांशुभिः रजोभिः संवृतं व्याप्तं वपुः स्वशरीरं विमार्ष्टुं परिष्कर्त्तुं अतिव्यथां अतिबाधां गणयन् भूपतन संलग्नरजोगुण्ठितं स्वशरीरं एतादृश्यां सभायां परिमार्ष्टुं अतिलज्जाकरत्वादित्यर्थः न ऐहत नेष्टवान् उत्प्रेक्षा स्वशरीरमविमार्ज्यैव सभाया निर्जगामेत्यर्थः । ७६ ।

धिग्वच इति । दुर्ज्जना दुष्टाश्च आर्य्याः शिष्टाश्च सुहृदः मित्राणि च तेषां मुखव्रजे वदनसमूहे यथाक्रमं धिग्वचः धिक्कारवचनं अट्टहसितं अट्टहासं विवर्णतां वैवर्ण्यञ्च जनयता उत्पादयता स्वपतनहेतोरितिभावः तेन जयद्रथेन नवित्यथें

दुर्जनार्य्यं सुहृदां न विव्यथे
विश्वजिन्मुद मुपैति निस्त्रपः । ७७ ॥
दिष्टपिष्टप समष्टि निष्ठितै
र्वस्तुभिः सतत चित्रितान्तरः
धार्त्तराष्ट्र मथलक्ष्य बेधने
व्यादिदेश समुनिः समुत्सुकं । ७८ ॥
सर्वतश्चरम एव वा ग्रतो
सत्कृतिः समुचिता न मध्यतः ।

न दुःखितं यतः निस्त्रपः निर्लज्जः विश्वजिन्मुदं जगज्जेतुः या मुत्‌हर्षः तां उपैति प्राप्नोति । यथासंख्यार्थान्तरन्यासौ । ७७ ॥

दिष्टेति । अथ जयद्रथ पलायनानन्तरं दिष्टाः कालाः वर्त्तमानादयः पिष्टपानि जगन्ति भूरादिनि "कालोदिष्टोऽप्य-नेहापिसमयोऽपि, विष्टपं भुवनं जगदितिचामरः । तेषां या समष्टिः समूहः तस्यां निष्ठितैः अवस्थितैः सर्वेषु कालेषु सर्वेषु लोकेषु च विद्यमानैः वस्तुभिः पदार्थैः सततं सर्व्वदा चित्रितं व्याप्तं अन्तरं अन्तरात्मा यस्य सः" अन्तरमवकाशावधि परिधानान्तर्द्धिभेदतादर्थ्यच्छिद्रात्मीय विनाबहिरवसरमध्येऽन्तरा-त्मनिचेत्यमरः युक्तयोगित्वात् कालत्रय लोकत्रय पदार्थसाक्षा-त्कर्त्तेत्यर्थः सः मुनिः नारदः समुत्सुकं उत्कण्ठितं लक्ष्यवेधार्थं मित्यर्थः धार्त्तराष्ट्रं दुर्य्योधनं लक्ष्यवेधने शरव्यवेधार्थं व्यादिदेश आदिष्टवान् । ७८ ॥

सर्व्वत इति । सर्व्वतः च सर्व्वस्मात् चरमे शेषे वा अग्रतः प्रथमतः सत्कृतिः समकार्य्यं लक्ष्यवेधनरूपमित्यर्थः समुचिता

इत्य वेत्यन जहौ सुयोधन
स्तत्क्षणं सुकृत मञ्चचारुतां। ७९ ॥
नोच्चता ममभवेद् वेधने
स्यादलं त्व धमता तथा मुनेः।
लङ्घनेति सशरव्य सन्निधिं
प्रासरत् शरइव प्रचोदितः। ८० ॥
उद्धता गतिरुपक्रम स्तथा
लक्ष्यवेधन विधौ निरीक्षणं।

युक्ता मम सर्वाधिकत्वात् श्रेष्ठक्रमेणावेधनञ्चेत् तर्हि प्रथमतः कनिष्ठक्रमेणाचेत् तर्हि सर्व्वशेषे लक्ष्यवेधनं युक्तमितिभावः मध्यतः मध्ये न समुचिता इति एवं प्रकारेण अवेत्य विचार्य्य सुयोधनः तत्क्षणं आदेशक्षण एव स्वेन निजेन कृता सम्पादिता या मञ्चस्य आसनविशेषस्य चारुता शोभा तां न जहौ न तत्याज शीघ्रमासनान्नोत्तस्थाविति भावः। काव्यलिङ्गं। ७९ ॥

नेति। अवेधने शरव्यवेधाभावे सति असमयादेशेनापमानितोऽहं यदि लक्ष्यवेधनं न करिष्यामीत्यर्थः मम उच्चता उत्कर्षः न भवेत् तु पुनः अधमता असामर्थ्यं अलं अत्यर्थं स्यात् तथा तद्वत् मुनेः नारदस्य लङ्घना आज्ञालङ्घनं स्यात् इति एवं प्रकारेण मत्वेत्यर्थः स दुर्य्योधनः प्रचोदितः शरइव शरव्य सन्निधिं लक्ष्यसमीपं प्रासरत् अगमत्। उपमा। ८० ॥

उद्धतेति। तस्य दुर्य्योधनस्य उद्धता गतिः गमनं तथा लक्ष्यवेधनविधौ शरव्यवेधानुष्ठाने उपक्रम आरम्भः परिकर

सावलेपमपि तस्य लक्ष्मणा
माधिलावण नदे न्यमज्जयन् । ८१ ॥
भूतलात्करतलं धनुस्ततः
सज्यतां च नयतः कृतिं जनः ।
कोऽपिनाप नयनेन तस्य
न टङ्कृति स्फुटरव श्रवावधि । ८२ ॥
ज्याविकर्षनिनदोऽस्य मद्रजां
प्रोषित स्त्रियमिवाभ्र गर्जितं ।

वक्षादिः अपि सावलेपं सगर्व्वं निरीक्षणं सर्व्वतोऽवलोकनं एतानि लक्ष्मणां आधिः मनोव्यथैव लावणनदः लवणाब्धदः तस्मिन् न्यमज्जयन् निमज्जयामासुः दुर्य्योधनगत्यादिकं पश्यन्त्या लक्ष्मणायाः मनोव्यथाभूदित्यर्थः। रूपकं॥ ८१ ॥

भूतलादिति। कोऽपि जनः भूतलात् भूमेः धनुः करतलं स्वहस्तं नयतः धनुर्ग्रहणं कृत इत्यर्थः ततः सज्यतां अधिज्यतां नयतः प्रापयतः तस्य दुर्य्योधनस्य कृतिं कार्य्यं धनुर्ग्रहण ज्यारोपणात्मकं मित्यर्थः तस्य धनुषः टङ्कृत्या टङ्कारेण स्फुटोव्यक्तोयोरवः ध्वनिः तस्य श्रवावधि श्रवणपर्य्यन्तं नयनेन चक्षुसा न आप न दृष्टवानित्यर्थः। टङ्कारध्वनि श्रवणेन जना दुर्य्योधनस्य हस्तलाघवात् धनुर्ग्रहण ज्यारोपणकार्य्यं अनुमेनिरइतिभावः। लाघवातिशयोक्तिः। ८२ ॥

ज्येति। अस्य दुर्य्योधनस्य ज्याविकर्षनिनदः गुणाकर्षण शब्दः मद्रजां लक्ष्मणां अभ्रगर्जितं मेघध्वनिः प्रोषितस्त्रियं पथिकाङ्गनामिव भ्रान्तचेतसं बिभ्रान्तचित्तां अधादकरोत्

भ्रान्तचेतस मधाश्च पश्यतां
साधुवाद उदियाय सर्व्वतः। ८३॥
लक्ष्यबिम्ब मभिवीक्ष्य भूतले
सोऽम्बुकुण्ड उदितो रुदोर्द्द यः।
वाणमेक मधिरोप्य कार्म्मुके
मत्तपुङ्गव गभीर मुज्जगौ। ८४॥
( युग्मकं )
लक्ष्यमेतदभिविध्यते मया
सावधान मवधार्य्यतां बुधाः।
स्यात् यथा न मम दक्षताद्विषां
संशयोऽत्र कलहं करिष्यतां। ८५॥

च पुनः सर्व्वतः पश्यतां दर्शकानां साधुवादः प्रशंसावचनं उदियाय उदियतः। उपमा। ८३॥

लक्ष्यविम्बमिति। सः दुर्य्योधनः कार्म्मुके धनुषि एकं वाणं अधिरोप्य भूतले भूमौ अम्बुकुण्डे जलकुण्डे लक्ष्यस्य शरव्यस्य विम्वं प्रतिबिम्वं अभिवीक्ष्य उदितं उन्नतं उरुदीर्घं दोर्द्दयं येन सः सन् मत्तपुङ्गवस्येव उन्मत्त वृषभस्येव गभीरं मन्द्रं यथा तथा उज्जगौ उच्चैर्जगाद वक्ष्यमाणमितिशेषः।८४॥

दुर्य्योधनोक्तिंविशिनष्टि। लक्ष्यमिति। मया एतत् लक्ष्यं अभिविध्यते अवश्यं भेत्स्यत इत्यर्थः हे बुधाः सावधानं दत्तावधानं अवधार्य्यतां निरूप्यतां मम दक्षताद्विषां सामर्थ्यमसहमानानां अतः कलहं करिष्यतां विपक्षाणामितिशेषः अत्र लक्ष्यभेदने संशयः सन्देहः यथा न स्यात् न भवेत् तथा अवधार्य्यता मितिभावः। ८५॥

इत्युदीर्य्य रदपीड़िताधर-
श्चाप माचिवुक मानताननः ।
सोऽभिकृष्य स सखी नृपात्मजा
श्वासबायु चल मुज्जहौ शरं । ८६ ॥

लक्ष्यमक्षत मवेक्ष्य माणया
सस्वनं जनतया व्यहासि यत् ।
लक्ष्मणा हृदितदिन्दु लेपनं
भस्मवृष्टिरभवत्सुयोधने । ८७ ॥

दूरमाप्य कियदागतः पुनः
पोषितः कलरवो यथाशरः ।

इतीति । सः दुर्य्योधनः इति पूर्वोक्तप्रकारं उदीर्य्य उक्त्वा रदैः दन्तैः पीड़ितः दंष्टः अधरोयेनसः चापं धनुः आचिवुकं चिवुक पर्य्यन्तं अभिकृष्य पृथुबाहुत्वादित्यर्थः आनताननः नम्रमुखः सन् ससख्याः सखीसहितायाः नृपात्मजायाः लक्ष्मणायाः श्वास-वायुभिः दुःखनिश्वासवातैः चलं चञ्चलं एतेनास्य भाविलक्ष्य भ्रष्टत्वं सूचितं शरं वाणं उज्जहौ उर्द्धं तत्याज । उत्प्रेक्षा ।८६॥

लक्ष्यमिति । लक्ष्यं शरव्यं अक्षतं अविद्धं अवेक्षमाणया पश्यन्त्या जनतया लोकसमूहेन सस्वनं सशब्दं उच्चैरित्यर्थः व्यहासि हसितं यत् तत् लक्ष्मणाया हृदि हृदये इन्दुलेपनं कर्पूर-लेपः अभवत् सुयोधने विषये भस्मवृष्टिः अभवत् निदर्शना ।८७॥

दूरमिति । सः दुर्य्योधनविसृष्टः शरः वाणः पोषितः पालितः कलरवोयथा पारावत इव " पारावतः कलरव

लक्ष्य विच्युतिजलज्जयेव स
क्ष्मातले नतमुखो विशत्तदा । ८८ ॥
लौकिकोपहसित श्रुतौ श्रय-
न्नन्धजो वधिरता मधोमुखः ।
बाणमन्य मदधाद वाक् पुनः
किं न कार्य्यत इहाशया जनः । ८९ ॥
केचिदूचुरय मत्रपोऽपरे
लेपुरेष च वृथा विकत्थनः ।

इत्यमरः" कियत् दूरं उद्धं आप्य प्राप्य गत्वेत्यर्थः पुनः आगतः सन् लक्ष्यात् शरव्यात् या विच्युतिः भ्रंशः तज्जया तदुत्पन्नया लज्जया इव नतमुखः नम्रफलः सन् तदा क्ष्मातले अविशत् प्रविष्टः । उत्प्रेक्षा । ८८ ॥

लौकिकेति । अन्धात् धृतराष्ट्राज्जायत इति तथोक्तः दुर्य्योधनः लौकिकोपहसितस्य लोकोपहासस्य श्रुतौ श्रवणे वधिरतां वाधिर्य्यं श्रयन् उपहासं अशृण्वन्नित्यर्थः अवाक् तुष्णीम्भूतः अधोमुखः सन् पुनः अन्यं वाणं अदधात् लक्ष्य-बेधार्थं धारयामास, हि इह आशया प्रयोजककर्त्र्या जनः लोकः प्रयुज्यकर्त्ता किं न कार्य्यते आशावशाज्जनः किं न करोतीत्यर्थः । अर्थान्तरन्यासः । ८९ ॥

केचिदिति । केचित् जनाः ऊचुः कथयामासुः अयं दुर्य्योधनः अत्रपः निर्लज्जः यतः प्रथमं परास्तोऽपि न लज्जत इतिभावः, अपरे अन्ये दर्शकाः लेपुः जगदुः, एषः सुयोधनः वृथाविकत्थनः व्यर्थमात्मश्लाघापरः यतः लक्ष्यवेधनात्पूर्व्वं

विघ्नितोऽपि यतते यतः पुनः
सूत्तमोऽयमिति चेतरे जगुः । ६० ॥

पश्यसाहस मिहास्य तद्यतो
ह्रीरपि श्वशुरतो वधूर्यथा ।
लज्जया कुचति नून मित्यथो
लक्ष्मणां समभणत्सखी जनः । ६१ ॥

आयतो द्विगुणयत्न चोदितः
सोऽपरेद्युरपि पूर्व्वपद्धतिं ।

लक्ष्यमेतदभिविध्यत इति पूर्व्वोक्तमकथयत्, विघ्नितोऽपि प्रथमं सञ्जात विघ्नोऽपि पुनः यतते वेद्धुं चेष्टते यतः अतः अयं सुयोधनः सूत्तमः उत्तमप्रकृतिकः विघ्नैः पुनः पुनरपि प्रतिहन्य मानाः प्रारब्धमुत्तमगुणाः स्त्वमिवोद्वहन्त इत्यादि प्रमाणादितिभावः। इति एवंप्रकारेण इतरे अन्ये दर्शकाः जगुः प्रशशंसुः । ६० ॥

पश्येति। इह अस्य दुर्य्योधनस्य तत्साहसं अविमृश्यकारित्वं पश्य ह्रीः लज्जापि वधूः स्नुषा श्वशुरतो यथा श्वशुरादिव यतः साहसात् लज्जया हेतुना आकुचति सङ्कुचिता भवति नूनं अस्य साहसाल्लज्जाप्यपास्तेत्यर्थः इति एवं प्रकारेण सखीजनः अथो लक्ष्मणां समभणत् अकथयत्। उपमोत्प्रेक्षे । ६१ ॥

आयत इति। आयतः प्रथमशरापेक्षयेत्यर्थः द्विगुणयत्नेन चोदितः प्रेरितः सः अपरेद्युः अन्यवाणः कुलजवत् सत्कुलप्रसूत इव लेशतः लवमात्रं पूर्व्वपद्धतिं प्रथमबाणमार्गं पूर्व्वपुरुषाचरणञ्च न संजहौ न तत्याज प्रथमशरइव कियद्दूरं गत्वा प्रत्यागत

लेशतः कुलजबन्न संजहौ
दुर्ग्रहादकुशलं फलं भवेत्। ६२ ॥
तद्धनु स्तदपि लक्ष मस्मि स
प्रेरक स्तदपि हस्त लाघवं।
किं परं त्वपर पत्रिणा भवे-
दित्य वेत्य विरतः सुयोधनः। ६३ ॥
भारभूत मपि कार्म्मुकं तदा
स्थापयन् क्षितितले त्रपाभरात्।
नम्रमौलि रयमात्म वैरिणां
स्मेरवक्त्र सुषमां न दृष्टवान्। ६४ ॥

इत्यर्थः। हि दुर्ग्रहात् दुराग्रहाद्धेतोः अकुशलं अमङ्गलं फलं भवेत्। उपमार्थान्तरन्यासौ। ६२ ॥

तदिति। तत्पूर्वोक्तं धनुः एतदस्तीतिशेषः, अपि तत् लक्षं शरव्यं, सः अहं प्रेरकः वेधनकर्त्ता अस्मि भवामि, तदपि हस्तलाघवं प्रयोगकौशलं नान्यदितिभावः, तु पुनः परं केवलं अपरेण अनेनपत्रिणा वाणेन किं भवेत् अनयत्किं वैशिष्ट्यं स्यात्, एवं प्रकारेण अवेत्य ज्ञात्वा सुयोधनः विरतः तृतीयशर प्रयोगा न्निवृत्त इत्यर्थः। ६३ ॥

भारभूतमिति। तदा अयं दुर्य्योधनः भारभूतं नैष्फल्यात् भारवत्प्रतीयमानमित्यर्थः कार्म्मुकं धनुः क्षितितले स्थापयन्नपि त्रपाभरात् लज्जाभारेण नम्रमौलिः नतमस्तकः सन् आत्म-वैरिणां स्वशत्रूणां स्मेरवक्त्र सुषमां स्मित युक्तमुखशोभां नदृष्टवान्। काव्यलिङ्गं। ६४ ॥

वेधने यदि मया न पारितं
कोऽपिनात्र सफलो भवेन्नृपः ।
लक्ष्मणा वरणमाल्य भाजनं
सम्भवेय मिति निर्ययौ न सः । ६५ ॥
दण्डताड़ित इवैष डुण्डुभः
पश्य नम्रवदनः सुयोधनः ।
मञ्चमेति तवलाभ वञ्चितो
लक्ष्मणेति भणिता वयस्यया । ६६ ॥
दर्शको पहसित स्वने तदा
मद्रप प्रहरि वार वारिते ।

वेधन इति। मया वेधने लक्ष्यवेधेन पारितं न शक्यते यदि तर्हि अत्र कोऽपि नृपः राजा न सफलीभवेत् वेद्धुं नशक्नुया दित्यर्थः एतेनास्य सर्वाधिक्याभिमानः सूचितः, लक्ष्मणायाः वरणमाल्यभाजनं सम्भवेयं सर्वेषां लक्ष्यवेधासामर्थ्ये लक्ष्मणा सर्वोत्कृष्टं मां स्वीकुर्य्यादितिभावः इति मत्वेतिशेषः सः दुर्य्योधनः ननिर्ययौ सभाया इति शेषः। काव्यलिङ्गं । ६५ ॥

दण्डताड़ित इति। दण्डेन ताड़ितः प्रहृतः डुण्डुभोजल सर्प इव "अलगर्दोजलव्याल समौराजिलडुण्डुभादित्यमरः" नम्रवदनः अधोमुखः एषः सुयोधनः तव लाभेन प्राप्त्या वञ्चितः रहितः सन् मञ्चं आसनं एति प्रत्यागच्छति, पश्य इति वयस्यया सख्या लक्ष्मणा भणिता कथिता । उपमा । ६६ ॥

दर्शकेति। तदा दर्शकानां उपहसितस्वने उपहासशब्दे मद्रपस्य इत्युत्सेनस्य प्रहरिवारेण यामिकभृत्य समूहेन वारिते

नारदो द्विरद राजि विक्रमं
वेधनेऽदिशदथो वृकोदरं। ९७॥
भूरयोऽत्र यदि निष्फला नृपा
व्यर्थता मम न भाविनी ह्रिये।
इत्य वेत्य यततेस्म वेधने
मारुति र्विधिसुत प्रचोदितः।९८॥
मत्तवारण गतिः पदक्रमैः
कम्पयन् वसुमतीं हृदी समं।
म द्रराज दुहितुः शरव्य भू-
खण्डमण्डन मधात्स पाण्डवः।९९॥

निवारिते सति अथो नारदः द्विरजराजिविक्रमं गजसङ्घ पराक्रमं वृकोदरं भीमं वेधने लक्ष्यवेधार्थं अदिशत् आदिष्टवान्। उपमा। ९७॥

भूरय इति। अत्र लक्ष्यवेधे भूरयः बहवः नृपाः राजानः निष्फला व्यर्थोद्यमा यदि तर्हि मम भाविनी भविष्यन्ती व्यर्थता वैफल्यं ह्रिये लज्जायै न इति एवं प्रकारेण अवेत्य ज्ञात्वा विचार्येत्यर्थः मारुतिः भीमः विधिसुतेन नारदेन चोदितः प्रेरितः सन् वेधने लक्ष्यवेधे यततेस्म अयतिष्ट काव्यलिङ्गं। ९८॥

मत्तेति। मत्तवारणगतिः प्रमत्तगजगमनः सः पाण्डवः भीमः पदक्रमैः पादविन्यासैः मद्रराजदुहितुः लक्ष्मणायाः हृदा हृदयेन समं सह, वसुमतीं भूमिं कम्पयन् शरव्यभूखण्डस्य लक्ष्यभूभागस्य मण्डनं भूषणं अधादकरोत्। लक्ष्यदेशंप्रापेत्यर्थः सहोक्त्यतिशयोक्ती। ९९।

ज्यामसौ शिथिलय न्निमेषतो
लस्तकं यदपि सव्य पाणिना।
संदधे तदिह लक्ष्मणा गले
सेऽन्तकस्य बुबुधे करार्द्दनं। १००॥
साधुशिष्य मिव चाप मेष तं
सन्नमय्य यदजीग्रह द्गुणं।
नो हिडिम्बवक संमर्षने क्षमे
तत्प्रभञ्जन सुतेऽद्भुतं वभौ। १०१॥
तत्र भीम कलितो गुणं त्यज
न्नुद्गोऽपि विशिखो विमुक्तवत्।

ज्यामिति। असौ भीमः निमिषतो निमेषमात्रेण ज्यां धनुर्गुणं दुर्य्योधनारोपितमित्यर्थः शिथिलयन् श्लथीकुर्व्वन् सव्यपाणिना वामहस्तेन लस्तकं धनुर्मध्यमपि सन्दधे धृतवान् यत्, तत् लक्ष्मणा स्वे गले निजकण्ठे अन्तकस्य यमस्य करार्द्दनं हस्तेन निपीड़नं बुबुधे ज्ञातवती। निदर्शना। १००॥

साधुशिष्यमिति। एष भीमः साधुशिष्यं सच्छिष्यमिव तं चापं धनुः सन्नमय्य नमयित्वा प्रह्वीकारयित्वा च गुणं मौर्व्वीं पाण्डित्यादिञ्च अजीग्रहत् यत्, तत् गुणारोपणमित्यर्थः हिडिम्बवकयोः तदाख्ययोरसुरयोः मर्षने विनाशे क्षमः समर्थः तस्मिन् प्रभञ्जनसुते वायुपुत्रे भीमे अद्भुतं विस्मयकरं नोवभौ। उपमा। १०१॥

तत्रेति। तत्र भीमेन वृकोदरेण कलितो विसृष्टः अन्यत्र शिवानुगृहीतः गुणं मौर्व्वीं त्यजन् अन्यत्र त्यक्तसत्वादिगुणः

क्वागमच्चिर मुदाननै र्जनै
र्नो कदापि निरनायि तद्गतिः। १०२॥
भोजने भुजवले च केवलं
ख्यातिरस्य न शरस्य वेधने।
इत्थ मुत्थित गिरां सदः सदां
कौमुदी श्रियमगान्नभो हसैः। १०३॥
(युग्मकं)
नाशएष न शरस्य केवलं
किन्तुमान यशसोर्मदीययोः।

ऊर्द्ध्वग: ऊर्द्ध्वगाम्यपि विशिखः वाणः विमुक्तवत् मोक्षप्राप्त इव क्व कुत्र अगमत्, चिरं उदाननैः ऊर्द्ध्वमुखैः जनैः कदापि तस्य वाणस्य गतिः नो निरनायि निश्चिता। उपमा। १०२।

भोजनइति। अस्य भीमस्य भोजने बहुशने भुजवले च केवलं ख्यातिः प्रतिष्ठा शरबाणवेधने लक्षवेधे न अस्तीतिशेषः इत्थं एवं प्रकारेण उत्थिता उच्चारिताः गिरः वचनानि येषां तेषां सदःसदां सभ्यानां हसैः हासैः नभः आकाशः कर्त्तृ कौमुदीश्रियं चन्द्रिकाजनितशोभां शुक्लत्वमित्यर्थः अगात् प्राप। अतिशयोक्ति निदर्शने। १०३॥

नाशइति। शरस्य मत्प्रयुक्तवाणस्य एषः नाशः अदर्शनं केवलं न किन्तु मदीययोः मत्सम्बन्धिनोः मानयशसोः सम्मान-कीर्त्त्योः नाशः भवतीतिशेषः अयेन शुभावहदैवेन। अयः शुभावहोविधिरित्यमरः। कल्पिता कृता अवशंश भाविनी अव-शंश्चदिष्यन्तो कृष्णायोः श्रीकृष्णार्जुनयोः सफलता लक्षवेध

संवृणातु तमवश्य भाविनी
कृष्णयोः सफलता यकल्पिता । १०४॥
एवमाधि मवधूय पाण्डवः
शिञ्जिनीं च मरुकृष्टि निष्फलां।
मन्थरं शिथिलयन् शरासना
न्नम्रतां स्वयमपाहर त्ततः । १०५ ॥
( युग्मकं )
मच्चलत्व समये सुनिश्चलं
चञ्चलं मयि पुनः स्थिरे ततः ।

साफल्यं तं मदीयमानशोनाशं संवृणातु आच्छादयतु । कृष्णाजुर्नयोः साफल्ये मम मानशोच्छानि नैदुःखावहेत्यर्थः। निदर्शना । १०४ ॥

एवमिति। पाण्डवो भीमः एवं पूर्वोक्तप्रकारेण आधिं मनोव्यथां मवधूय निरस्य च पुनः मरोः मरुभूमिः या कृष्टिः कर्षणं तदन्निष्फलां व्यर्थां लक्ष्यवेधाभावादितिभावः शिञ्जिनीं मौर्वीं मन्थरं मन्दं यथा तथा शिथिलयन् श्लथयन् ततः शरासनात् धनुषः नम्रतां नतिं स्वयं अपाहरत् अपहृतवान् गुण शैथिल्येन धनुषः सारल्यं लक्ष्यवेधासामर्थ्यात् भीमस्यापि नम्रताभूदितिभावः। उत्प्रेक्षा । १०५ ॥

मदिति। हे कार्मुक! मम चललसमये चलनावसरे गमनकाल इतियावत् त्वं सुनिश्चलं स्थिरं मासीरितिशेषः पुनः मयिस्थिरे लक्ष्यवेधार्थं सुस्थिते सति त्वं चञ्चलं न्यारोपणा-

तिष्ठ सुस्थिरतरं चलाम्यहं
कामुकासि मम वैपरीत्यभाक्।१०६॥
इत्थमन्त रभिभूय सत्यजं
श्चापमापगति मासनोन्मुखीं।
यं कमप्यभिविगर्हयन् वृथा
भग्नमान उपयाति सान्त्वनां।१०७॥
दुःखभार मपनीय लक्ष्मणा
मानसा त्स्वय मुदुह्य सोऽलसः।

दिनाचलनवदित्यर्थः। ततः अनन्तरं सुस्थिरतरं तिष्ठ आस्स्व अहं चलामि गच्छामि, अतो मम वैपरीत्यभाक् विपरीत-वृत्तासि।।१०६॥

इत्थमिति। स भीम इत्थं पूर्वोक्तप्रकारेण चापं धनुः अन्तः मनसि अभिभूय तिरस्कृत्य त्यजन् सन् आसनोन्मुखीं मञ्चाभिमुखीं गतिं गमनमाप आसनोन्मुखो जगामेत्यर्थः वातुलवच्चेष्टा धनुरुपालम्भनं समर्थयति। यमिति, भग्नमानो जनः यङ्कमपि वृथा अभिविगर्हयन् तिरस्कुर्व्वन् सान्त्वनां प्रबोधं मानभङ्गजनित दुःखसैरतिभावः उपयाति प्राप्नोति। अर्थान्तरन्यासः। १०७ ॥

दुःखभारमिति। स भीमः लक्ष्मणाया मानसात् मनसः दुःखभारं अपनीय स्वयं उदुह्य गृहीत्वा तद्दुःखभारमित्यर्थः अलसः मन्थरः सन् भृत्यसंहतेः-स्वपरिचारवृन्दस्य उष्णानिःश्वसितैः दुःखजनितैरुष्णश्वासैः तप्तं अतुरणां मञ्चकं स्वासनं

नारुरोह किमु भ्रत्य संहते
कृष्णनिःश्वसित तप्त मञ्चकं ।१०८॥
भिन्धि लक्ष मबला मवाप्नुहि
द्रौपदीमिव धनञ्जयो यशः।
कृष्णशिचित लभस्व साम्प्रतं
नारदोऽग ददर्येति सात्यकिं । १०९ ॥
वीरहन्द विफलत्व दर्शना-
त्सात्यकिः शिथिल साहस स्तदा।
नारदीय गदिता स्तैः पुनः
स्फीतशक्ति रयतिष्ट वेधने । ११० ॥

नारुरोह किमु आरूढवानेव। उत्प्रेक्षाकाव्यलिङ्गातिशयोक्त्य-लङ्काराः। १०८।

भिन्धीति। अथ भीमस्य वैफल्यानन्तरं लक्षंभिन्धि विध्य धनञ्जयः अर्जुनो द्रौपदीमिव अबलां स्त्रियं लक्ष्मणां अवाप्नुहि लभस्व हे कृष्णशिचित! श्रीकृष्णार्जुनयोः शिष्य! साम्प्रतं यशो लभस्व इति एवंप्रकारेण नारदः सात्विकिमगददा दिष्टवानित्यर्थः। उपमा। १०९।

वीरेति। वीरवृन्दस्य यद्विफलत्वं वैफल्यं लक्षवेधइत्यर्थः तस्य दर्शनात् अवलोकनात् शिथिलसाहसः श्लथोद्यमः सात्यकिः शैनेयः तदा नारदीयगदितामृतैः नारदादेशैनेत्यर्थः पुनः स्फीता वर्द्धिता शक्तिः सामर्थ्यं यस्य सः सन् वेधने लक्ष-वेधार्थे मयतिष्ट यत्नवानभवत्। काव्यलिङ्ग। १११॥

सात्यकि र्द्विपइवाद्रि सानुतो
मञ्चकादवततार यावता।
तावता नृपसुता हृदोऽगलत्
म्लानपुष्पमिव वृन्ततोधृतिः। १११॥

मद्रनायक निरूपितां विधां
लक्ष्य वेधन विधौ ससात्यकिः।
कूलमब्धिरिव यत्ननात्यगात्
हेतुरत्र ननु कृष्ण शिष्यता। ११२॥

लक्ष्मणा नयन मुद्रणां तथा
प्रेक्षकोर्द्ध मुखतां विधाय सः।

सात्यकिरिति। अद्रिसानुतः पर्व्वतशृङ्गाद्द्विपइव यावता कालेन मञ्चकादवततार अवतीर्णः तावता वृन्ततः प्रसववन्धनात् म्लानं पर्युषितं पुष्पमिव नृपसुतायाः लक्ष्मणायाः हृदः हृदयात् धृतिः धैर्य्य मगलत्। उपमा। १११॥

मद्रेति। सः सात्यकिः लक्ष्यवेधनविधौ मद्रनायकेन वृहत्सेनेन निरूपितां निर्द्धारितां विधां प्रकारं गुणारोपणादिकं अब्धिः समुद्रः कूलं वेलामिव न अत्यगात् नात्यक्रमत् यत् अत्र नियमालङ्घने कृष्णयोः शिष्यता शिष्यत्वं शिष्येतियावत् हेतुः कारणं। उपमा। ११२॥

लक्ष्मणेति। सः सात्यकिः लक्ष्मणायाः नयनयोः नेत्रयोः मुद्रणां निमीलनं तथा प्रेक्षकाणां दर्शकाणां उर्द्ध मुखता-

लक्ष्यबिम्बमभिवीक्ष्य निश्चलं
सात्यकिर्द्धनुषि संदधे शरं । ११३ ॥
अर्जुनादधिगतास्त्र कौशलः
सात्यकिर्ध्रुव मयंबिभेत्स्यति ।
लक्ष्मित्थ मवधार्य्य मद्रजा
वासरैन्दव कलाश्रियं दधौ । ११४ ॥
सात्वतर्षभ विसृष्ट मार्गणाः
क्षिप्रमुज्झित गुणोविभास्वरः ।
कृष्णभक्त इव दूर मुन्नत
स्तत्रविष्णुपद लीनतां ययौ । ११५ ॥

मुन्मुखत्वं विधाय सम्पाद्य लक्ष्यस्य शरव्यस्य विम्बं प्रतिबिम्बं निश्चलं स्थिरं यथा तथा अभिवीक्ष्य दृष्ट्वा धनुषिशरं सन्दधे संहितवान् । ११३ ।

अर्जुनादिति । अर्जुनात् अधिगतं प्राप्तं अस्त्रकौशलं शस्त्रनैपुण्यं येन तथोक्तः अयं सात्यकिः लक्ष्यं बिभेत्स्यति ध्रुवं निश्चितं, इत्थं एवंप्रकारेण मद्रजा लक्ष्मणा अवधार्य्य निश्चित्य वासरे दिवसे या ऐन्दवकला चन्द्रकला तस्याः श्रियं शोभां तद्वन्मालिन्यमित्यर्थः दधौ धारयामास । निदर्शना । ।११४

सात्वतर्षभेति । तत्र सात्वतर्षभेन सात्यकिना विसृष्टः प्रयुक्तो मार्गणो वाणः क्षिप्रं शीघ्रं उज्झितः त्यक्तः गुणो मौर्वी सत्वादिश्च येन सः पुनः विभास्वरा भास्वद्वपुः दूरं उन्नतो उत्थितः अतः कृष्णभक्तइव विष्णुपदे आकाशे नारायणचरणे च लीनतां लयं ययौ प्राप । उपमा । ११५ ॥

लोकहास रसितै प्रकाशिता
स्वापराद्ध शरता महानदी।
मानशाल मवपाट्य सात्यके
र्ह्रीजलाप्लुत मधान्मनोवनं। ११६॥
(युग्मकं)

कंसभा स्वदुदये बिलीनतां
पेचकाइव गताः क्व चाधुना।
वृष्णायश्च विधुराम तेजसा
गर्विता खलु वृथाविकत्थनाः।११७॥

लोकहासेति। लोकहासानां दर्शकहसितानां रसितैः शब्दैः प्रकाशिता परिस्फुटा स्वस्य अपराद्धशरता लक्ष्यच्युत-सायकत्वं सैव महानदी "अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युत सायक इत्यमरः" सात्यिकेः मानोभिमानः एव सालः वृक्षः तं अवपाट्य मनः चित्तमेव बनं तत् ह्रीः लज्जेव जलं तेनाप्लुतं व्याप्तं अधादकरोत् रूपकं। ११६॥

कंसेति। वृष्णयो यदवः कंसः भास्वान् सूर्यइव तस्य उदये अभ्युदये पेचका उलूका इव क्व कुत्र विलीनतां गताः प्राप्ताः निभृतमवस्थिताः च पुनः अधुना॰विधुरामतेजसा कृष्णा-वलयोः पराक्रमेण अन्यत्र विधोः चन्द्रस्य रामतेजसा मनोहर भासा गर्व्विता दर्पिताः किन्तु वृथाविकत्थनाः वृथात्मश्लाघिनः खलु। उपमा। ११७।

एवमादि जनतोच्च जल्पन
व्याजवायु रथसात्यकेः करान् ।
भ्रंशयन् धनुरलेपयन्मुखं
तत्क्षणोत्थमलिनत्व पांशुभिः । ११८ ॥
( विशेषकं )

नापयामि सदसो विमानितः
संस्थितिर्भवतुमेऽत्र केवलं ।
निन्दनं खलुपरोक्षतो यथा
नोसमक्ष मपि तादृशं भवेत् । ११९ ॥

एवमिति । एवमादि इत्यादिकं पूर्वोक्तं जनतायाः लोकसमूहस्य यत् उच्चजल्पनं उच्चैः कथनं तदेव वायुः वातः अथ अनन्तरं सात्यकेः कराद्धस्तात् धनुः भ्रंशयन् पातयन् मुखं वदनं तत्क्षणोत्थैः तत्कालोद्गतैः मलिनत्वैः मालिन्यैरेव पांशुभिः धूलिभि रलेपयत् लेपयामास । लोकोपहास श्रवणेन सात्यकेः मुखं मलिनं बभूव हस्ताद्धनुश्च पपातेतिभावः । रूपकं । ११८ ॥

अथ त्रिभिः सात्यकेरवस्थां वर्णयति—

नेति । विमानितः अपमानितोऽहं सदसः सभायाः नापयामि अपगच्छामि अत्र सभायां मे संस्थितिरवस्थितिः केवलं भवतु । हेतुप्रदर्शनपूर्व्वकं तत्समर्थयति । निन्दनमिति, निन्दनं लोकनिन्दा परोक्षतः निन्दस्येऽतिशेषः परोक्षे यथा यादृशं भवेत् समक्षं निन्द्यस्य पुरः तादृशं नो भवेत्खलु । अतः अत्र मदवस्थानं युक्तमिति भावः । अर्थान्तरन्यासः । ११९ ॥

कृष्णयोर्मदधिकास्त्र कौशलं
नोऽपरस्य भुविविद्यते यतः।
एक एव जनिता तयोः कृती
तद्विलोक्य भविताऽस्मि निर्वृतः।१२०॥
एव मादिक विचारणैरसौ
मञ्चकाय गलहस्तितोऽभ्यगात्।
ब्रीडितोऽपिहि भविष्य दुन्नति
प्राप्तये स्थितिमिहेच्छते जनः। १२१॥
नारदीय रदचन्द्र चन्द्रिका
दीप्तवर्ण विनिर्दिश भारती।

कृष्णयोरिति। यतः भुवि कृष्णयोः श्रीकृष्णार्जुनयोः मत् अधिकं उत्कृष्टं अस्त्रकौशलं शस्त्रनैपुण्यं विद्यते अपरस्य तद्भिन्नस्य न अतः तयोः कृष्णार्जुनयोः एकः कृती कृतकार्य्यो जनिता भविष्यति एव। तत् कृष्णयोः कृतकार्य्यत्वं विलोक्य दृष्ट्वा निर्वृतः सुखितो भविताऽस्मि। १२०॥

एवमिति। असौ सात्यकिः एवमादिक विचारणैः इत्यादि विचारैः गलहस्तितः प्राप्तगलहस्तः बलात्कृतः सन् मञ्चकाय स्वासनोपवेशनार्थं अभ्यगात् अगमत्। हि जन लोकः ब्रीडितो लज्जितोऽपि भविष्यदुन्नतिप्राप्तये भाव्युन्नत्य प्राप्त्याशया इह स्थितिं अवस्थानं ईहते इच्छतीत्यर्थः। अर्थान्तरन्यासः।१२१॥

नारदीयेति। अथ सात्यकिवैफल्यानन्तरं तदा नारदीयानां नारदसम्बन्धिनां रदानां दन्तानामेव चन्द्राणां या चन्द्रिका

कर्णं कर्णं पदवीमथोच्चकै
र्लक्ष्यवेधनकृतेऽविशत्तदा । १२२ ॥
निर्द्धनो निधिमिवार्थितं चिरं
प्राप्यचाधिरथिरार्षभाषितं ।
लक्ष्मणां करागतामिवान्वमात्
कुर्व्वतः कृतिन एव सिद्धयः । १२३ ॥
आसनात्सममसौ सुहृन्मुदा
प्रोत्थितोऽप्यवतरन् सहाशया ।

ज्योत्स्ना तया दीप्तवर्णा भास्वदक्षरा विनिदेशभारती आदेशवचनं लक्ष्यवेधनकृते शरव्यवेधार्थं कर्णस्य अङ्गेश्वरस्य कर्णपदवीं श्रवणमार्गं उच्चकैः अविशत् विवेश, अथ कर्णो लक्ष्यवेधार्थं नारदादेशं प्रापेति भावः । १२२ ॥

निर्द्धन इति । किञ्चेतिचार्थः आधिरथिः कर्णः चिरं अर्थितं काङ्क्षितं आर्षभाषितं ऋषिवचनं लक्ष्यवेधादेशमित्यर्थः निर्द्धनः चिरं अर्थितं निधिं सम्पत्तिमिव प्राप्य लक्ष्मणां करगतां प्राप्तामिव अन्वमात् अनुमेने हि कुर्व्वतः कार्य्यमारभमाणस्य कृतिनः कुशलस्य जनस्य सिद्धयः फललाभाः भवन्त्येव । उपमार्थान्तरन्यासौ । १२३ ॥

आसनादिति । असौ कर्णः आसनात् मञ्चकात् सुहृदां मित्राणां दुर्य्योधनादीनां मुदा आनन्देन समं सह प्रोत्थितः उद्गतः अपि मद्रराजदुहितुः लक्ष्मणायाः आशया कृष्णाप्राप्त्याशया सह, प्रवतरन् अवतीर्णः सन् जनानां लोकानां अक्षिभिः लोचनैः

मद्रराज दुहितु र्जनाच्चिभिः
सार्द्धमाप लघुलक्ष्य सन्निधिं । १२४॥
ज्यामशैशिनिकुलो द्भवार्पितां
चापतः शिथिलयन् पुन स्तथा ।
सन्दधे जनतया यथाचिरं
प्रत्यगायि न हि तस्य तत्कृतिः ।१२५॥
दोलयन् सहज कुण्डले
घनामन्द्र नाद उदय द्रदद्युतिः ।
स्वर्णताल सदृशः सदः सदः
स्तम्भयन्निति जगौ सनिर्द्दरं । १२६ ॥

सार्द्धं लघु शीघ्रं लक्ष्यस्य सन्निधिं समीपं प्राप जगाम । स्वभोक्तयः । १२४ ॥

ज्यामिति। असौ कर्णः शिनिकुलोद्भवेन सात्यकिना अर्पितां आरोपितां ज्यां मौर्व्वीं शिथिलयन् पुनः तथा तेन प्रकारेण सन्दधे यथा येन प्रकारेण जनतया लोकसमूहेन तस्य कर्णस्य तत्कृतिः तद्गुणारोपणकार्य्यं चिरं न प्रत्यगायि न प्रतीता। एतेन गुणारोपण लाघवं सूचितं, अतिशयोक्तिः ।१२५॥

दोलयन्निति। सहजे सहजाते कुण्डले दोलयन् घनसेव आमन्द्रः नादः ध्वनिर्यस्य सः उदयन्तो रदानां दन्तानां द्युतिर्यस्य सः ( अयगताविति धातुं केचित् परस्मैपदिनं पठन्ति अतः उदयति विततोद्ध्वरश्मिरज्जाविति माघकविनोक्तं ) स्वयं स्वर्णताल सदृशः गौरोन्नतः सः कर्णः सदः सदः सभ्यान् स्तम्भयन् इति वक्ष्यमाणं निदरं निर्भयं जगौ कथयामास। उपमातिशयोक्ती । १२६ ॥

पश्यताद्य ममविक्रमं जना,
वैरिणामिव विभिद्य मानसं ।
लक्ष्यमीन मिहमीन लोचनां
दापयामि नु सुयोधनाय तां । १२७ ॥

भानुजानन विधोरितो द्रवा-
क्कौमुदीपर मुदीत्य कौरवान् ।
कैरवाणि च विकाश्य लक्ष्मणा
वक्त्रपद्म मलिनत्व मातनोत् । १२८ ॥

( युग्मकं )

गर्जतान मनुजो विनाश्यते
द्वीपिनेति न वचोऽस्त्यपार्थकं ।

पश्यतेति । जनाः ! दर्शकाः ! अद्य ममविक्रमं पश्यत अवलोकयत यूयमितिशेषः इह वैरिणां शत्रूणां मानसं मन इव लक्ष्यमीनं शरव्यभूतमत्स्यं विभिद्य विध्वा तां मीनलोचनां तां लक्ष्मणां सुयोधनाय दापयामि । उत्प्रेक्षा । १२७ ॥

भानुजेति । इति पूर्वोक्तप्रकारा द्रवा दीप्ता वाक् वाणीव कौमुदी चन्द्रिका भानुजस्य सूर्यपुत्रस्य कर्णस्य आननविधोः मुखचन्द्रात् उदित्य आविर्भूय कौरवान् दुर्य्योधनादिन् कैरवाणि कुमुदानि व्यस्तरूपकं, परंविकाश्य लक्ष्मणायाः वक्त्रपद्मस्य मुखकमलस्य मलिनत्वं मालिन्यं आतनोत् अकरोत् रूपकं । । १२८ ॥

गर्जितेति । गर्जता शब्दायमानेन द्वीपिना, व्याघ्रेण ( शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः ) मनुजो मनुष्यः न विनाश्यते

किं वृथा सखि विषीदसी दृशै।
र्वातुल प्रलपनै र्हरि प्रिये। १२९ ॥
लच्यपावक इदं परीच्यते
हाटकं किमथवा रकूटकं।
चाम्यतु चणमिमं मृगेचणे
लक्ष्मणामिति सखीगणोऽभणत् ।१३०
विक्रमै र्यदिह कन्यकार्जनं
बाहुजाचरण मेतदुच्यते।

न खाद्यते इति एतद्वचः मपार्थकं मिथ्या भूतान, हे हरिप्रिये! सखि! इदृशैः वातुलसैव प्रलपनैः निरर्थकवाक्यैः वृथा किं, कथं विषीदसि विषस्मा भवसि। दृष्टान्तोपमे। १२९॥

लच्यपावक इति। इदं एतत् कर्णोक्तं हाटकं अथवा किं आरकूटकं पित्तलं (स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकं रीतिस्त्रिया मारकूट मितिचामरः) लचोऽ भव्यएव पावके बह्नौ परीच्यते परीचिष्यते। वर्त्तमान समीपेऽलट्। हे मृगेचणे इमं चणं चाम्यतु भवतीतिशेषः, इति एवं श्लोकद्वयोक्त प्रकारेण सखीगणः लक्ष्मणां अभणत् अकथयत्। रूपकं।१३०॥

विक्रमैरिति। इह जगति विक्रमैः पराक्रमैः यत् कन्यकार्जनं स्त्री प्राप्तिः, एतत् बाहुजानां चत्रियाणां आचरणं आचारः (बाहुजः चत्रियो विराड़ित्यमरः) उच्यते कथ्यते सूतजस्य सारथि पुत्रस्य हयचालनं घोटक प्रेरणं वृतिः कार्य्यं उच्यते, इति पूर्णान्वयः सद्भिरितिशेषः तत् हयचालनं साध्यतां

सूतजस्य हयचालनं कृतिः
साध्यतां तदिति भीमवागभूत् । १३१॥
भीमवागिषु चलन्मनो मृगः
कार्य्य गौरव निरुत्तरोऽर्कजः ।
नारदीय गदिता धिकार वा-
नादधे धनुषि धौत माशुगं । १३२ ॥
लक्ष्यबिम्ब कृतमीन खेलनं
स्तम्भमूल गत कुण्डवारि तत् ।

क्रियतां, इत्युक्तप्रकारा भीमस्य वृकोदरस्य वाक् वचनं अभूत् अजनि । १३१ ॥

भीमेति । भीमस्य वागेव इषुः बाणः तेन चलन् चञ्चलः मनः चित्तमेव मृगो हरिणो यस्य सः किन्तु कार्य्यस्य लक्ष्य-भेदनरूपस्य गौरवेण निरुत्तरः प्रतिवचनरहितः नारदीय गदितेन नारदादेशेन अधिकारवान् लक्ष्यवेधार्थं प्राप्ताधिकारः अर्कजः कर्णः सूर्य्यपुत्रलाभिमानीति गम्यते धनुषि धौतं तीक्ष्णं आशुगं बाणं आदधे संहितवान् । रूपकं । १३२ ॥

लक्ष्येति । लक्ष्यस्य शरव्यस्य विम्बेन प्रतिविम्बेन कृतं सम्पादितं मीनखेलनं मत्स्यक्रीड़ा यस्मिन् तत् तत् पूर्व्ववर्णितं स्तम्भस्य शरव्याधारस्य मूलगते निम्नस्थे 'कुण्डे वारि जलं विम्बितस्ववदनेन प्रतिविम्बित निजमुखेन आहिताम्बुजं पद्मयुक्तं कुर्व्वतः अस्य कर्णस्य सरसीभ्रमः इयं पुष्करिणीति

विम्बित स्ववदना हिताम्बुजं
कुर्व्वतोऽस्यसरसी भ्रमोऽभवत् । १२३ ॥

निश्चयाय पुनरुद्ध मीक्षणं
प्रेरयन्नय मधोमुख स्ततः ।
झंझणात् क्वणित हैमदंशनः
सायकं व्यसृजदत्र सूतजः । १२४ ॥

सांकृति श्रुति चमत्कृतै र्जनै
र्नैक्षि कैरपि सकर्ण मार्गणः ।
कीर्ण रश्मिचय धारयायनं
चापतोऽस्य ददृशे शरव्यगं । १२५ ॥

भ्रान्तिः कुण्डजल इतिशेषः अभवत् संजातः । अतिशयोक्तिः भ्रान्तिमांश्च । । १२३ ॥

निश्चयेति । अत्र अयं सूतजः कर्णः निश्चयाय शरव्यं निश्चेतुं पुनः उर्द्ध ईक्षणं नेत्रं प्रेरयन् पश्यन्नित्यर्थः ततः तदनन्तरं अधोमुखः लक्ष्यविम्वनिहित दृष्टिः झंझणादिति क्वणितं ध्वनिर्यस्य तत् हैमदंशनं सहज स्वर्ण कवचो यस्य सः तथोक्तः सन् सायकं वाणं व्यसृजत् विसर्जयामास । स्वभावोक्तिः । १२४ ॥

साङ्कृतीति । सः प्रयुक्तः कर्णस्य मार्गणो वाणः साङ्कृति-श्रुत्या वाणगमनजनित साङ्कारशब्दश्रवणेन चमत्कृतैः चकितैः कैरपि जनैः न ऐक्षि न दृष्टः किन्तु चापतः धनुषः आरभेत्यर्थः शरव्यगं लक्ष्यपर्य्यन्तगामिनं कीर्णानां विक्षिप्तानां रश्मिचयाणां वाणकिरणसमूहानां धारया रेखया अस्य वाणस्य अयनं मार्गः ( अयनं वर्त्म मार्गाध्वपन्थान इत्यमरः ) ददृशे दृष्टः अतिशयोक्तिः । १२५ ।

कर्णवाणमवकीर्णिनं यथा
लक्ष्य कीर्णमभिवीक्ष्य दर्शकाः।
धिक् विकत्थन मिति ध्वनि प्रथा
धूत माधिरथि हृत्परं व्यधुः। १२६॥
मार्गणांशु गणमार्ग वीक्षणात्
लक्ष्यवेध धिषणाधिबाधितं।
मद्रजा हृदुपहास निस्वनैः
पश्यतां प्रशमितं समक्षणं। १२७॥

कर्णवाणमिति। दर्शकाः जनाः अवकीर्णिनं यथा क्षतव्रतं ब्रह्मचारिणमिव लक्ष्यकीर्णं शरव्यभ्रष्टं उद्देशाभ्रष्टञ्च कर्णस्य वाणं शरं अभिवीक्ष्य दृष्ट्वा आधिरथिहृत् कर्णहृदयं विकत्थनं आत्मश्लाघां धिक् अस्तु इति ध्वनिप्रथाभिः अपवाद शब्द प्रख्यापनैः धूतं कम्पितं परं केवलं व्यधुः कृतवन्तः। उपमातिशयोक्ती। १२६॥

मार्गणेति। मार्गणस्य कर्णवाणस्य यः अंशुगणः किरण समूहः तस्य यो मार्गः पद्धतिः रेखितियावत् तस्य विक्षणाद्दर्शना-द्धेतोः लक्ष्यवेधधीषणया लक्ष्यवेधनवुद्ध्या यः आधिः मनोव्यथा तेन वाधितं पीड़ितं मद्रजायाः लक्ष्मणायाः हृत् हृदयं पश्यतां दर्शकानां उपहास निःस्वनैः समक्षणं तत्कालमेव प्रशमितं निवृत्तवाधमभूदित्यर्थः। अतिशयोक्तिः। १२७।

किन्नविद्ध मिहलक्ष्य मर्ज्जिता
मद्रजापि किमुनो सुयोधने।
नार्पिता च भवता धनुर्द्धरे
त्याह सस्मित मथस्म मारुतिः। १३८॥

भूभरं सुवहता हिनेट्टशं
कत्थितं जितवतार्जुनेनवा।
द्रौपदीं न कृत मौद्धवुद्धतं
भाषणं जनतयेति जल्पितं। १३६॥

हृष्टता न्टपसुतां विवर्ण्णता
कर्ण्णमस्य सुहृदो विषण्णता।

किमिति। अथ लोकोपहासानन्तरं मारुतिः भीमः सस्मितं मन्दहासपूर्व्वकं आहस्म अकथयत्। तदुक्तं प्रकटयति। हे धनुर्द्धर! भवता लक्ष्यं न विद्धं किं अपि मद्रजा लक्ष्मणा नो अर्जिता प्राप्ता किमु सुयोधने च नार्पिता न प्रतिपादिता किं इति कर्म्म परिहासोक्तिरियं व्याजस्तुतिः। १३८॥

भूभरमिति। भूभरं पृथ्वीभारं सुवहता अक्लेशं धारयता अहिना सर्पेण शेषेण ईदृशं एतादृशं कर्ण्णोक्तप्रकारमित्यर्थः न कत्थितं श्लाघितं वा द्रौपदीं जितवता लक्ष्यवेधपुरःसर मुपार्ज्जितवता अर्ज्जुनेन ईदृक् उद्धतं भाषणं न कृतं इति एवं प्रकारेण जनतया लोकसमूहेन जल्पितं कथितं। अप्रस्तुत प्रशंसा। १३९।

हृष्टतेति। तदा हृष्टता हर्षः नृपसुतां लक्ष्मणां सत्वरं आविशत्तरां अतिशयेन प्रविवेशेत्यर्थः क्रियेयं सर्व्वत्रयोज्या

पाण्डवानपि सहास्यता तदा
सत्वरं युगपदाविशत्तराम् । १४० ॥
ज्यामसौ समवरोप्य कार्मुका-
द्गन्तुमैहत यदा सदोगृहात् ।
नव्यभाव बलिना स्वचेतसा
किं तदा न सुहृदेव वारितः । १४१ ॥
लक्ष्मणा खलु यदा विवेधकं
यं कमप्यभि वरीतु मेष्यति ।

विवर्णता वैवर्ण्यं कर्णं अङ्गेश्वरं तथा विपन्नता विषादः अस्य कर्णस्य सुहृदः मित्राणि अपिच सहास्यता उपहासयोगः पाण्डवान् भीमादीन् युगपत् आविशत्तरां पर्यायोक्तिः । १४० ॥

ज्यामिति । असौ कर्णः कार्मुकात् धनुषः ज्यां गुणं समवरोप्य शिथिलयित्वा यदा यस्मिन्नवसरेसदोगृहात् गन्तुं वहिर्निर्गन्तुं ऐहत अचेष्टत तदा तस्मिन्नवसरे नव्यभावेन नूतनेनाशयेन बलिना सबलेन नूतनभावाविर्भावात्सोत्साहेन स्वचेतसा निजमनसा सुहृदा मित्रेणेव न वारितः निर्गमना न्न निवारितः किं निवारित एव । उपमा । १४१ ॥

कर्णस्याशयं विवृणोति । लक्ष्मणेति । लक्ष्मणा यं कमपि विवेधकं लक्ष्यवेधनकारिणं अभिवरीतुं वृणमालामर्पयितुं यदा एष्यति आगमिष्यति खलु तदा रुक्मिणीं भीष्मकपुत्रीं हरिः कृष्णादिव तां लक्ष्मणां आहरन्नपहरन् इतः अस्मात्

रुक्मिणीं हरिरिवा हरन् तदा
तामितः कलयितास्मि निर्भरं ।१४२॥

इत्थमुत्थित मनोरथ च्युत
व्रीलतेऽधिरथजे तदोन्मुखे ।
मञ्चकाय हसिताञ्चिताननाः
लक्ष्मणां सुचतुरालि रालपत् ।१४३॥

क्वाद्यसुभ्रु शरदभ्र गर्जित
व्यर्थमत्र गलितं विकत्थनं ।
सार्व्वभौम समवागयं क्षणात्
यातितस्कर दशां विलोकय ।१४४॥

प्रदेशात् निर्भरं कलयितास्मि पलायिष्यइत्यर्थः कलेः कामधेनुत्वात्। उपमा। १४२॥

इत्थमिति। तदा इत्थं एवंप्रकारेण उत्थितेन उन्नतेन मनोरथेन अभिलाषेण रथेनेति गम्यते च्युता नष्टा व्रीलता लज्जावल्ली यस्य तस्मिन् अधिरथजे कर्णे मञ्चकाय स्वासनाय उन्मुखे गन्तुं प्रवणे सति हसितेन अञ्चितं शोभितं आननं मुखं यस्याः सा सुचतुरा आलिः सखी लक्ष्मणां आलपत् अकथयत्। रूपकं। १४३॥

अथ पञ्चभिः श्लोकैः सच्युक्तिं दिशिनष्टि—

क्वेति। हे सुभ्रु! शरदभ्रवगर्जितमिव व्यर्थं विफलं अस्यकर्णस्य विकत्थनं आत्मश्लाघा अत्रक्वगलितं गतं सार्व्वभौमस्य मण्डलेश्वरस्य समा सदृशीवाक् वचनं प्रागल्भ्यमिति यावत् यस्य तथोक्तः अयं कर्णः क्षणात् तस्करदशां चौरावस्थां याति प्राप्नोति विलोकय पश्य। उपमा निदर्शने। १४४॥

आयतिं नहि विलोक्य कुर्व्वते
लाघवाय गलगर्ज्जनं खलाः ।
सज्जनाः फलमुखेन पौरुषं
दर्शयन्ति सहज त्रपानताः । १४५ ॥

किञ्चिदुन्नति मवाप्य निचजः
स्वं समुच्च मचलाच्चमन्यते ।
सत्कुलो भवति यावदुन्नतस्ता
वदेति मनसा रसातलं । १४६ ॥

नीचशीलकुल एष सूतजः
सौहृदात् कुरुकुलस्य दुर्मदः ।

आयतिमिति । खलाः दुर्ज्जनाः आयतिं फलकालं न विलोक्य दृष्ट्वेत्यर्थः लाघवाय लघुतां लब्धुं गलगर्ज्जनं वृथा कण्ठध्वनिं कुर्व्वते कुर्व्वन्ति तथा सहजत्रपया स्वाभाविकलज्जया आनताः नम्राः सज्जनाः साधवः फलमुखेन सिद्धिद्वारा पौरुषं पराक्रमं दर्शयन्ति प्रकटयन्ति । अप्रस्तुत प्रशंसा । १४५ ।

किञ्चिदिति । नीचजः नीचकुलोत्पन्नः किञ्चित् ईषत् उन्नतिं उत्कर्षं अवाप्य स्वं निजं अचलात् पर्व्वतापेक्षया समुच्चं अत्युच्चं मन्यते जानाति सत् कुलं वंशोयस्य सः सत्कुलप्रसूतः यावत्परिमाणेनोन्नतः उत्कृष्टः भवति तावत्परिमाणेन मनसा चित्तेन रसातलं एति प्राप्नोति मनसा स्वं अतिनीचैर्मन्यत इत्यर्थः । अप्रस्तुत प्रशंसा । १४६ ॥

नीचेति । नीचे निकृष्टे शीलकुले स्वभाववंशौ यस्य सः कुरुकुलस्य दुर्य्योधनादेः सौहृदात्सख्यात् दुर्मदः दर्पितः एषः

द्रोणराम परिशिक्षया वलै
र्बाहुजान् तृणमिवावमन्यते। १४७॥
ईदृगेष च विमानितो यत-
स्त्यक्तलज्ज उपयाति न व्यथां।
सर्वतः प्रकटय न्निकृष्टता
मस्यतन् भवति साधुलक्षणं। १४८॥
शक्रसूनुरय मेतु वेधने
कृष्ण इत्थ ममर्षि भाषिते।

सूतजः कर्णः द्रोणात् रामात्परशुरामाच्च परिशिक्षया अस्त्र-शिक्षया हेतुना वलैः पराक्रमैः वाहुजान् क्षत्रियान् तृणमिव अवमन्यते। काव्यलिङ्गोपमे। १४७॥

ईदृगिति। ईदृक् एवं प्रकारं विमानितः अपमानितः एष कर्णः त्यक्तलज्जः लज्जाहीनः सन् व्यथां दुःखं न उपयाति प्राप्नोति यतः, तत्व्यथाभावरूपं सर्वतः सर्व्वत्र निकृष्टतां अस्य नीचत्वं प्रकटयत् प्रख्यापयत् एतत् अस्य कर्णस्य सम्वन्धे साधुलक्षणं सज्जनचिह्नं भवति सज्जना न व्यथन्ते सति व्यथा कारणे इति कर्णस्याशयः अपमानितोऽप्ययं नीचत्वान्नलज्जत इति सर्वेषामाशय इति भावः। काव्यलिङ्गं। १४८।

शक्रसूनुरिति। शक्रस्य इन्द्रस्य सूनुः पुत्रः अयं कृष्णः अर्जुनः वेधने विषये एतु आगच्छतु, इत्थं एवंप्रकारेण अमरर्षेः नारदस्य भाषिते आदेशवचने सति लक्ष्मणा शक्रसूनुपदात् इन्द्रानुजं कृष्णमस्मात् श्रीकृष्णं वेधन प्रेरितं मत्वे तिभावः। (सूनुपुत्रेऽनुजेरवाविल्यमरः) स्मितेन मन्दहासेन विलिप्तं धौतं संसृष्टमित्यर्थः यौवतं युवतीसमूहो यया सा सती एतेन हर्षः

लक्ष्मणास्मित विलिप्त यौवता
नौपसून सुषमैक्षत क्षमां। १४९ ॥
कृष्णनाम कलनोत्कमद्रजां
भावबोध चतुरालि रालपत्।
आप्तविज्ञतमया वयस्यया
भ्रान्तिभञ्जन मवश्य मिष्यते। १५०॥
किञ्जलं कलयसे मरीचिका
दर्शनेन हरिणेक्षणे सखि।

सूचितः सस्मितं युवतीः दृष्ट्वेतिभावः नौपसूनस्य कदम्बपुष्पस्य सुषमा शोभेव शोभा यस्याः सा रोमाञ्चिता सती एतेन सात्विकोदय उक्तः क्षमां भूमिं ऐक्षत दृष्टवती एतेन लज्जोदय उक्तः लक्ष्यवेधनार्थं मज्जु नादेशं भ्रान्तया शब्दसाम्यात् कृष्णादेशं मत्वा लक्ष्मणा हृष्टारोमाञ्चिता लज्जिता च भवत्। वक्रोक्तिः।१४९॥

कृष्णनामेति। भावबोधे अभिप्रायज्ञाने चतुरा निपुणा आलिः सखी कृष्णनाम्नः कलनेन ज्ञानेन उत्कां उत्कण्ठितां मद्रजां लक्ष्मणां आलपदकथयत्। हि आप्तविज्ञतमया अतिविश्वस्तया अतिनिपुणाया वयस्यया सख्या भ्रान्तिभञ्जनं भ्रमसंशोधनं अवश्यं निश्चितं इष्यते अभिलष्यते अर्थान्तरन्यासः।
।१५०॥

किमिति। हे हरिणेक्षणे? सखि! मरीचिकाया मृगतृष्णायां दर्शनेन किं कथं जलं कलयसि जानासि अथवा मरीचिकादर्शने सति जलं न कलयसि किं इतिकाकुः अतः अतिप्रियाप्यहं सौख्यदं सुखप्रदं ते इमं भ्रमं अर्जुनादेशे कृष्णादेशज्ञानमित्यर्थः तत्त्वाचः यथार्थवचनान्येव असयः

तत्तु बाग सिभिर प्यतिप्रिया
सौख्यदं भ्रममिमं छिनद्मिते। १५१॥
आख्ययाय मपि वर्ण सम्पदा
कृष्णाता मुपगतः पृथासुतः।
कृष्ण सत्प्रिय सखोऽर्जुनो
मुनेराज्ञयापि नतु कृष्णईश्वरः।१५२
हासकेलिरिव कृष्ण कृष्णयो-
र्यास्यसार्द्ध मिह सत्यभामया।
कृष्णनाम्नउदभूच्च भावुके
भाविनी सममसुष्य सात्वया। १५३॥

खड्गाः तैः छिनद्मि छेत्स्यामि (वर्त्तमान सामीप्येलट्) भवत्याः भ्रमभञ्जनं करिष्यामीत्यर्थः। अप्रस्तुत प्रशंसारूपके। १५१॥

आख्ययेति। आख्या नाम्ना वर्ण सम्पदा कान्त्यापि कृष्णातां उपगतः वर्णेन नाम्नाच कृष्ण इत्यर्थः कृष्णस्य श्रीकृष्णस्य सत्प्रियसखः उत्तमप्रियमित्रः पृथासुतः कुन्तीपुत्रः अयं अर्जुनः मुनेः नारदस्य आज्ञया कन्या आपि प्राप्तः गृहीत इत्यर्थः तु पुनः ईश्वरः श्रीकृष्णः न आपि नारदेनार्जुन आदिष्टः न तु श्रीकृष्णः इतिभावः। १५२॥

हासकेलिरिति। कृष्णकृष्णयोः श्रीकृष्णद्रौपद्योः इव कृष्ण नाम्नः कृष्णाभिधस्य अस्य अर्जुनस्य सत्यभामया श्रीकृष्णमहिष्या सार्द्धं सह इह या हास्यकेलिः परिहासकौतुकं उदभूत् उद्भूता। हे भावुके! सा हास्यकेलिः त्वयाभवत्यासमं सह अमुष्य एतस्यार्जुनस्य भाविनी भविष्यतीति श्रीकृष्णसखत्वात् अर्ज्जुनस्य त्वयासह परिहासो भविष्यतीतिभावः। उपमा। १५३॥

कृष्ण एष खलु मां ग्रहीष्यति
द्रौपदीमिव न मन्यतामिदं ।
सोऽन्य दुर्भिद शरव्य भेदकः
कृष्ण एव भवितापरः प्रियः । १५४ ॥

आलिभाषित मिदं नृपात्मजा
मानसाद्वितथ सौख्यमुत्क्षिपत् ।
भाविभावुक सुधाभरै र्भृतं
तच्चकार दयिताप्ति सस्पृहं । १५५ ॥

शैलतो जलदवत्तदासना
दुत्थितो मुहुरकैः स आह्वयन् ।

कृष्णइति । एषः कृष्णः अर्ज्जुनः द्रौपदीमिव मां ग्रहीष्यति लक्ष्यवेधनपूर्व्वकं परिणेष्यति खलु इदं एतत् न मन्यतां न विचार्य्यतां किन्तु अन्यैःवीरान्तरैः दुर्भिदस्य दुर्व्वेध्यस्य शरव्यस्य लक्ष्यस्य भेदकः वेधनकारी सः प्रसिद्धः अपरः कृष्णः श्रीकृष्ण एव प्रियः भवत्याः पतिः भविता भविष्यति । उपमा । १५४ ॥

आलिभाषितमिति । इदं पूर्व्वोक्तं आलिभाषितं सखीवचनं नृपात्मजायाः लक्ष्मणायाः मानसात् मनसः वितथसौख्यं वृथानन्दं श्रीकृष्णवेधनभ्रमादितिभावः उत्क्षिपत् उत्सारयत् सत् भावि भविष्यत् यद्भावुकं मङ्गलं कृष्णपाणिग्रहणरूपमित्यर्थः । तदेव सुधाभराः अमृतसन्दोहा तैः भृतं पूर्णं कृष्णएवभविता परः प्रिय इत्युक्त्या हृष्टं तत् नृपात्मजामानसं दयिताप्तौ प्रियप्राप्तौ सस्पृहं साभिलाषं चकार । रूपकं । १५५ ॥

शैलतइति । तदा सः किरीटभृत् अर्ज्जुनः शैलतः पर्व्वतात् जलदवत् मेघइव आसनात् उत्थितः उत्तिष्ठन् मुहुरकैः आनन्द-

ह्लन्दिसर्व्वसुहृदां द्विषां दशा
मध्वगस्य विदधे किरीटम्हत् । १५६ ॥
एष आप्स्यति सुतां नरेशितु
द्रौपदी ग्रहविवृद्ध साहसः ।
एव मीक्षक मनोगताशयं
सम्परीक्षितु मिवार्जुनोययौ ।१५७॥
नोभिनद्मि किमुलक्ष्य मित्ययं
सम्प्रतीति परिमुग्ध मानसः ।
ज्ञानमागम पटुर्यथा वटौ
ज्यां नते धनुषि हेलयार्पयत् ।१५८॥

जलैः सर्व्वसुहृदां समस्तमित्राणां ह्लन्दि मनांसि आर्द्रयन् स्तिमितानि कुर्व्वन् द्विषां शत्रूणां अध्वगस्य पथिकस्य दशां अवस्थां विदधे विहितवान् । उपमारूपकनिदर्शना: । १५६ ॥

अर्ज्जुनः । द्रौपद्या ग्रहेण ग्रहणेन विवृद्धसाहसः उपचित पराक्रमः एषः अयं नरेशितुः सुतां राजपुत्रीं लक्ष्मणां आप्स्यति प्राप्स्यति एवं इत्याकारकं ईक्षकाणां दर्शकाणां मनोगतं चित्तस्थं आशयं अभिप्रायं संपरीक्षितुमिव दर्शकाशयः सत्यं मिथ्यावेति परीक्षार्थमिवेत्यर्थः ययौ लक्ष्यवेधनार्थं जगाम। काव्यलिङ्गोत्प्रेक्षे । १५७ ।

नविति । लक्ष्यं नो भिनद्मि किंसु नभेत्स्यामि किं भेत्स्यामेव इति सम्प्रतीत्या विश्वासेन परिमुग्धं मानसं यस्य सः अयं अर्ज्जुनः आगमपटुः शास्त्रज्ञोजनः नते नम्रे वटौ ब्रह्मचारिणि ज्ञानं यथा नते नम्रे धनुषि हेलया अक्लेशेन आर्पयत् आरोपयामास उपमा । १५८ ।

तत्त्रवेधन विधानुसारतः
शक्रजस्य विशिखः प्रयुञ्जतः ।
लक्ष्यमात्त गतिरस्पृशत् परं
शिष्यवत् गुरुपदं विभेदनो । १५८ ॥

लक्ष्यमास्पृशति पाण्डवाशुगे
मद्रजान्त रुदमूर्च्छि मूर्च्छया ।
हर्षजं हसित मीक्षकास्यगं
नोपहास परिणाम मापकिं । १६० ॥

कुण्डवारिणि विलोक्य विम्बितां
स्वांकृतिं नृपजयेव सन्मुदा ।

तत्रेति । तत्र वेधनविधानुसारतः लक्ष्यवेधननियमानुसारेण प्रयुञ्जतः विसृजतः शक्रजस्य अर्ज्जुनस्य विशिखः बाणः आत्तगतिः गच्छन् सन् गुरोः अध्यापकस्य पदं पादं शिष्यवत् छात्रइव लक्ष्यं शरव्यं परं केवलं अस्पृशत् पस्पर्श नोविभेद न विद्धवान् । उपमा । १५८ ॥

लक्ष्यमिति । पाण्डवाशुगे अर्जुनबाणे लक्ष्यं शरव्यं आईषत् स्पृशति सति मूर्च्छया मोहेन मद्रजायाः अन्तः मनसि उदमूर्च्छि वर्द्धितं पुनः ईक्षकानां दर्शकाणां आस्यगं मुखगतं हर्षजं आनन्दजनितं हसितं हासः अर्जुनशरस्य लक्ष्यस्पर्शादितिभावः उपहासपरिणामं उपहासत्वेन परिणतिं लक्ष्यवेधाभावदर्शनादितिभावः न आपकिं प्रापैव । १६० ॥

कुण्डवारिणीति । विजयः अर्जुनः कुण्डवारिणि विम्बितां प्रतिबिम्बितां स्वां स्वकीयां कृतिं कार्य्यं शरप्रयोगरूपं

लिङ्गितो विजय उन्मुखः शरात्
स्वादवाप किमु नम्रवक्त्रतां। १६१॥
(कुलकं)

विक्रमोऽत्र न परीक्ष्यते पुनः
भाग्यमेव खलु मन्महे यतः।
स्त्रीगुणामृतनदी सुलक्षणा
लक्ष्मणा भजति लक्ष्य लभ्यतां १६२॥

यज्ञसेन कृतलक्ष्य वेधिना
वीरवर्य्य निवहाग्रयायिना।

विलोक्य नृपजया लक्ष्मणयेव सम्मुदा अतिहर्षेण लिङ्गितः लक्ष्यवेधनिश्चयबुद्धेरित्यर्थः अत उन्मुखः उर्द्धमुखः सन् स्वात् स्वकीयात् पूर्वादिलाद्गाङ्गेरत् शरात् वाणात् नम्रवक्त्रतां नतमुखत्वं अवाप किमु? स्वप्रयुक्तशरं नतमुखं विफलं प्रत्यावृत्तं दृष्ट्वा स्वयं नम्रमुखोऽभूदित्यर्थः। उत्प्रेक्षा। १६१॥

अथ षड्भिः श्लोकैः दशैकाणां सुक्ति वर्णयति।

विक्रमइति। अत्र लक्ष्ये विक्रमः पराक्रमः न परीक्ष्यते पुनः भाग्यमेव परीक्ष्यते खलु इति मन्महे जानीमः यतः हेतोः स्त्रीगुणामृत नदी समस्तनायिकागुणसम्पूर्णा सुलक्षणा लक्ष्मणा लक्ष्येण लक्ष्यवेधनेन हेतुना लभ्या प्राप्ता तस्या भावः तत्तां तां भजति लक्ष्यवेधन फलं भवतीत्यर्थः। अतो भाग्यमेव परीक्ष्यते इति भावः। १६२॥

यज्ञसेनेति। यज्ञसेनेन पाञ्चालनृपतिना कृतं सम्पादितं लक्ष्यं विध्यतीति तथोक्तेन लक्ष्यवेधने दृष्टशक्तिनेत्यर्थः वीरवर्य्यनिवहस्य अग्रयायिना अग्रगण्येन सव्यसाचिना अर्जुनेन

यत्परास्त मिह सव्य साचिना
दैवमत्र खलु हेतुतां गतं । १६३ ॥
व्यास कारित शरव्य वेधनं
यद्यनेन कृत मीश्यतां कथं ।
नारदानुमत लक्ष्य वेधने
शिष्यतोऽधिकपटु र्गुरु र्यतः । १६४॥
ह्रीश्चभङ्ग जनितास्य यादृशी
सूतजा दिबलिनां न तादृशी ।
तर्क्यते प्रथित पौरुषस्य यत्
कीर्त्ति हानि रतिरिच्यतेमृतेः ।१६५॥

इह यत् परास्तं पराभूतं अत्र अस्मिन् विषये दैवं हेतुतां गतं कारणं भवतीत्यर्थः । काव्यलिङ्ग । १६३ ॥

व्यासेति । अनेन अर्जुनेन व्यासेन द्वैपायनेन कारितस्य शरव्यस्य लक्षस्य पाञ्चालनगरस्थसेरत्यर्थः वेधनं कृतं यदि तर्हि नारदेन अनुमतस्य स्वीकृतस्य लक्षस्य एतसेरत्यर्थः वेधने कथं दृश्यतां शक्यतां यतः हेतोः गुरुः उपाध्यायः शिष्यतः छात्रात् अधिकपटुः अतिनिपुणोभवति । नारदोगुरुः व्यासः शिषश्चेतिध्येयं । अर्थान्तरन्यासः । १६४ ॥

ह्रीरिति । अस्य अर्जुनस्य भङ्गजनिता पराजय हेतुका ह्रीः लज्जा यादृशी यावत्परिमाणा सूतजादीनां कर्णादीनां वलिनां वीराणां तादृशी तावत्परिमाणा न तर्क्यते यत् हेतोः प्रथित पौरुषस्य ख्यातपराक्रमस्य कीर्त्तिहानिः यशोऽपकर्षः मृतेः मरणात् अतिरिच्यते अधिकाभवति । अर्थान्तरन्यासः ।१६५

दुर्ह्रदां सुचिरकाङ्क्षितां मुदं
स्वप्नतोऽपि सुहृदा मचिन्तितां।
ईदृशीं जनयतो विषस्नतां
मोच्यतेऽस्य नवभङ्ग एष किं। १६६॥

दर्पतोऽपि कृतिनः स्खलन्ति यत्
हेलया सुकर कृत्य वस्तुनि।
सम्भवेत्तदपि धीर शेखरे
नात्र चित्र मिह मन्महे वयं।१६७॥

एवमादि जनता ननाम्बुज
व्रात सञ्चरणशील भारती।

दुर्ह्रदामिति। सुचिरकाङ्क्षितां चिरमभिलषितां दुर्ह्रदां शत्रूणां मुदं आनन्दं तथा स्वप्नतोऽपि अचिन्तितां अविचारितां सुहृदां मित्राणां ईदृशीं एतादृशीं विषस्नतां विषादं जनयतः अस्य अर्जुनस्य एषः नवभङ्गः नवीनपराजयः नोच्यते किमु तर्क्य तएव। १६६॥

दर्पत इति। कृतिनः दक्षाः सुकरकृत्यवस्तुनि सुसाध्य कार्येऽपि दर्पतः गर्व्वात् हेलया अवहेलया हेतुना स्खलन्ति भ्रश्यन्ति यत् तदपि हेलाहेतुक स्खलनमपि धीरशेखरे पण्डित-प्रवरे अत्र अर्जुने न सम्भवेत् गर्व्वरहितत्वादित्यर्थः। अतः वयं इह चित्रं विस्मयं मन्महे जानीमः। काव्यलिङ्गं।१६७॥

एवमिति। एवमादिः इत्यादिका जनतायाः जनसमूहस्य आननाम्बुजव्राते मुखपद्मसमूहे सञ्चरणशीला सञ्चारिणीभारती अर्जुनभङ्ग वार्त्तां कर्त्त्रीं आलिपालेः सखीसमूहस्य परिचर्य्यया

आलि पालि परिचर्य्यया समं
मद्रजां समतनोत् सचेतनां। १६८॥
मार्गणत्रय बिसर्जनो चिते
निश्चितेऽपि पणलक्ष्य वेधने।
नार्जुनः स्म यतते पुनर्यतो
वागिव प्रहरणं सतां सकृत्। १६९॥
भाविकृष्ण सफलत्व वाञ्छया
लोपितस्य नवभङ्ग बेदना।
हानि पूरणकरी सुलाभतो
मित्र गोन्नति रति प्रमोददा।१७०॥

शीतलोपचारसेबया समं सह मद्रजां लक्ष्मणां सचेतनां अपगत-मूर्च्छां समतनोत् अकरोदित्यर्थः। सहोक्तिः। १६८॥

मार्गणेति। मार्गणत्रयस्य वाणत्रितयस्य विसर्जने प्रयोगे उचितः योग्यः तस्मिन् पणलक्ष्यवेधने निश्चिते निर्द्धारिते सत्यपि अर्जुनः पुनः एकवाणप्रयोगानन्तरं न यततेस्म द्वितीयवाणप्रयोगे नाचेष्टत यतः हेतोः सतां सज्जनानां प्रहरणं प्रहारः वागिव बचनमिव सकृत् एकबारं भवति। उपमार्थान्तरन्यासौ। १६९॥

भावीति। तस्य अर्जुनस्य नवभङ्गात् नवीनपराजयात् या बेदना दुःखं सा कर्त्री भाविनी भविष्यती कृष्णस्य सफलत्वे लक्ष्य वेधन साफल्ये या वाञ्छा मनोरथः तया कर्त्र्या अलोपि लुप्ता भवत्, हि हानीनां क्षतीनां पूरणकरी पूर्त्तिविधायिनी मित्रगा सुहृद्गता उन्नतिः अभ्युदयः स्वलाभतः निजलाभात् अतिप्रमोददा अधिकानन्ददायिनी भवतीतिशेषः। अर्थान्तरंन्यासः।१७०॥

लक्ष्यवेधन समर्थतां हरौ
स्वाधिकां कलयता किरीटिना ।
मन्यतेस्म नृपजान्य दुर्लभा
नर्मपात्र मथमित्र वल्लभा । १७१ ॥

कार्म्मुकादुभय कोटिगं गुणं
द्वापरं नृपसुता हृदः किमु ।
सोऽवरोप्य सहलक्ष्मणाशया
रोहदाशु परमोच्चमासनं । १७२ ॥

अथ नारद प्रहित राजमण्डले
शिरसः करस्य च विधूननैर्गिरा ।

लक्ष्येति । अथ हरौ श्रीकृष्णे स्वाधिकां निजादप्युत्कृष्टां लक्ष्यविधन समर्थतां शरव्यवेधसामर्थ्यं कलयता जानता किरीटिना अर्जुनेन नृपजा लक्ष्मणा अन्यैः श्रीकृष्णाभिन्नैः दुर्लभा दुष्प्रापा नर्म्मपात्रं परिहासभाजनं मित्रवल्लभा सखिपत्नी मन्यतेस्म अमानि, काव्यलिङ्गं । १७१ ॥

कार्म्मुकादिति । अथो सः अर्जुनः कार्मुकात् धनुषः उभयकोटिगं अटनीद्वयगतं गुणं मौर्वीं नृपसुतायाः लक्ष्मणायाः हृदः मनसः उभयकोटिगं द्वितीयंवाणं प्रयोक्ष्यति नवेति कोटिद्वयगतं द्वापरं किमु सन्देहमिव सन्देहद्वापरौचेत्यमरः । अवरोप्य शिथिलयित्वा लक्ष्मणायाः आशया कृष्णप्राप्त्याशया सह उच्चं आसनं आशु शीघ्रमारोहत् उत्प्रेक्षातिशयोक्ति ।१७२

अथेति । अथ अनन्तरं हरिवर्जिते श्रीकृष्णाभिन्ने नारदेन प्रहिते लक्ष्यविधनार्थं प्रेरिते राजमण्डली नृपसमूहे शिरसः

इति वर्जितेऽजनिनकार खेलनं
प्रबलाजये हि विरमन्ति दुर्बलाः ।१७३

योऽभूद् विष्णुरथस्य चित्ररचना दचस्य तस्मिं कवेः
धीरः श्रीभुवनेश्वरः सुविदुषामग्रस्य पुत्त्रो रयः ।
सर्गस्तस्य च लक्ष्मणा परिणये काव्यकृतौ पञ्चमो
बामण्डोपपदा मनूदितवतो राज प्रशस्तिं ययौ ॥
।१७४॥

मस्तकस्य करस्य हस्तस्य विधूननैः कम्पनैः गिरा वचनेन च नकारस्य निषेधात्मकस्यनेत्यचरस्य खेलनं अजनि जातं नारदेन ब्रह्मविधार्थं प्रेरिता राजानः श्रीकृष्णाबज्ज सर्व हस्त मस्तकचालनेन बचनेनच निषेधं प्रकटयामासुरित्यर्थः। हि प्रवलानां बलोत्तराणां अजये पराजये सति दुर्ब्बलाः हीनबलाः विरमन्ति निवृत्ता भवन्ति। अर्थान्तरन्यासः। मञ्जुभाषिणी वृत्तं। सजसाजगौचयदिमञ्जुभाषिणीति लक्षणात्। १७३॥

य इति। बामण्डा इति उप पदं यस्यास्तां बामण्डापूर्ब्वां राज प्रशस्तिं तदाख्यं खण्डकाव्यं मधूसूदन कविना उत्कल भाषया विरचितं बामण्डा राज प्रशस्ति काव्यं अनूदितवतः संस्कृत श्लोकैः रूपान्तरं नीतवतः तस्य पञ्चमः सर्गः ययौ समाप्त इत्यर्थः। १७४॥

इति श्री लक्ष्मणापरिणय व्याख्यायां पञ्चमः सर्गः समाप्तः।



षष्ठः सर्गः ।



मानशृङ्ग परिभञ्जनखिन्ने

भूपपुङ्गवगणे नतवक्त्रे ।

मन्दवात चलदुत्पल लीलां

लक्ष्मणाक्षि खलु सव्य मथा पत् ।१॥

तत्त्रभङ्ग उदिते प्रचुराणां

स्व स्व लाघव ममानि न भूपैः ।

पञ्चभिः सह न दुःख मितीमां

नीतिमापु रवलम्बन मेते । २ ॥

मानेति। अथ मानशृङ्गस्य अभिमानविषाणस्य परिभञ्जनेन खिन्ने विषन्ने भूपपुङ्गवगणे नृपर्षभसमूहे नतवक्त्रे नम्रमुखे सति सव्यं वामं लक्ष्मणायाः अक्षि चक्षुः मन्दवातेन चलत् चञ्चलं यत् उत्पलं कुवलयं तस्य लीलां शोभां आपत् प्राप पुस्फोर इत्यर्थः शुभसूचनोक्तिः। रूपक निदर्शने, प्रायेणास्मिन् सर्गे स्वागतावृत्तं। स्वागतारनभगै गुरुणाचेतिलक्षणात् ।१॥

तत्रेति। तत्र सभायां प्रचुराणां बहूनां भङ्गे पराजये उदिते उत्पन्ने सति भूपैः राजभिः स्व स्व लाघवं निज निज लघुतां न अमानि मेने। एते राजानः न दुःखं पञ्चभिः सह इति इमां नीतिं नयं अवलम्बनं आश्रयं आपुः प्रापुः। काव्यलिङ्गं ।२॥

चौरवृन्द इव वीरसमूहे
व्रीडितं न खलु कैरपि कस्मात् ।
दुर्म्मनायित मलं क्षितिपालैः
शूरशून्य मिव लोकमवेत्य । ३ ॥

क्षीणतां भुवइमां बलकृष्णौ
संप्रमार्ज्य मुखमुज्ज्वलयन्तौ ।
वीरसूत्व मवतां चिरकालं
भूभृतामिति मनःसु ननर्त्त । ४ ॥

मद्रपोऽप्य खिल भूपतिभङ्गं
स्वाभिलाष कुसुमं परिभाव्य ।

चौरवृन्द इति । वीरसमूहे चौरवृन्दे इव कैरपि राजभिः कस्मात् राज्ञः नव्रीडितं लज्जितं खलु । किन्तु क्षितिपालैः लोकं भूलोकं शूरशून्यं वीररहितमिव अवेत्य ज्ञात्वा अलं अतिशयं दुर्म्मनायितं दुःखितं । उपमाकाव्यलिङ्गे । ३ ॥

क्षीणतामिति । बलकृष्णौ श्रीरामगोविन्दौ भुवः भूमेः इमां एतादृशीं क्षीणतां वीराभावजनितां लज्जां सम्प्रमार्ज्य लक्ष्यवेधनेन मार्जयित्वा मुखं वदनं भुवइति शेषः उज्ज्वलयन्तौ उज्ज्वलकुर्व्वाणौ सन्तौ वीरसूत्वं वीरप्रसूत्वं भुव इति शेषः चिरकालं अवतां रक्षतां सम्भावनायां लोट् । इति एतत् भूभृतां राज्ञां मनःसु चित्तेषु ननर्त्त चिक्रीड़ राज्ञामेतादृशोऽभिप्रायो-ऽभूदित्यर्थः । ४ ॥

मद्रपइति । मद्रपः बृहत्सेनोऽपिं अखिलभूपतीनां समस्तनृपाणां भङ्गं पराजयं स्वाभिलाषस्य निजमनोरथस्य कुसुमं पुष्पं उत्पादकमिति यावत् परिभाव्य ज्ञात्वा लक्ष्यवेधन

लक्ष्यवेधन कृते यदुनाथं
याचितुं मुनिमुखे दृशमाधात् । ५ ॥
दक्षिणो ब्रजवधू परिरब्धो
लक्ष्मणा मिव तदा परिरब्धुं ।
संस्फुरन् मधुरिपोः शुभशंसी
बाहुरङ्गद विधूति मतानीत् । ६ ॥
मद्रराज दुहितु स्तनुबन्धात्
सेन्द्रियमन उदाय्य तदानीं ।
उत्कता पयदुपेन्द्र निदेशे
नारदं त्वरयितुं किमु तूर्णं । ७ ॥

कृते शरव्यवेधार्थं यदुनाथं श्रीकृष्णं याचितुं श्रीकृष्णं प्रेरयितु मित्यर्थः मुनेः नारदस्य मुखे दृशं दृष्टिं आधात् आहितवान् नारद मुखमपेक्षाञ्चकार रूपकं । ५ ॥

दक्षिण इति । ब्रजवधूभिः गोपाङ्गनाभिः परिरब्धः आलिङ्गितः दक्षिणः बामेतरः तुल्यानुरागो नायकश्चेति गम्यते मधुरिपोः श्रीकृष्णस्य बाहुः भुजः तदा लक्ष्मणां परिरब्धुं आलिङ्गितुमिव संस्फुरन् अतः शुभशंसी शुभसूचकः अङ्गदस्य विधूतिं कम्पनं अतानीदकरोत् । उत्प्रेक्षा काव्यलिङ्गे । ६ ॥

मद्रेति । तदानीं तत्कालं उत्कता उत्कण्ठा मद्रराज दुहितुः लक्ष्मणायाः तनुबन्धात् देहात् सेन्द्रियं इन्द्रियसहितं मनः उदाय्य उद्गमय्य ञ्जन्तादय गताविति धातोः ल्यप् उपेन्द्रस्य श्रीकृष्णस्य निदेशे लक्ष्यवेधार्थमादेशे त्वरयितुं प्रेरयितुं नारदं तूर्णं आपयत् प्रापयत्किमु ? उत्प्रेक्षा, श्रीकृष्णस्य लक्ष्यवेधादेशे लक्ष्मणायां इन्द्रियसहितं मनः उत्कण्ठया नारदेऽविशदित्यर्थः ।
। ७ ॥

नारदस्य वदनाम्बुजजन्मा
भारती स्मितसुधा परिलिप्ता ।
दूतिकेव हरि कर्ण समीपं
लक्ष्यसाधन कृते द्रुतमाप । ८ ॥

कर्त्तु मत्र सुनरै र्यद शक्यं
तन्नरेण खलु फाल्गुननाम्ना ।
शक्यते तु भवता तद शक्तौ
साध्यतां नृवर कृत्य मिदानीं । ९ ॥

लक्ष्यवेध मबलाप्ति मथेष्टं
मद्रपस्य सुयशोऽधिगमञ्च ।

नारदस्येति । नारदस्य वदनाम्बुजजन्मा मुखपद्मसम्भूता स्मितसुधाभिः मन्दहासामृतैः परिलिप्ता भारती वाणी दूतिकेव लक्ष्यसाधन कृते शरव्यवेधार्थं उद्देश्य सिद्ध्यर्थञ्च हरेः श्रीकृष्णस्य कर्णसमीपं कर्णान्तिकं द्रुतं शीघ्रं आप प्राप । उपमा । ८ ॥

नारदोक्तं गुम्फनाह—

कर्त्तुमिति । अत्र जगति सुनरैः नरश्रेष्ठैः यत् कर्त्तुं अशक्यं तत् कार्य्यं फाल्गुननाम्ना अर्जुनापरनामकेन नरेण नरर्षिणा कर्त्तुं शक्यते तु पुनः तदशक्तौ तस्य अर्जुनस्य अशक्तौ असामर्थ्ये सत्यां हे नृवरः! पुरुषोत्तम इदानीं कृत्यं कार्य्यं साध्यतां क्रियतां । ९ ॥

लक्ष्यवेधमिति । हे पुरुषोत्तम! त्वं लक्ष्यस्य शरव्यस्य वेधं वेधनं अबलायाः लक्ष्मणायाः आप्तिं प्राप्तिं अथ मद्रपस्य बृहत्सेनस्य इष्टं मनोरथं सुयशसः लक्ष्यवेधजनितं कीर्त्तेः

संविधाय भुव ईदृग वस्थां
धन्वभाव जनितां क्षपय त्वं । १० ॥
लक्ष्मणावरण माल्यमिवेमं
सूक्ति मौक्तिक सरं मुनिसृष्टं ।
प्राप्यधन्वि ततिमूर्द्धसु किन्नु
स्वोच्च मञ्चउदतिष्ठ दुपेन्द्रः । ११ ॥
मञ्चगः स धृतपीत दुकूलः
शक्र नीलमणि मेचक कान्तिः
शैल सानु पतितं चपलाढ्यं
नव्यमेघ मजयत् क्षणकालं । १२ ॥

अधिगमं प्राप्तिञ्च संविधाय कृत्वा धन्विनां धनुर्द्धराणां अभावेन जनितां उत्पन्नां भुवः भूमेः भूलोकस्य ईदृशं अवस्थां दुर्द्दशां क्षपय विनाशय। पर्य्यायोक्तिः। १० ॥

लक्ष्मणेति। उपेन्द्रः श्रीकृष्णः मुनिना नारदेन सृष्टं कल्पितं इमं पूर्वोक्तं यत् सूक्तिं सुवचनं लक्षणविधादेशइत्यर्थः तदेवमौक्तिक सरः मुक्ताहारः तं लक्ष्मणायाः वरणमाल्यं वरण-मालेव प्राप्य स्वस्य उच्चे उन्नते मञ्चे आसने धन्वितते: धनुर्द्धर वृन्दस्य मूर्द्धसु मस्तकेषु किन्नु, उदतिष्ठत् उत्थितोऽभूत्। ११ ॥

मञ्चग इति। मञ्चगः मञ्चस्थितः धृतं परीतं पीतदुकूलं येन तथोक्तः शक्रनीलमणिमेचक कान्तिः इन्द्रनीलसवर्णः सः श्रीकृष्णः शैलसानुनि पर्व्वतशृङ्गे पतितं चपलाढ्यं विद्युद्युक्तं नव्यमेघं नवघनं क्षणकालं अजयत् जितवान्। उपमा। १२ ॥

मञ्चभूभृदुदिते हरि मेघे
लक्ष्मणा शिखि वधूः प्रजहर्ष
वैरिभूप भगणा मलिनाभा
छादिता न च वीरेजु रतीव । १३ ॥
लक्ष्मणा सुदृशया बलदृष्ट्या
प्रेरितो निज हृदा च तदानीं
मञ्चकादवततार गिरीन्द्रा
त्रासयन्नृप गजान् स हरिर्द्राक् । १४ ॥
लक्ष्यवेधन कृतेऽभिसरन्तं
तं विलोक्य नृप हर्म्याग्र तलस्थाः

मञ्चेति । हरिः श्रीकृष्ण एव मेघः तस्मिन् मञ्च भूभृति मञ्चके एवशैले उदिते उत्थिते सति लक्ष्मणा एव शिखिवधू मयूरी प्रजहर्ष प्रहृष्टावभूव वैरिभूपा एव भगणाः नक्षत्रसमूहाः मलिनाभाभिः मलिनकान्तिभिः आच्छादिताः सन्तः अतीव न विरेजुः शुशुभिरे किञ्चेतिचार्थः । रूपकं । १३ ॥

लक्ष्मणेति । तदानीं तत्कालं लक्ष्मणायाः सुदृशया शुभादृष्टेन बलस्य बलदेवस्य दृष्ट्या नेत्रसंज्ञया निजहृदा स्वमनसा च प्रेरितः स हरिः श्रीकृष्णः सिंहश्च नृपाः राजान एव गजाः तान् त्रासयन् भीषयन् मञ्चकात् गिरीन्द्रात्पर्वतश्रेष्ठात् व्यस्तरूपकं । द्राक् झटिति अवततार अवतीर्णो बभूव । १४ ॥

लक्ष्येति । नृपहर्म्याग्रतलस्थाः राजप्रासादस्थिताः योषितः स्त्रियः लक्ष्यवेधनकृते शरव्यवेधार्थं अभिसरन्तं यान्तं तं

योषित श्चकरु रचत लाजैः
पुष्पराजिभिरुलूल् निनादैः ।१५॥

कुलकं

लक्ष्मणौ बसट्टगस्य मुरारेः
प्रेयसी भवितु मर्हति नान्या
मद्रपस्य वसुदेव इवान्यः
स्राघ्य बन्धुरिह नास्तिच भूमौ । १६
मद्रपेन जगदप्रतिरूपा
किं सुता व्यरचि विक्रम मूल्या
साधु पात्रइव सात्विक दानं
नार्पितार्हति किमत्र हरौ सा । १७ ।

विलोक्य उलूलु निनादैरुपलक्षिताः सख्यः अक्षतैः लाजैः पुष्पराजिभिः कुसुमसमूहैश्च चक्रुः विचिक्षिपुः । १५ ॥

अथ इत्यभण्यतकुलैरबलानामित्यन्तं पञ्चभिः स्त्रीणामुक्तिं वर्णयति ।

लक्ष्मणेति । अस्य मुरारेः श्रीकृष्णस्य लक्ष्मणा एव सट्टक् मट्टशी प्रेयसी प्रियाभवितुं अर्हति योग्या भवति अन्या इतरा न, किञ्चेतिचार्थः । मद्रपस्य वृहत्सेनस्य वसुदेव इव अन्यः इतरः स्राघ्यः प्रशंस्यो बन्धुः सम्बन्धी इहभूमौ नास्ति । १६ ॥

मद्रपेनेति । मद्रपेन वृहत्सेनेन जगतः अप्रतिरूपा अतुलनीया सुता लक्ष्मणा किं कथं विक्रमः पराक्रम एव मूल्यं यस्याः सा पराक्रमक्रीता व्यरचि निर्मीता । साधुपात्रे सत्पात्रे सात्विकदानमिव अर्हति योग्ये अत्र हरौ अस्मिन् श्रीकृष्णे सा लक्ष्मणा किं कथं नार्पिता न दत्ता । उपमा । १७ ॥

भूमिदुर्लभ तुलां नरपालः
कन्यया सह पराक्रम कीर्त्तिं
दित्सुरेष हरये कृतवान्वा
लक्ष्यमीदृश मनन्य विवेध्यं । १८॥

लक्ष्यमेष विभिनत्तु कुमारी
तुल्य सङ्गमसुखं लभतां च
इप्सितं फलतु मद्रमघोनः
सन्तु नेत्रततयः सफलानः । १९ ॥

लक्ष्यमेष च भिनत्वथवा नो
लक्ष्मणां दिशतु भूपति रस्मै

भूमीति। वा अथवा एषः नरपालः वृहत्सेनः भूमौ दुर्लभा तुला साम्यं यस्या स्तां पृथ्व्यां अतुलनीयां पराक्रम-कीर्त्तिं विक्रमजनितयशः कन्यया लक्ष्मणाया भूमिदुर्लभ तुलयेत्यर्थः सह सार्द्धं हरये श्रीकृष्णाय दित्सुः दातुमिच्छः सन् अनन्यविवेध्यं इतरै वेद्धुमसाध्यं ईदृशं एतादृशं लक्ष्यं कृतवान् निश्चितवान्। सहोक्तिः। हरिरवश्यं भेत्स्यतीति सूचितं। १८ ॥

लक्ष्यमिति। एषः श्रीकृष्णः लक्ष्यं शरव्यं विभिनत्तु विध्यतु, च किञ्च कुमारी लक्ष्मणा तुल्यसङ्गमेन सदृशसमागमेन सुखं आनन्दं लभतां, प्राप्नोतु मद्रमघोनः मद्रेन्द्रस्य बृहत्सेनस्य इप्सितं मनोरथः फलतु सिद्धं भवतु, नः अस्माकं नेत्रततयः लोचनपङ्क्तयः सफलाः सार्थाः सन्तु, लक्ष्मणाः कृष्ण वरणदर्शनेनेति भावः । १९ ॥

लक्ष्यमिति। किञ्चेतिचार्थः एषः श्रीकृष्णः लक्ष्यं भिनत्तु

अन्यथा दुहितृ जन्म वृथास्या-
दित्य भण्यत कुलैरवलानां । २० ॥
मित्र नेत्र शतपत्र विकाशं
संविधाय गतिमान् हरिरेषः
तेजसारि वदनानि तदानीं
प्रापयद्दिवस कैरव भावं । २१ ॥
लक्ष्यदेश गमनावसरेऽस्या-
लौकिकी रुचिरता परिवृत्य

बिध्यंतु अथवा नोभिनत्तु भूपतिः वृहत्सेनः असौ श्रीकृष्णा यैव लक्ष्मणां दिशतु ददातु अन्यथा श्रीकृष्णातरस्मै प्रदाने दुहितुः लक्ष्मणाया जन्म वृथा बिफलं स्यात् भवेत्, इति एवं प्रकारेण अबलानां राज प्रासादगत स्त्रीणां कुलैः समूहैः अभण्यत उक्तं । २० ॥

मित्रेति। तदानीं तत्कालं एषः हरिः श्रीकृष्णः सूर्य्यस्य मित्राणां सुहृदां नेत्राणि नयनान्येव शतपत्राणि पद्मानि एषां विकाशं प्रफुल्लतां संविधाय कृत्वा गतिमान् गमनवान् लक्ष्य-वेधार्थं स्वभावाच्च अरिवदनानि शत्रुमुखानि तेजसा दीप्त्या दिवसे दिने यानि कैरवाणि कुमुदानि तेषां भावं अवस्थां प्रापयत् श्रीकृष्ण गमनावसरे अर्ज्जुनादीनां हर्षोत्फुल्लं चैद्यादीनां विषादमालिन्य मभूदित्यर्थः श्लिष्टरूपक निदर्शने ।२१

लक्ष्येति। लक्ष्यदेश गमनावसरे शरव्यवेधाय गमनसमये अस्य श्रीकृष्णस्य अलौकिकी अलोकसामान्या रुचिरता सौन्दर्य्यं परिवृत्य सातिशयं परिस्फुर्य्य लोकानां मानसान्येव धनानि वित्तानि अन्यत्र मानसानि धनानि च हरन्ती

लोकमानस धनानि हरन्तौ
चित्रितामिव सभां समतानीत् ।२२॥
तत्प्रभा तति रिवामृतवर्त्ती
रञ्जयन्त्य खिललोक दृशोऽलं
इन्द्रनील घटितां समितिं वा
यामुनौघनिहिता मिवतेने । २३ ॥
सत्वरं जनविलोचन पुञ्ज
दृप्त केशरि गतिः परिगृह्य
लक्ष्यभूमि मभिगम्य विरेजे
तामुपायमिव पूरुषकारः । २४ ॥

आकर्षन्ती सती सभां चित्रितां आलिखितामिव समतानीत् अकरोत्। लोकमनोहारिण्या गच्छतः श्रीकृष्णस्य शोभया सभ्यास्तथा बभूवु रितिभावः रूपकोत्प्रेक्षा समासोक्तयः ।२२॥

तस्येति। तस्य श्रीकृष्णस्य भाततिः कान्ति परम्परा अमृतवर्त्ती अमृताञ्जन शलाकेव अखिललोकानां दृशः नेत्राणि अलं अतिशयेन रञ्जयन्ती सती समितिं सभां इन्द्रनीलैः मणिविशेषैः घटितां निर्मितां वा अथवा यामुनौघे यमुना-प्रवाहे निहितां स्थितामिव तेने चकार। उपमोत्प्रेक्षे ।२३॥

स इति। दृप्तकेशरिणः मत्तसिंहस्येव गति र्यस्य सः श्रीकृष्णः त्वरं जनविलोचन पुञ्जं लोकानां नेत्रसमूहं परिगृह्य गृहीत्वा तां लक्ष्यभूमिं अभिगम्य पूरुषकारः पराक्रमः उपायं सामादिं अभिगम्येव विरेजे शुशुभे। अतिशयोक्त्युपमे । २४ ॥

लक्ष्मणोत्सु कतये वसुसख्या
प्रेरिताश्च सुषमामृतपाने
प्राहिणो न्निज दृशौ लघुयावत्
तावदानत मुखी त्रपया सीत् । २५ ॥
सोऽटनौ मवनमय्य वकारि
र्लक्ष्मणां धृतकचामिव मेने
अर्पयन् गुणममन्यत माद्री
कण्ठदेश इव बाहु मपिस्वं । २६ ॥
गर्जितं विरहिणामिव घोरं
कम्पयन् क्षितिभुजां हृदयानि

लक्ष्मणेति । लक्ष्मणा अस्य श्रीकृष्णस्य सुषमामृतपाने सुसख्या प्रियसख्येव उत्सुकतया उत्कण्ठया प्रेरितासती निजदृशौ स्वनयने लघु शीघ्रं यावत् प्राहिणोत् प्रेरितवती, तावत्कालं त्रपया लज्जया आनतमुखी नम्रवदनासीत् । उत्प्रेक्षा । एतेनोत्कण्ठालज्जाभावत्वमुक्तं । २५ ॥

स इति । सः वकारिः श्रीकृष्णः अटनौ धनुष्कोटौ अवनमय्य नमयित्वा लक्ष्मणां धृतकचां सम्भोगार्थं गृहीत-केशामिव मेने उत्प्रेक्षितवान्, गुणं मौर्वीं अर्पयन् आरोपयन् स्वं बाहुं भुजं माद्र्याः लक्ष्मणायाः कण्ठदेशे इव अमन्यत कण्ठावसक्तमिवमेने । स्वसिद्धि निश्चयादितिभावः । २६ ।

गर्ज्जितमिति । अस्य श्रीकृष्णस्य चापस्य धनुषः टङ्कृतिरवः टङ्कारध्वनिः घोरं भयङ्करं गर्जितं मेघनिर्घोषः "स्तनितं गर्जितं मेघनिर्घोषेरसितादिचेत्यमरः" विरहिणां प्रियारहितानामिव क्षितिभुजां राज्ञां हृदयानि मनांसि

नर्त्तयन् सुतनु चित्तमयूरं
चापटं कृतिरवोऽभवदस्य । २७ ॥
सव्यमुष्टि धृतलस्तक एष
द्रागिषू द्धरण नम्र शरीरः
सेन्द्रचाप नववारिद शोभा
मेणनाभि तिलको भुव आपत् । २८ ॥
लक्ष्मणाधि मथवा क्षितिपाला-
हंकृतीः किमु चिकर्त्तिषु राशु
संहितेषु रुदनायि जनौघैः
काम एष नु जगज्जयकामः । २९ ॥

कम्पयन् सुतनोः लक्ष्मणायाः चित्तं मन एव मयूरः तं नर्त्तयन् उत्सुकयन् अभवत् प्रवृत्तः। उपमारूपके। २७ ॥

सव्येति। भुवः भूदेव्याः एणनाभि तिलकः कस्तुरीस्थासक स्वरूपः एषः श्रीकृष्णः सव्यमुष्टिना वाममुष्ट्या धृतं गृहीतं लस्तकं धनुर्मध्यं येन तथोक्तः द्राक् हठात् इषोः बाणस्य उद्धरणे आनयने नम्रशरीरः नतदेहः सन् सेन्द्रचापस्य इन्द्रधनुःसहितस्य नवस्य नूतनस्य वारिदस्य मेघस्य शोभां तत्सदृशकान्तिं आपत् अगृह्णीत्। रूपक निदर्शने। २८ ॥

लक्ष्मणाधिमिति। लक्ष्मणायाः आधिं मनोव्यथां स्वविरह जन्यामित्यर्थः अथवा क्षितिपालानां दुर्योधनादीनां अहङ्कृतीः अभिमानान् चिकर्त्तिषुः किमु खण्डितु मिच्छुरिव आशु शीघ्रं संहितेषुः धनुष्याहितबाणः एषः श्रीकृष्णः जनौघैः लोकसङ्घैः जगज्जयकामः त्रिलोक विजयाभिलाषी कामः कन्दर्पः नु उदनायि निर्णीतः। उत्प्रेक्षा। २९ ॥

स्वाङ्ग कान्ति कृतयामुननीर-
भ्रान्ति कुण्डजल विम्बित मीनं
लक्ष्मणाक्षि सुषमा हर मैच्छत्
वेद्ध मुद्धृत भुजः सनतास्यः। ३०॥
तस्य तत्र सुषमा रसपूरे
पूरुषाक्षि कमलानि ममज्जुः
लक्ष्मणा प्रभृति यौवत चक्षु
र्मीनराजि रतिमोदमवाप। ३१॥
सांकृते न च मयुख कदम्बैः
कर्ण पंक्ति मपि नेत्र समूहं

स्वाङ्गेति। उद्धृतभुजः उन्नतबाहुः नतास्यः नम्रवदनः सः श्रीकृष्णः स्वाङ्गकान्त्या स्वावयवप्रभया कृता सम्पादिता यामुननीरस्य यमुनाजलस्य भ्रान्तिः भ्रमो यस्मिन् तस्मिन् कुण्डजले लक्ष्याधः पात्रजले विम्बितं प्रतिविम्बितं मीनं मत्स्य मत्स्यं लक्ष्मणायाः अक्षि सुषमाहरं नेत्रशोभाहारकं मत्स्येत्यर्थः वेद्धं भेत्तुं ऐच्छत् इयेष। काव्यलिङ्गं। ३०॥

तस्येति। तत्र सभायां पूरुषाणां पुंसां अक्षिकमलानि नेत्रपद्मानि तस्य लक्ष्यवेधोद्युक्तस्य श्रीकृष्णस्य सुषमारसपुरे सौन्दर्य्ये जलप्रवाहे ममज्जुः मग्नानि वभूवुः लक्ष्मणाप्रभृति-यौवतस्य लक्ष्मणादि स्त्रीवृन्दस्य, चक्षुंष्येव मीनाः तेषां राजिः समूहः अतिमोदं अवाप प्राप। रूपकं। ३१॥

सांकृतेनेति। हरिणा श्रीकृष्णेण विसृष्टः प्रयुक्तः सायकः वाणः सांकृतेन वेगजन्य माङ्कारशब्देन जनतायाः जनसमूहस्य

सायकौ वधिरयन् जनताया
अन्धयन् हरिविसृष्ट उदस्थात् । ३२ ॥
लक्ष्यमाप विशिखः प्रविसृष्टः
साधुभृत्य इव तूर्ण्णमनेन
सोऽण्डजोर्द्ध्व इगित स्रजमक्ष्णा
मप्रतीति मिव खण्डयति स्म । ३३ ॥
पृष्ठ सञ्चर दलि व्रजशोभै
रञ्चितं सुमनसां सुमनोभिः

कर्णपङ्क्तिं वधिरयन् वधिरीकुर्व्वन् अपिच मयूखकदम्बैः किरणजालैः नेत्रसमूहं चक्षुंषि जनताया इति योज्यं अन्धयन् विषय ग्रहा समर्थं कुर्व्वन् उदस्थात् उर्द्ध्व मगमत् । यथासंख्यातिशयोक्ती । ३२ ॥

लक्ष्यमिति । अनेन श्रीकृष्णेण प्रविसृष्टः संप्रयुक्तः विशिखो बाणः साधुभृत्य इव तूर्णं शीघ्रं लक्ष्यं शरव्यं उद्देश्यस्थानञ्च आप प्राप, सः बाणः अण्डजस्य पार्श्वपात-पुरःसरं स्थापितस्य लक्ष्यमत्स्यस्य उर्द्ध्वदृशं उर्द्ध्वगतनेत्रं इता गता तत्स्था या स्रक् कुसुममाला तां अक्ष्णां लोकचक्षुषां अप्रतीतिं अविश्वासमिव लक्ष्यवेधविषयकमित्यर्थः खण्डयतिस्म अच्छिनत् । उपमोत्प्रेक्षे । ३३ ॥

पृष्ठेति । हरेः श्रीकृष्णस्य शरेण बाणेन भूभृतां राज्ञां यशः कीर्त्तिरिव खण्डितं छिन्नं एतत् सुमाल्यं लक्ष्यस्य पुष्पमाला पृष्ठे पश्चाद्भागे सञ्चरता अलिव्रजेन भ्रमर समूहेन

भूभृतां यश्च दृब्धा पत देतन्
खण्डितं हरि शरेण सुमाल्यं। ३४॥
स्वर्गिणां कुसुमदृष्टि रपूर्वं
हर्षवर्षण मधा ज्जनतायां
नोम्मृषा प्रतिभुवस्त्रिदिवस्थाः
सत्य तार्जित पदा हि भवन्ति। ३५॥
पूरिता विजय वाद्य रवै
र्भू र्यादवा दुधुवु रम्बर जातं
म्लानिमापुरभिघाति मुखानि
प्रोल्ललास सुहृदां समवायः। ३६॥

शोभा येषां तैः सुमनसां देवानां सुमनोभिः पुष्पैः अन्वितं अनुगतं सत् अपतत् भुवि पपात। उत्प्रेक्षातिशयोक्ती। ३४॥

स्वर्गिणामिति। स्वर्गिणां देवानां कुसुमवृष्टिः जनतायां लोकसमूहे अपूर्व्वं अभूतपूर्व्वं हर्षवर्षणं अत्यानन्दाविर्भावं अधात् अकरोत्, हि सत्यतया अर्जितानि प्राप्तानि पदानि प्रतिष्ठाः यैस्ते त्रिदिवस्थाः स्वर्गिणः मृषा प्रतिभुवः मिथ्या साक्षिणः नो भवन्ति अतः लक्ष्यवेधन सत्यता निश्चय प्रतीत्या जनानां हर्ष इति भावः। अतिशयोक्त्यर्थान्तरन्यासौ। ३५॥

पूरितेति। भूः भूलोकः विजयवाद्यरवैः पूरिता पूर्णा यादवाः अम्बरजातं उत्तरीयवस्त्राणि दुधुवुः भ्रमयामासुः अभिघातीनां शत्रुणां मुखानि म्लानिं वैवर्ण्यं आपुः प्रापुः सुहृदां युधिष्ठिरादीनां समवायः समूहः प्रोल्ललासः जहर्ष। पर्य्यायोक्तिः। ३६॥

लक्षयन् विजयते नृप लक्षै
दुर्विलक्ष्य मपिलक्ष्य मघारिः
शुश्रुवे सदसि सर्वत एतत्-
सम्मदोदधि निमग्न जनायां। ३७॥

लक्ष्मणां व्यथयतो झषकेतोः
केतनं किमु स लक्षविसारं।
खण्डयन् मदन मोहन एनां
जीवयन् वत कृतार्थयति स्म। ३८॥

लक्ष्यवेधन पुरस्कृति मस्मै
माल्यमर्पयितु मालि गणां सा।

लक्षयन्निति। अघारिः श्रीकृष्णः नृपलक्षैः असंख्यै राजभिः दुर्विलक्ष्यं दुर्वेध्यमपि लक्ष्यं शरव्यं लक्षयन् विध्यन् विजयते सर्वोत्कर्षेणावर्त्तते। एतत् वाक्यं सम्मदोदधौ आनन्दसमुद्रे निमग्नाजनाः यस्यां तस्यां सदसि सभायां सर्वतः सर्वत्र शुश्रुवे श्रुतं। ३७॥

लक्ष्मणामिति। सः मदनमोहनः श्रीकृष्णः लक्ष्मणां व्यथयतः पीड़यतः झषकेतोः कामस्य केतनंकिमु पताकामिव स्थितं लक्ष्यविसारं शरव्यमत्स्यं "पृथुरोमाझषो मत्स्यो मीनोवैसारिणोऽण्डजः, विसारः शकुली चेत्यमरः" खण्डयन् एनां लक्ष्मणां जीवयन् कृतार्थयतिस्म वतेतिहर्षे। उत्प्रेक्षा काव्यलिङ्गे। ३८॥

लक्ष्येति। लक्ष्यवेधनस्य पुरस्कृतिं पुरस्कारभूतं माल्यं वरणमालां अस्मै श्रीकृष्णाय अर्पयितुं दातुं विनिदेशे आज्ञा-प्राप्तौ सा लक्ष्मणा आलिगणां सखीसमूहं अपेक्षत तथां

लक्ष्मणालय इदं पितरं सोऽ
पैक्षतापि समितिं विनिदेशे। ३९॥
मद्रपोऽन्त रुदयत् प्रमदेन्दुं
सूचयन् स्मित सुचन्द्रिकया सः।
नारदाय नतकन्धर आस्त
प्राज्ञ मुत्तरलयेन्न हि हर्षः। ४०॥
हस्त सूचन स्त प्रतिहारि
व्रातवारित तरे जन घोषे।
वाद्यनाद सहिते रसितान्त
वृष्टि सौम्य वचनं मुनिराख्यत्। ४१॥

लक्ष्मणाया आलयः सद्मः इदं पितरं एतस्या लक्ष्मणायाः जनकं वृहत्सेनं अपिच सः वृहत्सेनः समितिं सभां अपैक्षत अपेक्षाञ्चक्रे। परिणामः कारणमालाच। ३९॥

मद्रप इति। सः मद्रपः वृहत्सेनः अन्तः अभ्यन्तरे उदयत् उदयमानः यः प्रमदः आनन्द एव इन्दुः चन्द्रः तं स्मितेन मन्दहासेनैव सुचन्द्रिकया ज्योत्स्नया सूचयन् व्यञ्जयन् नारदाय नतकन्धरः नम्रग्रीवः विनीतः सन् आस्त अवर्त्तत हि हर्षः आनन्दः प्राज्ञं पण्डितं न उत्तरलयेत् उद्रिक्तं न कुर्य्यात्। ४०॥

हस्तेति। वाद्यनादसहिते जनघोषे लोककोलाहले हस्तसूचनेन हस्तसंज्ञया स्ता धाविता ये प्रतिहारिणः तेषां व्रातेन समूहेन वारिततरे अत्यन्तनिवारिते सति मुनिः नारदः रसितान्तवृष्टिः गर्ज्जितानन्तरवर्षणमिव सौम्यं मनोहरं वचनं आख्यत् अकथयत्, उपमा। ४१॥

धन्विनां पुरत एष मुरारि
विक्रमेण लभते खलु माद्री"
शीघ्र मर्पयतु सा वरमाला
छद्मनात्र समितौ तनु मस्मै। ४२॥
शृण्वति चितिभृतां समवाये
नारदानन सुधाकर जन्मा।
ईदृगुक्तिरमृतैः परिलिप्त
कृष्णचित्त मकरोत्करणाढ्यं। ४३॥
नारदानुमत मद्र महीन्द्रो
हर्ष गद्गद मिदं निजगाद।

नारदोक्तमाह। धन्विनामिति। एषः मुरारिः श्रीकृष्णः धन्विनां धनुर्द्धारिणां पुरतः अग्रे विक्रमेण पराक्रमेण माद्रिं लक्ष्मणां लभते खलु अतः सा लक्ष्मणा अत्र समितौ सभायां अस्मै श्रीकृष्णाय वरमालाछद्मना वरणमालाकपटेन तनुं स्वशरीरं शीघ्रं अर्पयतु ददातु काव्यलिङ्गापह्नवौ। ४२॥

शृण्वतीति। चितिभुजां राज्ञां समवाये समूहे शृण्वति सति नारदस्य आनन सुधाकरात् मुखचन्द्रात् जन्म यस्या तथोक्ता ईदृक् पूर्वोक्ताउक्तिः वरणमालाप्रदानादेशरूपा करणाढ्यं इन्द्रियसहितं श्रीकृष्णस्य चित्तं मनः अमृतैः परिलिप्तं विलिप्तमकरोत्। नारदोक्ति श्रवणेन श्रीहरिः आह्लादितोऽभूदितिभावः। काव्यलिङ्गातिशयोक्ती। ४३॥

नारदेति। नारदेन अनुमतः आज्ञप्तः मद्रमहीन्द्रः बृहत्सेनः हर्षेणगद्गदं यथातथा इदं वच्यमाणं निजगाद उवाच किन्तदित्याह" केशवायेति। मे मम आत्मजा कन्या लक्ष्मणा

केशवाय बरमाल्य निभान्मे
आत्मजार्पयतु जीवित माशु । ४४ ॥
तत्क्षणं चितिपतेर्बिनिदेशं
सख्य आप्य तृषिताः सलिलं बा ।
कृष्णाचन्द्र चरणार्चन योग्यं
वेशमाशु बिदधुर्नृप पुत्र्याः । ४५ ॥
कान्तसङ्गमबिलम्ब निदानं
न प्रसाधन मियं बहुमेने ।
स्थातु मिच्छति चिरं बिहिताशो
नक्षणं गतकृतिः फलिताशः । ४६ ॥

केशवाय श्रीकृष्णाय बरमाल्यनिभात् बरणमालाकपटात् जीवितं जीवनं आशु शीघ्र मर्पयतु ददातु । अपह्नवः । ४४ ॥

तत्क्षणमिति । तत्क्षणं तस्मिन्नवसरे सख्यः लक्ष्मणा-बयस्याः चितिपतेः बृहत्सेनस्य बिनिदेशं बरमाल्यप्रदानाय पूर्वोक्त माज्ञावचनं तृषिताः पिपासिताः सलिलं वा जलमिव बात्र वार्थकं आप्य प्राप्य (आङ् पूर्वादापेर्ल्यप्) कृष्णचन्द्रस्य चरणार्च्चने योग्यं समुचितं नृपपुत्र्या लक्ष्मणायाः वेशं आकल्पं आशु शीघ्रं बिदधुः बिहितवत्यः उपमा । ४५ ॥

कान्तेति । इयं लक्ष्मणा कान्तसङ्गमबिलम्बस्य प्रिय-समागमकालक्षेपस्य निदानं कारणभूतं प्रसाधनं आत्मनः परिकर्म्मापि न बहु मेने नादृतं चकार, बिहता नष्टा आशा यस्य सः जनः चिरं स्थातुं अवस्थातुं पुनः कार्य्यसिद्धिपर्य्यन्त-मित्यर्थः इच्छति । किन्तु फलिता सफला आशा यस्य सः जनः क्षणं अल्पकालमपि गतकृतिः अकृतव्यापारःसन् स्थातुं न इच्छति, शीघ्रमनन्तर कर्त्तव्याय चेष्टत इत्यर्थः । काव्यलिङ्गा-र्थान्तरन्यासौ । ४६ ॥

लज्जयाऽवरतनु र्न निषिद्धा
यद्य साऽवकृत मण्डन कृत्या।
नोदितोत्सुक तयाप्यति मात्रं
कृष्ण सन्निधि मयास्य दवाधं।४७॥

तां स्वभाव मधुराकृति माल्यः
संविभूषयितु माहित लज्जाः।
भूषणान्यपि तयैव च किन्तु
प्रेरिताश्च विधिनात्य यतन्त।४८॥

यादवेश्वर सुरक्त हृदन्तां
तप्त काञ्चन निभां परिभाव्य।

लज्जयेति। असौ वरतनुः लक्ष्मणा लज्जया न निषिद्धा न निवारिता यदि तर्हि उत्सुकतया उत्कण्ठया अतिमात्रं अधिकं नोदिता प्रेरिता अतः अकृतं असम्पादितं मण्डनकृत्यं भूषणकार्य्यं यस्याः सा सती प्रसाधन मनपेक्ष्यैव अबाधं निर्बाधं कृष्णस्य सन्निधिं समीपं अयास्यत् अगमिष्यत्। एतेनोत्कण्ठा लज्जे सूचिते। ४७॥

तामिति। विधिना कुलाचारेण प्रेरिताः प्रचोदिताः आल्यः सख्यः स्वभाव मधुराकृतिं प्रकृत्या मनोहरमूर्त्तिं तां लक्ष्मणां सम्बिभूषयितुं अलङ्कर्त्तुं आहितलज्जाः जातव्रीडाः-सत्यः किन्तु तयैव लक्ष्मणयैव च भूषणान्यपि वलय नूपुरादीन्यपि सम्बिभूषयितुं अत्ययतन्त अतियत्नमकुर्व्वन् अतिशयोक्तिः।४८॥

यादवेश्वरेति। वेशकृत्ये चतुराः निपुणाः वयस्याः सख्यः तप्तकाञ्चननिभां तां लक्ष्मणां यादवेश्वरे, श्रीकृष्णे सुरक्तां

वासयन्ति नवरक्त दुकूलं
वेशकृत्य चतुराः स्म वयस्याः। ४६ ॥
आशु वेश करणोत्तम दक्षा
स्तत्क्षणं सरभसं सहचर्य्यः।
नेतु मिष्टनिकटं स्म यतन्ते
तामुलूल निनदैः परिभूष्य। ५० ॥
किं रति स्त्रिजगती विजयार्थं
दित्सु रुद्धृतधनु र्मदनाय
बिभ्रती वरणमाल्य मथेयं
संवभौ धृत मनोहर वेशा। ५१ ॥

अनुरक्तं हृत् चित्तं यस्याः तथोक्तां परिभाव्य ज्ञात्वा नवं नवीनं रक्तदुकूलं वासयन्तिस्म पर्य्यधापयन्। ४६ ॥

आश्विति। आशुशीघ्रं वेशकरणे प्रसाधने उत्तमदक्षाः अतिनिपुणाः सहचर्य्यः सख्यः तां लक्ष्मणां सरभसं सोत्वेगहर्षं परिभूष्य भूषयित्वा उलूलु निनादैरुपलक्षिताः सत्यः तत्क्षणं इष्टस्य प्रियस्य श्रीकृष्णस्य निकटं नेतुं प्रापयितुं यतन्ते स्म अचेष्टन्त। ५० ॥

किमिति। अथ धृतमनोहरवेशा वरणमाल्यं बिभ्रती धारयन्ती इयं लक्ष्मणा त्रिजगतीनां विजयार्थं मदनाय कामाय उद्धृत मूर्द्धं गृहीतं धनुः दित्सुः दातुमिच्छन्ती रतिः कामपत्नी किं सम्बभौ शुशुभे। उत्प्रेक्षा। ५१ ॥

दत्त हस्त मथ साप्त सखीभिः
स्थूल तल्पत उदेत्य कुमारी ।
क्षीरसागर जलादिव लक्ष्मी
रप्सरः परिवृता प्रचकाशे । ५२ ॥
कम्बुयुग्म रवनर्त्तित काम
प्रोच्चलन् मति महीप समाजं ।
नव्य गर्भ गुरुतालसहंसी-
गामिनीय मुपगन्तुमियेष । ५३ ॥
भव्य वाद्यरव पूरित कर्णान्
दर्शनोत्कनयनान् पुर एतान् ।

दत्तहस्तमिति । अथ सा कुमारी लक्ष्मणा आप्तसखीभिः प्रियवयस्याभिः दत्तहस्तं दत्तहस्तावलम्बं यथा तथा तूलतल्पतः तूलिका शय्यायाः उदेत्य उत्थाय क्षीरसागरजलात् उदेत्य अप्सरोभिः परिवृता लक्ष्मीः रमेव प्रचकाशे उपमा । ५२ ॥

कम्बुयुग्मेति । नव्यस्य नूतनस्य गर्भस्य प्रथम गर्भस्य गुरुतया अलसा मन्थरा याहंसी मराली सेवगच्छतीति तथोक्ता इयं लक्ष्मणा कम्बुयुग्मस्य शङ्खयुगलस्य रवैः ध्वनिभिः नर्त्तितेन प्रोद्दीप्तेन कामेन मदनेन प्रोच्चलन्त्यः मतयो बुद्धयो येषां तेषां महीपानां राज्ञां समाजं सभां गन्तुं इयेष अभिलषितवती । अतिशयोक्ति प्रौढोक्ती । ५३ ॥

भव्येति । वेत्रैः वेत्र दण्डैः शोभिनः कराहस्ताः येषां तेषां कञ्चुकिनां राजिः समूहः भव्यवाद्यरवैः मङ्गलवाद्यशब्दैः पूरिताः पूर्णाः कर्णाः येषां तथोक्तान् अतः दर्शने वरणावलोकने उत्कानि उत्कण्ठितानि नयनानि येषां तथोक्तान पुरः अग्रे

वेत्र शोभि कर कञ्चुकि राजिः
प्रोदसारय द्दलं जनसङ्घान् । ५४ ॥
आत्म विम्ब सदृशालि कदम्बैः
साहृतावरतनुर्वरणार्थं ।
प्रस्थिता प्रतिपथं पृथिवीं
ता मार्च्चदङ्घ्रि कमलैं र्हरि पूतां ।५५ ॥
सोत्कता कृतमलं गलहस्तं
प्राप्य ह्रीनिगड़ शृङ्खलिताङ्घ्रिः ।
आलिदर्शितपथामृदुलाङ्गी
मन्थरं नृपसभां प्रविवेश ।५६ ॥

एतान् आगतान् (आङ् पूर्व्वादिणधातोःक्तः) जनसंघान् अलं अत्यर्थं प्रोदसारयत् प्रोत्सारयामास। काव्यलिङ्गं । ५४ ।

आत्मेति। आत्मनः येविम्वाः प्रतिविम्वाः तैः सदृशैः तुल्यैः आलिकदम्बैः सखीसमूहैः आवृता सा वरतनुः लक्ष्मणा वरणार्थं श्रीकृष्णं वरीतुं प्रस्थिता प्रयाता सती हरिणा श्रीकृष्णसन्निधानेनेत्यर्थः पूतां तां पृथिवीं प्रतिपथं प्रतिमार्गं अंघ्रिकमलैः पादपद्मैः आर्च्चत् अपूजयत्। रूपकोत्प्रेक्षे। ५५ ॥

सेति। ह्रीः लज्जेव निगड़ः शृङ्खलं तेन शृङ्खलितौ अङ्घ्रीचरणौ यस्यास्तथोक्ता लज्जया अचलत्पदा मृदुलाङ्गी कोमलाङ्गी सा लक्ष्मणा उत्कतया उत्कण्ठया कृतं गलहस्तं वरणार्थंप्रेरणं अलं अत्यन्तं प्राप्य आलिभिः सखीभिः दर्शितपथा सती नृपसभां राजसभां मन्थरं मन्दं मन्दं यथा तथा प्रविवेश प्रविष्टा रूपककाव्यलिङ्गालङ्कारौ अवङ्गौ पूर्वस्य प्यकारस्य प्रेक्ष्येति सूतार्ब्वैकलिपकं लघुत्वं। ५६ ॥

राजराजि चकिताच्चि चकोरान्
बद्धु मत्र लघु यौवत मेतत्।
सङ्गुणं नव ममोघ मुदारं
कामजाल मनघं प्रविरेजे। ५७॥
तत्सखीगण विभूषण रत्न
श्रेणि विम्बित वपुः चितिपाली।
मानसैः सह विवेश तदानी
मात्मनापिकिमु यौवत मध्ये ५८॥
व्योमनाक नगरी युव युग्मै
र्मालिकार्पण विलोक समुत्कैः।

राजेति। लघु प्रीतिकरं एतत् यौवतं युवती समूहः राजराजेः राजन्य समूहस्य चकिताः चमत्कृताः ये अच्चि-चकोराः नेत्रचकोराः तान् अत्र बन्धुं सद्गुणं सुतन्तुविशिष्टं अन्यत्र सौशील्या दिगुण युतं नवं नवीनं अमोघं सफलं अव्यर्थं उदारं उत्कृष्टं अनघं अनिन्द्यं उभयत्रतुल्यं कामस्य कन्दर्पस्य जालं आनायः प्रविरेजे। परिणामः। ५७॥

तदिति। तस्याः लच्मणायाः सखीगणस्य यानि विभूषणानि अलङ्काराः तेषु याः रत्नश्रेणयः मणिगणाः तेषु बिम्बितानि प्रतिफलितानि वपूंषि देहाः यस्यास्तथोक्ता चितिपानां आलिः समूहः तदानीं तत्कालं मानसैः मनोभिः सह आत्मना देहेनापि यौवत मध्ये युवतीसमूहे, विवेश किमु उत्प्रेचा सहोक्ती। ५८॥

व्योमेति। अत्र अस्मिन्नवसरे सा सभा मालिकायाः वर्णमालायाः यत् अर्पणं श्रीकण्ठाय प्रदानं तस्य विलोकने

व्याप्तमत्र समुदीक्ष्य सभासा
मन्यतेस्म कुहकं मह्जातं । ५९ ॥

आलिपालि मुखतामरसेषु
क्ष्माभृतां नयन षट्पद वृन्दं ।
संप्रविश्य सुषमा मधुपूरे
मग्नमप्य भवदत्र कृतार्थं । ६० ॥

लक्ष्मणालि सुषमामृत पानं
लोचनैः कृतवतां क्षितिपानां ।

दर्शने समुत्कैः समुत्सुकैः नाकनगर्याः अमरावत्याः युवयुग्मैः विलासियुगलैः व्याप्तं व्योम आकाशं समुदीक्ष्य दृष्ट्वा मह्जातं उत्सवार्थं सम्पादितं कुहकं इन्द्रजालादिकं कपटकृत्यं मन्यतेस्म । भ्रान्तिमान् । ५९ ॥

आलीति । अत्र सभायां क्ष्माभृतां राज्ञां नयनान्येव षट्पदाभ्रमराः तेषां वृन्दं समूहः आलि पालीनां सखी-श्रेणीनां मुखानि वदनान्येव तामरसानि पद्मानि तेषु संप्रविश्य पतित्वा सुषमा परमशोभेव मधुपूरः मकरन्द प्रवाहः तस्मिन् मग्नं निमग्नमपि कृतार्थं सार्थं अभवत् अत्र मग्नस्य कृतार्थत्वे विरोधः मग्न इत्यस्या व्यन्तासक्तार्थे तत्परिहार इति विरोधाभासः रूपकञ्च । ६० ॥

लक्ष्मणालीति । अत्र सभायां लोचनैः नेत्रैः लक्ष्मणाया आलीनां सखीनां सुषमा परमशोभैव अमृतंतस्य पानं ग्रहणं कृतवतां लक्ष्मणासखीः दृष्टवतां अतः विस्मयेन पक्ष्मपातं निरोध

पक्ष्मपातमपि विस्मरतां किं
विस्मयेन सुरता सजदत्र । ६१ ॥
( युग्मकं )

सौख्यमस्ति किमतोऽन्य दवन्यां
स्वर्गतोऽस्य तुलनेऽप्सरसः काः ।
नीच गा उचित मस्य भुजङ्गो
यौवतं न विधि सृष्टमिदं हि । ६२ ॥

व्यूहमात्म वपुषां विदधाना
लक्ष्मणा वरितु मेति किमस्मान् ।

पतनमपि विस्मरतां त्यजतां क्षितिपानां राज्ञां सुरता देवत्वं असजत् आसाता किं, काव्यलिङ्गोत्प्रेक्षे । ६१ ।

अथयुग्मेन राज्ञामाशयं विवृणोति । सौख्यमिति । अवन्यां भूलोके अतः युवती समूहात् अन्यत् अपरं किं सौख्यं मनोहरं वस्त्वस्ति न किञ्चिदित्यर्थः स्वर्गतः सुरलोके अप्सरसः अस्य यौवतस्य तुलने काः कौयत्यः न समर्थाः न योग्या अथवा काः कुत्सिता इत्यर्थः, भुजङ्गाः अस्य यौवतस्य नीचगाः अधोलोकगताः उचितं युक्तं निकृष्टा भवन्ति, अतः इदं एतत् पुरोवर्त्ति यौवतं युवती समूहः न विधिसृष्टं देवनिर्म्मितं अलौकिकमित्यर्थः । व्यतिरेकतुल्ययोगिते । ६२ ॥

व्यूहमिति । लक्ष्मणा आत्मवपुषां स्वदेहानां व्यूहं समूहं विदधाना कायव्यूहं कुर्व्वाणा सती अस्मान् वरितुं एति आगच्छति किं । इदं एतत् सखीकुलं सहचरीसमूहः न इति एतत् श्लोकद्वयोक्तं कर्म्म सदसि सभायां अतिकृष्टः

नो सखीकुलमिदं नृपवृन्दै-
रित्यमन्यत सदस्यति हृष्टैः । ६३ ।
भूभृतां नयनमार्गत एत्य
स्वान्तमालिषु निविश्य हृषीकैः ।
तन्मयत्व मभजत्तनु मात्रं
विष्टरेषु वसता मवशिष्टं । ६४ ॥
आलिमीक्षितवता नृपपुत्री
वीक्षितेति नरपाल कुलेन ।
लक्ष्मणामपि विलोक्य तदानीं
श्रीरुमापि रतिरित्य ममानि । ६५ ॥

नृपवृन्दैः राजसमूहैः अमन्यत अमानि सापङ्क्वोत्प्रेक्षा । ६३ ॥

भूभृतामिति । भूभृतां राज्ञां स्वान्तं मनः हृषीकैरिन्द्रियैःसह नयनमार्गतः नेत्रमार्गस्थः एत्य वहिर्भूय आलिषु लक्ष्मणा सखीषु निविश्य प्रविश्य तान्मयत्वं सखीतादात्म्यं अभजत् । किन्तु विष्टरेषु आसनेषु वसतां उपविष्टानां तेषां राज्ञां तनुमात्रं केवलं देहः अवशिष्टं स्थितमभूत् । अतिशयोक्तिः । ६४ ॥

आलिमिति । तदानीं नरपालकुलेन राजसमूहेन आलिं काञ्चित् लक्ष्मणा सखीं इक्षितवता दृष्टवता सता नृपपुत्री लक्ष्मणा वीक्षिता अवलोकिता इति अमानि मेने लक्ष्मणामपि विलोक्य दृष्ट्वा श्रीः लक्ष्मीः उमा पार्व्वती अपि रतिः कामपत्नी इत्थं अमानि मेने । अतिशयोक्तिः । ६५ ॥

कज्जलाञ्चित विलोचन युग्मं
केनचित् वरतनो र्नृपयूना ।
उत्पलाख्य मवगम्य बिषाक्तं
मार मार्गण मतीव विषेदे । ६६ ॥

लाक्षयाल मरुणाःस्वरणोऽस्याः
कामकोकनद वाण उदैक्षि
दारणात्तरुण वत्स ततीनां
केनचित् क्षतज लिप्त इवात्र । ६७ ॥

ह्रीनतं कुचगतं वदनाब्जं
सुभ्रुवोऽन्य युवकेन च मेने ।

कज्जलेति । केनचित् नृपयूना युवकेन राज्ञा वरतनोः लक्ष्मणायाः कज्जलाञ्चितं अञ्जन रञ्जितं बिलोचन युग्मं बिषाक्तं बिषदिग्धं उत्पलाख्यं कुबलयनामकं मारमार्गणं कामशरं अवगम्य ज्ञात्वा अतीव बिषेदे बिषण्णं । उत्प्रेक्षा काव्यलिङ्गौ । ६६ ॥

लाक्षयेति । अत्र सदसि केनचित् राज्ञा लाक्षया अलक्तकेन अलं अत्यर्थं अरुणः अस्या लक्ष्मणायाः चरणः पादः तरुणानां यूनां याः बत्स ततयः बक्षस्थलानि तासां दारणात् बिदारणाद्धेतोः क्षतजैः रक्तैः लिप्त इव स्थितः कामस्य कन्दर्पस्य कोकनदबाणः रक्तोत्पलाख्यशरः उदैक्षि उत्प्रेक्षितः । उत्प्रेक्षा । ६७ ॥

ह्रीन तमिति । अन्येन इतरेण युबकेन च ह्रिया लज्जया नतं नम्रं कुचगतं स्तनसंलग्नं सुभ्रुवः लक्ष्मणायाः बदनाब्जं मुख पद्मं कामस्य कन्दर्पस्य वन्धुः मित्र भूतः आधिः मनो-

अधि सिन्धु वलनार्थ मुदीतः
कामबन्धुरुदयाचल इन्दुः । ६८ ॥
एकया स्वकलयाप्य निवार्य्यं
क्ष्वेड़ताप मपहर्त्तु मिवेन्दुः
के हरस्य पतितः सकलोऽस्या:
केनचित् कुचगमास्य ममानि ।६९।
सुभ्रुवश्चिबुकगं मृगनाभेः
बिन्दुमन्यन्नृपति र्मनुतेस्म ।
नासिकातिलज पुष्प मभीप्सु
श्वासरुद्धमलि मत्र विलीनं । ७० ॥

व्यथैव सिन्धुः समुद्रः तस्य वलनार्थं बर्द्धनाय उदयाचले उदीतः इन्दुः चन्द्रः मेने उत्प्रेक्षा । ६८ ॥

एकयेति । एकया स्वस्य कलयापि षोड़शभागेन अनिबार्य्यं अप्रतिषेध्यं क्ष्वेड़स्य शिवकण्ठस्थित गरलस्य तापं सन्तापं अपहर्त्तुं निवारयितुं सकलः समग्रकलः सन् हरस्य शिवस्य के शिरसि कं शिरोऽम्बुनोरित्यमरः, पतितः इन्दुः चन्द्रइव अस्याः लक्ष्मणायाः कुचगं स्तनगतं आस्यं मुखं कर्म्म केनचित् राज्ञा अमानि मेने । उत्प्रेक्षा । ६९ ॥

सुभ्रुव इति । अन्यः नृपतिः राजा सुभ्रुवः लक्ष्मणायाः चिबुकगं चिबुकस्थितं मृगनाभेः बिन्दुं कस्तुरी कल्पित बिन्दुं नासिका लक्ष्मणानासैवतिलजपुष्पं तिलकुसुमं तत् अभीप्सु आप्तुमिच्छुं पुनः श्वासैः लक्ष्मणानिश्वासैः रुद्धं निवारितं अतः अत्र चिबुके विलीनं उपविष्टं अलिं भ्रमरं मनुतेस्म मेने उत्प्रेक्षा । ७० ॥

भालहैम फलके जयवर्ण
स्तोम एष वितनोरलकाख्यः।
आयतं तिलकमेण दृशोऽसि
भ्रूर्द्वनु यकिमितीतर ऐषीत्।७१॥
नाग सम्भव विशेषक शोभं
केशपाश मदसीय मिहान्यः।
वैर शोधन परै स्तिमिरैः किं
वालभानु मवरुद्ध मवेदीत्।७२॥
गण्डपत्र रचना मभि पश्यन्
कोऽप्य वैत्सरसहर्ष सुहासाः।

भालेति। एणदृशः मृगलोचनायाः लक्ष्मणायाः भालः ललाटएव हैमफलकं स्वर्णपट्टं तस्मिन् अलकाख्यः अलकाभिधो वितनोः कामस्य एषः जयवर्णस्तोमः विजयसूचकाक्षर पंक्तिः किं आयतं दीर्घाकारं तिलकं असिः खड्गः किं? वितनोरिति शेषः भ्रूः भ्रूलतेव धनुः किं? वितनोरिति योज्यं भवतीति शेषः इति एवं प्रकारेण इतरः अन्यः राजा ऐषीत् अज्ञासीत्। उत्प्रेक्षारूपके।७१॥

नागेति। इह सभायां अन्यः इतरोराजा नागसम्भवस्य सिन्दूरस्य "सिन्दूरं नागसम्भवमित्यमरः" विशेषकेण सीमन्तस्थतिलकेन शोभा यस्य तं अदसीयं एतस्या लक्ष्मणायाः सम्बन्धिनं केशपाशं वैरस्य शत्रुतायाः शोधनपरैः परिशोधासक्तैः तिमिरैः रन्धकारैः अवरुद्धं किं बालभानुं नवोदीत सूर्य्यं अवेदीत् अमन्यत उत्प्रेक्षा।७२॥

गण्डेति। कोऽपि राजा अस्याः गण्डयोः कपोलयोः

निर्मले प्रतिफलन्ति किमस्याः
सत्कपोल मुकुरे सुविचित्राः। ७३ ॥
नाङ्गुली ततिरियं पदयुग्मे
किं न्वशोक कलिका नव दाम्ना
लक्ष्मणार्चयति वाञ्छित पूर्त्त्यै
काश्यपी मिति च कोऽप्यनु मेने। ७४॥
काम सन्तमस नष्ट दृशां किं
तारणाय सुतनुः स्व कमास्यं
प्रोत रत्न विलसत् श्रुति भूषा
युग्मकेन समदर्शय देषा। ७५ ॥

पत्ररचनांअभिपश्यन् अवलोकयन् अवैत् उत्प्रेक्षितं किन्तत् उच्यते, सरस हर्षाः रसः शृङ्गारादिः हर्षः आनन्दः एताभ्यां सहिताः ये हासाः ते अस्याः लक्ष्मणायाः निर्म्मले सत्कपोलमुकुरे सुन्दर गण्डदर्पणे सुविचित्राः सन्तः प्रतिफलन्ति प्रतिबिम्बिता भवन्ति इत्य वैदिति पूर्व्वेणान्वयः उत्प्रेक्षारूपके। ७३ ॥

नेति। पदयुग्मे पादद्वये लक्ष्मणायाइतिशेषः इयं दृश्यमानाअङ्गुलिततिः अङ्गुलिसमूहो न, लक्ष्मणा वाञ्छित पूर्त्त्यै मनोरथ सिद्ध्यै हेतुना अशोक कलिकानां नवदाम्ना नूतन मालया काश्यपीं पृथिवीं अर्च्चयति पूजयति किन्नु ? इति च एतदपि कोऽपि राजा अनुमाने जज्ञे। सापह्नवोत्प्रेक्षा। ७४ ॥

कामेति। एषा सुतनुः लक्ष्मणा कामएव सन्तमसं विश्वव्याप्तान्धकारः तेन, नष्ट दृशां प्रतिबद्धः दृष्टीनां जनानां तारणाय रक्षायैस्वकं स्वकीयं आस्यं मुखं प्रोतरत्नेन मणिखचितेन, विलसता दीप्तिमता श्रुतिभूषा युग्मकेन कर्णभूषणद्वयेन समदर्शयत् दर्शयामास किं इत्युत्प्रेक्षा। ७५ ॥

शिञ्जित स्तनित नर्त्तित भूभृ
च्चित्त काननग काम मयूरा,
भूषणा द्युति तड़ित् घनमाला
सातनोत् प्रतिपदं रसवृष्टिं । ७६ ॥
तां मराल पटली मिववर्षा
मानसं शुचिरसं यदुनाथं ।
मन्द पाद पतनाञ्चित भूमिं
निन्युरुत्क हृदयां सहचर्य्यः । ७७ ॥

शिञ्जितेति । शिञ्जितं भूषणाध्वनिरेव स्तनितं मेघध्वनिः तेन नर्त्तितः प्रचलितः भूभृतां राज्ञां चित्त काननगः मनस्येव वनेस्थितः कामः कन्दर्प एव मयूरोयया सा भूषणानां द्युतिः दीप्तिरेव तड़ित् विद्युत् यस्याः सा घनमालाः घनाः सान्द्रामाला हाराः यस्यास्तथोक्ता सैव घनमाला मेघपंक्ति सा लक्ष्मणा प्रतिपदं प्रतिपादन्यासं रसस्य शृङ्गारस्येव जलस्य वृष्टिं वर्षणं अतनोत् अकरोत् । रूपकं । ७६ ॥

तामिति । वर्षाः प्रावृषः मरालपटली हंसश्रेणी शुचिरसं विशुद्धजलं मानसं सरोवरमिव सहचर्य्यः सख्यः मन्दपादपतनैः मन्थरचरण न्यासैः अञ्चिताशोभिताभूमिः यया तां उत्कहृदयां उत्कण्ठितचित्तां तां लक्ष्मणां पूर्वोक्त विशेषण द्वयं मरालपटलिपक्षेऽपि योज्यं, शुचिः शृङ्गारोरसो यस्य अथवा शुचयो विशुद्धाः रसाः शृङ्गारादयो यस्य तं यदुनाथं श्रीकृष्णं निन्युः प्रापयामासुः । उपमा । ७७ ॥

बीजितालि धुत चामर सारै
रुद्ध संधृत विचित्र विताना।
पट्ट संस्तरण संचरणेयं
प्रेष्ठ सन्निकट मेणदृगाप। ७८॥

तत्र मञ्च मधिरोढ़ मनङ्ग-
प्रेरिता प्रपद मुद्गमलोलं।
सोद्यतार्पयितु मैचत बाला
ह्रीजड़ं तदनु तन्किमुकोपात्। ७९॥

तन्वि नायक मणेः क्रयकाले
स्रक् पणार्पण पुरः सुलभस्य।

बिजितेति। आलिभिः सखीभिः धुताः चालिताः ये चामर साराः उत्कृष्ट चामराणि तैः बीजिता उर्द्ध्व उपरिभागे सम्भृतं विचित्रं वितानं उल्लोचं यस्याः सा पट्टसंस्तरणे दुकूलास्तरणे सञ्चरणं गमनं यस्याः सा इयं एतादृक् लक्ष्मणा प्रेष्ठस्य प्रियस्य श्रीकृष्णस्य सन्निकटं समीपं आप प्राप। उदात्तालङ्कारः। ७८॥

तत्रेति। तत्र सभायां मञ्चं श्रीकृष्णाधिष्ठित मञ्चकं अधिरोढ़ुं माल्यदानाय आरोढ़ुं अनङ्गेन कामेन प्रेरिता अतः उद्गमे उत्क्षेपे लोलं चञ्चलं मञ्चारोहणायोद्युक्तं प्रपदं पादाग्रं अर्पयितुं उद्यता सा बाला लक्ष्मणा तदनु तदनन्तरं ह्रिया लज्जया जड़ं स्तब्धं तत्प्रपदं कोपात् क्रोधात् ऐचत दृष्टवती किमु? उत्प्रेक्षा। मञ्चारोहणाय कामप्रेरिता लक्ष्मणा उद्युक्तापि लज्जया अधोमुखी बभूव। ७९॥

तन्वीति। हे तन्वि। ह्रीजडं लज्जा [illegible]

ह्रीजडे चिरयसे कथमेवं
भावबोध पटुता स्फुटिताल्या। ८०॥
संस्तृतेषु पटु शुक्ल दुकूलैः
मञ्चरोहण पथेषु सखीभिः।
सा मराल वनिता इव गङ्गा
वीचिषु प्रियतमं समयासीत्। ८१॥
मालया परिरभस्व हृदीशं
नोदितेति मदनेन किमेतत्।
कार्य्यमत्र सदसीति निरुद्धा
सा ह्रियालि वदनं समपश्यत्। ८२॥

मालेव पणः मूल्यं तस्य अर्पणेन प्रदानेन पुरः अग्रे सुलभस्य सुप्रापस्य नायकमणेः नायकरत्नस्य श्रीकृष्णस्य मध्यमणेश्च क्रयकाले स्वीकारसमये कथं चिरयसे विलम्बसे एवं एतत्कथनेन भावस्य लक्ष्मणाभिप्रायस्य बोधे ज्ञाने पटुता सामर्थ्यं आल्या सख्या स्फुटिता प्रकाशिता। रूपकं। ८०॥

संस्तृतेष्विति। सा लक्ष्मणा सखीभिः सह पटुशुक्लदुकूलैः समीचीन धवलपट्टवस्त्रैः संस्तृतेषु आस्तृतेषु मञ्चरोहणपथेषु मञ्चकसोपानमार्गेषु मरालवनिताः हंस्यः गङ्गावीचिषु गङ्गालहरीष्विव प्रियतमं श्रीकृष्णं समया श्रीकृष्णान्तिक मित्यर्थः अयासीत् (समयायोगे द्वितीया)। उपमा। ८१॥

मालयेति। मालया वरणमाल्येन हृदीशं हृदयनाथं श्रीकृष्णं परिरभस्व आलिङ्गय इति एवं प्रकारेण मदनेन कन्दर्पेण नोदिताप्रेरिता सा लक्ष्मणा अत्र सदसि सभायां एतत् मालया प्रियालिङ्गनं किं कथं कार्य्यं कर्त्तव्यं नकर्त्तव्य-

पूर्वतो हृदय मर्पित वत्या
माल्य मात्र मधुनापि किमस्मै।
दातु मत्र कृपणत्व मिदं ते
पूजय प्रिय मिति प्रहिताल्या। ८३ ॥

आलिवाक्य पवनं ज्वलितस्य
प्राक्प्रधूमित मनोज कृशानोः।
ज्वालयेव सुदती चणभासा
प्राप्य पाङ्ग उपलक्ष्य मुरारिं। ८४ ॥

मेतत् इति ह्रिया लज्जया निरुद्धा निवारिता सती आलिवदनं सखीमुखं समपश्यत् दृष्टवती। लज्जया स्वयं माल्यं प्रदातुम् अपारयन्ती सती सखीं मपेक्षितवती। अतिशयोक्तिः। ८२ ॥

पूर्वत इति। पूर्वतः प्रथमतः अस्मै श्रीकृष्णाय हृदयं चित्तं अर्पितवत्याः ते तव अत्र सदसि अधुना माल्यमात्रं मालामात्र-मपि अस्मै श्रीकृष्णाय दातुं किं कथं इदं एतत् कृपणत्वं कार्पण्यं भवति न युक्त मेतदित्यर्थः अतः प्रियं श्रीकृष्णं पूजय समर्च्चय माल्यप्रदानेन इति शेषः, इति एतत्प्रकारं आल्या सख्या प्रहिता प्रेरिता लक्ष्मणा सीदिति शेषं। ८३ ॥

आलीति। आल्याः सख्याः वाक्यं वचनमेव पवनः वायुः तेन ज्वलितस्य उद्दीप्तस्य प्राक् प्रथमं प्रधूमितस्य सञ्जातधूमस्य मनोज कृशानोः कामाग्नेः ज्वालया शिखयेव-स्थितया सुदत्या लक्ष्मणायाः ईचणभासा नेत्रदीप्त्या मुरारिं श्रीकृष्णं उपलक्ष्य उद्दिश्य अपाङ्गः नेत्रप्रान्तः प्रापि प्राप्तः। लक्ष्मणा कामाविष्टा सती श्रीकृष्णं अपाङ्गेन द्रष्टुं समुद्युक्ता भूदित्यर्थः। रूपकोत्प्रेचे। ८४ ॥

प्रेयसो मुख मपेच्य कटाचो
यावदैद् तिचलः स्मरनुन्नः ।
तावदर्द्ध पथ आप्य पिधानं
ह्री कृतं निववृते खलु तस्याः । ८५ ॥

किं स्रजापि च निजेन भजस्व
प्रेष्ठमित्य तनुना भुज युग्मं ।
चोदितं सदपि मन्दतरं ह्री-
स्तम्भतो भृश जडं स्थित मस्याः । ८६ ॥

चन्द्रकान्त वदनापि तदानीं
चन्द्रकान्त मणिता मियमाप ।

प्रेयसइति । स्मरेण कामेन प्रेरितः अतः अतिचलः चञ्चलः तस्याः लक्ष्मणायाः कटाचः अपाङ्गदर्शनं प्रेयसः श्रीकृष्णस्य मुखं अपेच्य (कटाचोऽपाङ्गदर्शनइत्यमरः) यावत् ऐत् अगमत् तावत् ह्रिया लज्जया कृतं पिधानं आच्छादनं अर्द्धपथे अर्द्धमार्गे आप्यप्राप्य निववृते निवृत्तः खलु । अतिशयोक्तिः । श्रीकृष्णदर्शनार्थं प्रेरितस्तत्कटाचो लज्जया अन्तरा निवृत्त इति भावः । ८५ ॥

किमिति । अस्याःलक्ष्मणाया भुजयुग्मं बाहुद्वयं स्रजा मालया किं अपिच निजेन आत्मना प्रेष्ठं प्रियं श्रीकृष्णं भजस्व सेवस्व इति एवं प्रकारेण अतनुना कामेन चोदितं सदपि ह्रीस्तम्भतः लज्जया सात्विकस्तम्भेन च भृशजडं अतिजाड्य-युक्तं सत् मन्दतरं मालादाने अतिमन्थरं स्थितं । अतिशयोक्तिः । ८६ ॥

चन्द्रकान्तेति । तदानीं तत्कालं चन्द्रकान्तवदना

याद्वेन्द्र मुखचन्द्र रुचायत्
स्वेद दम्भ मुदपादय दम्भः। ८७॥
इन्द्रनील मणि मेचक कान्तेः
पीत चेल तड़ितः पुलकेन।
कृष्ण नूतन घनस्य पुरः सा
नीप यष्टि रभवत् कुसुमाढ्या। ८८॥
माल्यदान विनिदेश विभङ्गा
दागसः प्रकुपितः किमु कामः

चन्द्रसुन्दरमुखी इयं लक्ष्मणा चन्द्रकान्त मणितां आप प्राप। यद्वेतोः यादवेन्द्रस्य श्रीकृष्णस्य मुखमेव चन्द्रः तस्यरुचा कान्त्या स्वेददम्भं घर्म्म कपटं अम्भः जलं उदपादयत् अजनयत्। रूपकापह्नवौ। एतेन लक्ष्मणायाः सात्विक स्वेदोदय उक्तः। ८७॥

इन्द्रेति। इन्द्रनीलमणेः रिव मेचका नीला कान्तिर्यस्य तस्य पीतचेलं पीतवस्त्रमेव तड़ित् विद्युत् यस्य तस्य कृष्णः श्रीकृष्ण एव नूतन घनः नवमेघः तस्य पुरः अग्रे सा लक्ष्मणा पुलकेन रोमाञ्चेन हेतुना कुसुमाढ्या पुष्पपूर्णा नीपयष्टिः कदम्बवृक्षोऽभवत्। रूपकं। एतेन सात्विक रोमाञ्च उक्तः। ८८।

माल्येति। माल्यदाने वरणमाला प्रदाने यो विनिदेशः किं स्रजापिचेति पूर्वश्लोकोक्त आदेशः तस्य विभङ्गात् अपालनात् लक्ष्मणा भुज कृतादित्यर्थः आगसः अपराधात् प्रकुपितः क्रुद्धः कामः बाणपञ्चकं स्वबाणसमूहं अयोजयत् किमु लक्ष्मणा बाङ्गमिति शेषः अन्यथा बाणप्रयोगाभावे अस्याः

बाणपञ्चक मयोजय दस्रा
अन्यथा कथमभूत् भुज कम्पः। ८९॥

अन्तरप्य तनुना बहिराल्या
नुन्न बाहु लतिका स्फुट लज्जा।
मालया प्रियतमं गलएषा
प्रेमशृङ्खलिकयेव बबन्ध। ९०॥

तत् क्षणं दिविषदां कुसुमौघो
नन्दनादव चितोऽलि परीतः।
अन्तराल मवनीन्द्र वसत्योः
पूरयन्न पतदुल्लसितश्रीः। ९१॥

लक्ष्मणायाः भुजयोः बाह्वोः कम्पः कथमभूत्। उत्प्रेक्षा। एतेन सात्विकवेपथुरुक्तः। ८९॥

अन्तरिति। अन्तः अभ्यन्तरे अतनुना कामेन बहिः बहिर्भागे आलया सख्याच नुन्ने प्रेरिते मालयदानार्थमितिशेषः बाहुलतिके यस्याः सा अतो स्फुटलज्जा ईषदपसृत त्रपा एषा लक्ष्मणा प्रियतमं श्रीकृष्णं गले कण्ठा बच्छेदे प्रेमशृङ्खलिकया प्रेमनिगड़ेनेव मालया वरणमालयेन बबन्ध श्रीकृष्णकण्ठे मालयमर्पितवतीति भावः। उत्प्रेक्षाति शयोक्तौ। ९०॥

तत्क्षणमिति। तत्क्षणं तस्मिन्नवसरे नन्दनात् देवोद्यानात् अवचितः संगृहीतः अलिभिर्भृङ्गैः परीतः व्याप्तः अतएव उल्लसित श्रीः शोभायुक्तः दिविषदां देवानां कुसुमौघः पुष्प प्रकरः अवनी पृथ्वी च इन्द्रवसतिः स्वर्गश्च तयोः अन्तरालं मध्याकाशं पूरयन् अपतत् पपात तदा देवकुसुमवृष्टिर-भूदित्यर्थः। अतिशयोक्तिः। ९१॥

तन्मधूक तुलसी नव दूर्व्वा
कल्पितं हरिगले वरमाल्यं।
अर्पितं प्रहरता शर शेषे
संबभौ धनुरिवात्म भवेन। ६२॥
कान्ति सारभृति वक्षसि माला
विम्बिता यदुपतेः प्रचकाशे।
काम मार्गणगणः कियदंशैः
संप्रविष्ट इव संपरिलग्नः। ६३॥
शोभया वरतनो रति सख्या
मानसं परिहरन्त मुपेन्द्रं

तदिति। हरेः श्रीकृष्णस्य गले कण्ठे मधुकैः गुड़ पुष्पैः तुलसीभिः तन्मञ्जरीभिः नवदूर्वाभिश्च कल्पितं रचितं तत् वरमाल्यं लक्ष्मणा प्रदत्त वरणमाला प्रहरता घ्नता आत्मभुवेन कामेन शराणां शेषे समाप्तौ सति अर्पितं धनुः चापइव सम्बभौ योद्धारो हिगले धनुरर्पयित्वा शत्रुं वशीकुर्व्वन्तीति प्रसिद्धिः। उत्प्रेक्षा। ६२॥

कान्तीति। कान्तिसारभृति। लावण्यपूर्णे यदुपतेः श्रीकृष्णस्य वक्षसि विम्बिता प्रतिबिम्बिता माला वरणमाला कियदंशैः कियद्भिर्भागैः सम्प्रविष्टः अन्तः प्रविष्टः सम्परिलग्नः हृदिसंलग्नः कामस्य कन्दर्पस्य मार्गणगणः शरसमूहः इव प्रचकाशे शुशुभे उत्प्रेक्षा। ६३॥

शोभयेति। मदनः कामः शोभया सौन्दर्य्येण रति सख्याः रतेः स्वपत्न्याः सखी अष्टमी वयस्या च तस्याः वरतनोः लक्ष्मणाया

पाशकेन मदनो वरमाला-
छद्मना किमु बबन्ध तदानीं। ९४
लोमभिः किमु हरे र्नृपपुत्री
रूप सम्पद मवेक्षितुमुत्कैः।
उन्मुखैः पुलकितत्व निभेन
श्रीशरीर उदभावि जवेन। ९५॥
लब्धमीन मतनुर्ध्वज भूतं
खण्डमङ्गरुचिभिःर्निज जैत्रं॥
पुष्पमाल्य कपटै र्यदुनाथं
स्तम्भनेषुभिरपीड़यदत्र। ९६॥

मानसं चित्तं परिहरन्तं उपेन्द्रं श्रीकृष्णं वरमाला छद्मना, वरणमाला कपटेन पाशकेन पाशायुधेने तदानीं बबन्ध किं। उत्प्रेक्षा। सापह्नवा। ९४॥

लोमभिरिति। नृपपुत्र्या लक्ष्मणायाः रूपसम्पदं सौन्दर्य्यातिशयं अवेक्षितुं द्रष्टुमिव उत्कैः उत्कण्ठितैः अत उन्मुखैः ऊर्द्ध्वमुखैः लोमभिः पुलकित त्वनिभेन रोमाञ्च कपटेन हरेः श्रीकृष्णस्य श्रीशरीरे शोभने देहे जवेन शीघ्रं उदभावि उद्भूतं किमु, सापह्नवोत्प्रेक्षा। एतेन भगवतः सात्विक रोमाञ्चउक्तः। ९५॥

लब्धमीनमिति। अतनुः कामः ध्वजभूतं निजकेतनभूतं लब्धमीनं यस्य खण्डयन्तं अङ्गरुचिभिः अवयव शोभाभिः निजस्य स्वस्य जेत्रं जयनशीलं यदुनाथं श्रीकृष्णं पुष्पमाल्य कपटैः वरणमाला व्याजैः स्तम्भनेषुभिः स्तम्भनबाणैः अत्र सदसि अपीड़यत् किमित्यर्थः। सापह्नवोत्प्रेक्षा। एतेन भगवतः सात्विकस्तम्भ उक्तः। ९६॥

लक्ष्मणा भुजलतामिव मालां
प्राप्य तत्र मुदितं हरिवक्षः।
सं प्रकाशयति तत्प्रतिदानं।
प्रेम घर्म्मकपटं स्म गलत्किं। ६७॥
कज्जलाभ ममलं हरि वक्षो
माल्य सङ्ग पुलकेन विरेजे।
बाणपूर्ण मिव साधन पट्टं
शक्र नीलमय मात्मभवस्य। ६८॥
कोमला नृपसुता नवनीतात्
काम बाण विकलेत्यपि युक्तं।

लक्ष्मणेति। तत्र सदसि लक्ष्मणायाः भुजलतामिव मालां वरणमालां प्राप्य मुदितं आनन्दितं हरेः श्रीकृष्णस्य वक्षः घर्म्म कपटं स्वेदव्याजं गलत् निर्गच्छत् प्रेमतस्य माला प्राप्त्या नन्दस्य प्रतिदानं प्रतिशोध प्रदानं सम्प्रकाशयतिस्म किं एतेन भगवतः सात्विक स्वेदोदय उक्तः। सापह्न-वोत्प्रेक्षा। ६७॥

कज्जलाभमिति। कज्जलाभं नील अमलं निर्म्मलं हरेः श्रीकृष्णस्य वक्षः वक्षस्थलं माल्यस्य वरणमालायाः सङ्गेन संसर्गेण यः पुलकः रोमाञ्चः तेन वाणैः शिक्षादाढ्यार्थं प्रयुक्तैः शरैः पूर्णं व्याप्तं शक्रनीलमयं इन्द्रनील मणिमयं आत्मभवस्य कन्दर्पस्य साधनपट्टं लक्ष्यांशक्षा साधकफलक मिवरेजे। उत्प्रेक्षा। ६८॥

कोमलेति। नवनीतात् दुग्धसारादपि कोमला मृदुलाङ्गी नृपसुता लक्ष्मणा कामवाणेन विकला विवशा इति एतदपि

किन्तु वज्र सुदृढ़ो गिरिधारी
पुष्पबाणविमना इति चित्रं । ९९ ॥
माल्यमक्षिषु तदामृतवर्त्ती
कृष्णकण्ठनिहितं सुहृदाञ्च ।
कण्टकायितमभून्नृपतीनां
द्वेषिणां च सदसि प्रमदाढ्ये । १०० ॥
भविष्यत्संयोगस्मरणवलितह्रीप्रणिहिता
कथञ्चित् वामोरुः सह सहचरीभिर्गृहमगात ।

युक्तं उचितं किन्तु वज्रात् कुलिशादपि सुदृढ़ः स्थेयान् गिरिधारी गोवर्द्धन धारक श्रीकृष्णः पुष्पबाणेन कुसुमभूतं कामशरेण विमना इति चित्रं आश्चर्यकरं काव्यलिङ्गं ।९९ ॥

माल्यमिति । तदा प्रमदाढ्ये आनन्दपूर्णे सदसि सभायां कृष्णस्य कण्ठनिहितं माल्यं वरणमाला सुहृदां मित्राणां युधिष्ठिरादीनां अक्षिषु नेत्रेषु विषये अमृतवर्त्ती अमृताञ्जन शलाका अभूत् च किन्तु द्वेषिणां शत्रूणां नृपतीनां राज्ञां अक्षिषु कण्ठकायितं कण्टकसदृशं अभूत रूपकं । १०० ॥

भविष्यदिति । भविष्यतः भाविनः संयोगस्य श्रीकृष्ण मिलनस्य स्मरणेन वलिता वर्द्धिता या ह्रीः लज्जा तया प्रणिहिता प्रेरिता वामोरुः लक्ष्मणा सहचरीभिः सखीभिः सह कथञ्चित् कष्टं कष्टं प्रियपरित्यागादिति भावः गृहं अन्तपुरं अगात । मधुरिपोः श्रीकृष्णस्य प्रियाया लक्ष्मणायाः विश्लेषेण विरहेण यः आधिः मनोव्यथा सः बलवत् अधिकं

प्रियाविश्लेषाधिर्बल वदविसह्यो मधुरिपो
रभून्मात्य स्पर्श प्रमदलहरी विप्लुततरः।१०१॥
संभूतेऽभ्युदयेहरे र्मुदमगुः सन्मित्रचक्रास्तदा
माद्रीसालिरवाप निर्वृतिमलं श्रीला यथा पद्मिनी।
मद्रेशो दिवसो यथा सकुलजः प्राप प्रकाशं परं
लीयन्ते निलयेस्मशाश्चैव नृपामूका उलूका इव
।१०२॥

अविसह्यः सोढुमशक्योऽपि मालस्य वरणमालायाः स्पर्शेन संसर्गेण या प्रमदलहरी आनन्दोर्म्मि तया विप्लुततरः निरस्त अभूत् इत्यर्थः। शिखरिणी वृत्तं। रसै रुद्रै श्छिन्नायमनसभलागः शिखरिणी। १०१॥

सम्भूत इति। तदा हरेः श्रीकृष्णस्य सूर्य्यस्य च अभ्युदये उन्नतौ उदये च सम्भूते जाते सति सन्मित्राणि चक्राः चक्रवाका इव उपमित समासः कोकश्चक्र श्चक्रवाक इत्यमरः मुदं आनन्दं आपुः प्रापुः। सालिः सखी सहिता श्रीला शोभना माद्री लक्ष्मणा पद्मिनी यथा अलं अत्यर्थं निर्वृतिं आनन्दं अवाप। सकुलजः स्ववंश सम्भूतैः पूर्वैः पुरुषैः सहितः मद्रेशः दिवसो यथा वासरइव परं अधिकं प्रकाशं ख्यातिं द्योतञ्चप्राप। श्रीकृष्ण सम्बन्धात् ख्यातोऽभूदित्यर्थः। शावव नृपाः शत्रुभूता राजानः उलूकाः पेचका इव मूकाः निःशब्दाः सन्तः निलये निज वासे लीयन्तेस्म। तुष्णीमुपविष्टा बभूवुः। उपमा शार्दूल विक्रीडितं वृत्तं। सूर्य्याश्वैर्मसजस्तताः स गुरवः शार्दूल विक्रीडितं। १०२॥

आच्छिद्य नेष्यामइमां वरोरू
युधीति रात्रौ द्विषतां न निद्रा॥
भावी कदा नौ नव सङ्ग इत्ये-
तयोस्तथाभूत् वरकन्ययोश्च। १०३॥

योऽभूद्विष्णुरथस्य चित्ररचना दक्षस्य तूर्णं कवे
र्धीरः श्रीभुवनेश्वरः सुविदुषामग्रस्य पुत्रोरथः।
तस्य श्रीमति लक्ष्मणापरिणये काव्ये कृतौ सुन्दरः
षष्ठः सर्ग उपारमत् वर्णनतः सानन्द दामोदरः॥
।१०४॥

षष्ठः सर्गः समाप्तः।

अच्छिद्येति। युधि युद्धे इमां वरोरूं लक्ष्मणां आच्छिद्य बलादाहृत्य नेष्यामः इति विचार्य्य स्थितानां द्विषतां शत्रूणां चैद्या दीनां रात्रौ निद्रानाभूत्। कदानौ आवयोः नवसङ्गः नूतन समागमः भावी भविष्यति इति विचार्य्य स्थितयोः एतयोः वरकन्ययोः श्रीकृष्ण लक्ष्मणयोश्च तथा रात्रौ निद्रानाभूत्। काव्यलिङ्गतुल्ययोगिते। १०३॥

श्रीति। लक्ष्मणापरिणये काव्ये वर्णनतः हेतोः सानन्दः आनिन्दितः दामोदरः श्रीकृष्णो यस्मिन् सः अतः सुन्दरो मनोहरः षष्ठः षट्संख्या पूरकः सर्गः उपारमत् समाप्तः। १०४।

इति श्रीलक्ष्मणापरिणय व्याख्यायां षष्ठः सर्गः समाप्तः॥





## सप्तमः सर्गः ।

अत्रान्तरे सुतनुभावनया सशङ्का
निद्रा प्रगल्भ वनितेव निशान्त यामे ।
पश्चादुपेत्य शनकै नयनेपिधाय
श्रान्तं समाक्रम दुपेन्द्रमलंक्रमेण ।१ ॥

स्तोत्रैर्यथार्थ मधुरैः शुभगीतियुक्तै
स्तं सार्वमच्युतमुपास्य निशावमानं ।
व्यज्ञापयन् हरिकथा कवन प्रवीणा
वीणागिरोऽथ मगधावचनै रमीभिः ।२ ॥

अत्रान्तरेति । अत्रान्तरे सुतनोः लक्ष्मणायाः कर्म्मणि षष्ठी, भावनया श्रीकृष्ण कर्त्तृक चिन्तया हेतुना सशङ्का शङ्किता निद्रा निशायाः अन्त्ययामे शेषप्रहरे प्रगल्भ वनिता प्रगल्भा नायिका इव पश्चात् शनकैः मन्दं मन्दं उपेत्य आगत्य नयने नेत्रे कृष्ण सम्बन्धिनो पिधाय मुद्रयित्वा श्रान्तं क्लान्तं उपेन्द्रं श्रीकृष्णं क्रमेण समाक्रमत् आक्रान्तवती । लक्ष्मणां भावयती भगवतो निशान्त प्रहरे ईषन्निद्राभूदित्यर्थः । उत्प्रेक्षा । सर्गेऽस्मिन् प्रायोवसन्त तिलकं वृत्तं । तल्लक्षणन्तु श्रेयं वसन्ततिलकं तभजा जगौगः । १ ॥

स्तोत्रैरिति । अथ अनन्तरं हरिकथानां श्रीकृष्ण-चरितानां कवने प्रणयने प्रवीणाः निपुणाः वीणागिरः वीणातुल्य वचनाः मगधाः मागधाः स्युर्मागधास्तुमगधा इत्यमरः " शुभगीति युक्तैः मङ्गल गीत सहितैः यथार्थैः तथ्यैः मधुरै मनोहरैश्च स्तोत्रैः स्तुतिभिः सार्वं सर्व्वमयं तं अच्युतं

श्रीमन् हरे हरि हरि त्यरुणोऽभ्य् देति
व्योम्नः पतिः पतति पाश्चिदिश्चिक्षपायाः ।
कालः किमुद्गमित पातुक कन्दुकाभ्यां
शश्वऽभिखेलति विलोहित पाण्डुराभ्यां ।३॥

आकाशमल्लअभिधया कथितोऽग्निवाणः
खे भस्फुलिङ्गं वतिभाति ततः किमिन्दुः ।
चन्द्रप्रदीपगुलिका पतति प्रदीप्य
सूर्य्य प्रदीप गुलिकार्क उदेति पश्चात् ।४

श्रीकृष्णं उपास्य अमीभिः वक्ष्यमाणैर्वचनैः निशावसानं रात्रिशेषं व्यज्ञापयन् न्यवेदयन् । २ ॥

अथ नवभिः श्लोकैः मागधानामुक्तिं वर्णयति ।

श्रीमन्निति हे श्रीमन् हरे श्रीकृष्ण ! अरुणः सूर्यः हरि हरिति इन्द्रदिशि पूर्वस्यां अभ्युदेति उदयते । क्षपायाः पतिः चन्द्रः पाशिदिशि पश्चिमस्यां व्योम्नः आकाशात् पतति । अतः शश्वत् कालः समयः अविच्छिन्नरूपः विलोहित पाण्डुराभ्यां रक्तपाण्डुरवर्णाभ्यां उद्गमितः उत्क्षिप्तः पातुकः पतनशीलश्च यौ कन्दुकौ गेण्डुकौ ताभ्यां अभिखेलति क्रीडति किं इत्युत्प्रेक्षा । ३ ॥

आकाशेति । आकाशमल्लो इत्यभिधया नाम्ना कथितः प्रसिद्धः अग्निबाणः उत्सवार्थं कृतः आकाशमल्लाख्यः बाणः भानि नक्षत्राण्येव स्फुलिङ्गाः तद्बाणोद्गताः अग्निकणाः तद्वति तद्विशिष्टे खे आकाशे विभाति शोभते इन्दुः चन्द्रः चन्द्रप्रदीप गुलिका ज्वलच्चन्द्रदीपपिण्डं प्रदीप्य आकाशं उज्ज्वलयित्वा ततः आकाशमल्लबाणात् पतति पश्चात् अनन्तरं अर्कः सूर्यः सूर्य प्रदीपगुलिका ज्वलत्सूर्यदीपपिण्डं उदेति उत्तिष्ठति किं उत्प्रेक्षा । ४ ॥

वीच्योदया चलदरी परिनिः सरन्तं
ऋचावली तिमिर वारण दारणेन ।
रक्ताक्त काय मिव खं विपिनं विशन्तं
भीत्या हरिं शशि मृगेन सह प्रयाति ।५॥

अल्पस्फुटारुण सरोज विलोचनेभ्यो
मुञ्चन्ति भृङ्गनिभ मञ्जन मिश्रितानि ।
या खण्डितादूव विभो वत लोतकानि
ताः पद्मिनीः सुखयितुं सविताकि मेति ।६॥

वीच्येति। ऋचावली नक्षत्रसमूहः भल्लूकसमूहश्च नक्षत्रमृक्षं भं तारा। ऋक्षाच्छ भल्ल भल्लूका इति चामरः। उदयाचलस्य दर्य्याः कन्दरायाः परिनिः सरन्तं निर्गच्छन्तंतिमिरं अन्धकार एव वारणोहस्ती तस्य दारणेन विनाशेन हेतुना रक्ताक्त कायमिव रुधिरजर्ज्जरित कलेवरमिवस्थितं खं आकाशं विपिनं वनं व्यस्तरूपकं विशन्तं प्रविशन्तं हरिं सूर्य्यं सिंहञ्च वीच्य दृष्ट्वा भीत्याभयेन शशिनः चन्द्रस्य मृगेन अङ्क हरिणेन सह प्रयाति अपगच्छति अस्तमेति। रूपकोत्प्रेचा।५॥

अल्पेति। हे विभो! याः पद्मिन्यः खण्डिता नायिका विशेषा इव "ज्ञातेऽन्या सङ्गविकृतेः खण्डितेर्षा कषायिता" इति लक्षणात्। अल्पस्फुटेभ्यः ईषद्विकशितेभ्यः अरुणेभ्यः पाटलेभ्यः सरोजेभ्यः पद्मेभ्यः लोचनेभ्य नेत्रेभ्य इव अञ्जन मिश्रितानि कज्जलाविलानि लोतकानि अश्रूणि भृङ्गनिभं भ्रमरव्याजं मुञ्चन्ति त्यजन्ति। सविता सूर्य्यः ताः पूर्व्वोक्ताः पद्मिनीः कमलिनीः सुखयितुं आनन्दयितुं एति उदेति किं। रूपसापह्नवोत्प्रेचाः।६॥

संयोग कर्त्तरि कया कृकवाकु वाचा
यूनोर्विनिन्दित निशात्यय कृन्नियत्योः।
निद्रां मनाक् विजहतोरपि पक्ष्ममुद्रा
नान्योऽन्य बाहुलतिका वृति रेति भेदं। ७॥
म्लानादियं कुमुद वृन्दत एत्य लक्ष्मी
र्भृङ्गैः स्तुवद्भिरिव बन्दि गणैः परीता।
सौर प्रभाभिरिव सम्प्रति कुञ्चिकाभिः
प्रोद्घाटितच्छद कपाट मुपैति पद्मं। ८॥

संयोगेति। संयोगस्य स्त्रीपुंमिलनस्य कर्त्तरिकया कर्त्तरीरूपया विच्छेदकारिण्या इत्यर्थः कृकवाकूनां कुक्कुटानां वाचा वाण्यारुतेनेत्यर्थः "कृकवाकु स्ताम्रचूडः कुक्कुटश्चरणायुधः इत्यमरः" निद्रां मनाक् ईषद्विजहतोः त्यजतोः अपिविनिन्दिता तिरस्कृता निशायाः रात्र्याःत्ययं नाशं करोतीति तथोक्ता नियतिः दैवं याभ्यां तयोः यूनोः युवाच युवतीच तयोः स्त्रीपुरुषयोः पक्ष्ममुद्रा नेत्रलोममुद्रणं अन्योऽन्ययोः परस्परयोः बाहुलतिकावृतिः भुजलतावेष्टनञ्चभेदं विश्लेषं न एति नप्राप्नोति। रूपकातिशयोक्ती। ७॥

म्लानादिति। लक्ष्मीः शोभा स्तुवद्भि र्वन्दिगणैः स्तुतिपाठकैरिव भृङ्गैः परीता वेष्टिता सती म्लानात् मुद्रितात् कुमुदवृन्दतः कैरवसमूहात् एत्य आगत्य सम्प्रति कुञ्चिकाभिरिव सौरप्रभाभिः सूर्य्यकिरणैः प्रोद्घाटितानिछदाः दलान्येव कपाटानि यस्य तत् पद्मं उपैति प्राप्नोति। अतिशयोक्त्युत्प्रेक्षा रूपकाणि। ८॥

पारेऽपरे सरित एकिकया बिलोक्य
प्राचीं दृशा त्वपरया पति मीक्षमाणा।
याबत् समाह्वयति चक्रबधूः स ताबन्
प्रोद्धूत पक्षति रुपक्रमते प्रयातुं। ९ ॥

बाचा स्वनिर्जय कृता मभिसारिकाणां
प्रातः प्रतर्क्य दयितो रसि निद्रितानां।
निष्कासनं बितनुते बिरुतैः पिकालि
र्यन्निर्ज्जितोऽपकुरुते खलु तेन लोकः। १० ॥

पारइति। चक्रबधूः चक्रबाकी सरितः नद्याः अपरेपारे अन्यतीरे एकिकया दृशा एकेन चक्षुषा प्राचीं पूर्व्वां दिशं विलोक्य दृष्ट्वा तु अपरया अन्यया दृशा पतिं प्रियं ईक्षमाणा पश्यन्ती सती याबत्समाह्वयति आकारयति ताबत् सः पतिः प्रोद्धूत पक्षतिः उत्कम्पित पक्षमूलः सन् प्रयातुं प्रियानिकट-मिति शेषः उपक्रमते आरभते। स्वभावोक्तिः। ९ ॥

बाचेति। प्रातः पिकालिः पिकसमूहः बाचाबाण्या स्वेषां निर्जयं पराजयं कुर्व्वन्तीति तथोक्तानां दयतोरसि प्रियवक्षसि निद्रितानां अभिसारिकाणां नायिका विशेषाणां "कान्तार्थिनीतुयायाति सङ्केतं साभिसारिकेत्यमरः" निष्काशनं प्रियबक्षसः बहिष्करणं बिरुतैः ध्वनिभिः प्रतर्क्य अपकारं चिन्तयित्वा बितनुते बिदधाति हि लोकोजनः येन करणेन निर्जितः पराभूतः तेन करणेन अपकुरुते शत्रोरपकारं करोति प्रातः पिकध्वनि श्रबणेन अभिसारिकाः सङ्केतस्थानेभ्यः निर्गच्छतीतिभावः।' काव्यलिङ्गार्थन्तरन्यासौ। १० ॥

काकस्वनाः प्रति गृहं दृढभाव यावा
वष्टब्ध बाहु परिरब्ध युव द्वयानां।
निद्रासुखेषु पविपात इव प्रभाते
दण्ड प्रहार इव भाण्ड शते भवन्ति। ११॥

इत्थं प्रभात पिशुना स्तुति पाठकानां
वाणी प्रतीपवनितेव तदा वतीर्णा।
निद्रामुपेन्द्र वपुषो द्रुत मिन्द्रियाणां
व्य द्रावयत् खलु विमोहन मावहन्ती ।१२॥

दृक्पद्म संपुट कपाट युगं विपाट्य
स्वापः ससर्पन्महरेः किमु देह गेहात्

काकस्वना इति। प्रभाते प्रातःकाले प्रतिगृहं काकानां स्वनाः ध्वनयः दृढभावः गाढ़स्नेह एव यावः जतु तेन अवष्टब्धाः स्थिराः ये वाहवः भुजाः तैः परिरब्धानि यानि युवद्वयानि युवकमिथुनानि तेषां "लाचारासा जतुक्लिवे यावोलक्तो द्रुमादय इत्यमरः" निद्रासुखेषु भाण्डानां शतं तस्मिन् दण्डप्रहार इव दण्डताड़नमिव पविपातः वज्रप्रहारइव भवन्ति। उपमोत्प्रेचे। ११ ॥

इत्थमिति। इत्थं पूर्व्वोक्तप्रकारेण प्रभातस्य प्रातःकालस्य पिशुना स्तुतिपाठकानां वन्दिनां वाणी वचनं प्रतीपवनिता प्रतिकुला नायिकेव तदा अवतीर्णा सती इन्द्रियाणां चक्षुरादीनां विमोहनं आवहन्ती मोहयन्तीं निद्रां उपेन्द्रस्य श्रीकृष्णस्य वपुषः देहात् द्रुतं शीघ्रं व्यद्रापयत् विद्रावयामास। उत्प्रेचासमासोक्ती। १२॥

दृगिति। स्वापः निद्रा "स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यमरः" महरेः श्रीकृष्णस्य दृक्पद्मणां नेत्रलोम्नां

जृम्भानिभा दलसतास्य मथोविघाट्य द्वारं
जगाम वलिता वयवान् विहाय। १३ ॥
आकुञ्चितेष दुदिताश्रु कणा तदानीं
दामोदरस्य दरमीलित दृग्‌द्वयीसा।
नीहार शीकर युगल्प विजृम्भ-माणं
तुल्यश्रियं त्व भजतां ननु पुण्डरीकं ।१४॥
क्षीरोदधे-रिव विधुः स उदित्य तल्पात्
कल्पान् प्रकल्प्य नियतान् जनशिक्षणार्थं।

सम्पुटे एव कपाटे तयोः युगं युगलं विपाट्य फेटयित्वा किमु देहः श्रीकृष्णस्य शरीरमेव गेहं तस्मात् ससर्प जगाम। अथ अलसता आलस्यं जृम्भानिभात् जृम्भणव्याजात् आस्यं मुखं द्वारं विघाट्य उद्घाट्य वलितावयवान् मोट्टितानि श्रीकृष्णस्य अङ्गानि विहाय त्यक्त्वा जगाम। रूपकोत्प्रेक्षापह्नवाः। १३ ॥

आकुञ्चितेति। आकुञ्चिता सङ्कुचिता ईषत् अल्पं उदितानि जातानि अश्रुकणानि यस्याः सा निद्राभङ्गकालीन जृम्भाया इति भावः दामोदरस्य श्रीकृष्णस्य सा दरमिलिता ईषद्विकशिता दृग्‌द्वयी नेत्रद्वयं तु पुनः नीहारशीकरयुक् हिमकणायुक्तं अल्पविजृम्भमाणं दरविकशितं पुण्डरीकं शुक्लाम्बुजं एते द्वे तुल्यां सदृशीं श्रियं शोभां अभजतां प्रापतुः। तुल्ययोगिता।१४॥

क्षीरोदधेरिति। स विधुः श्रीकृष्णः चन्द्रश्च क्षीरोदधेः क्षीरसमुद्रादिव तल्पात् शय्यायाः उदित्य उत्थाय नियतान् नित्यान् कल्पान् विधीन् स्नानसन्ध्यादीन् जनानां लोकानां शिक्षणार्थं शिक्षायै प्रकल्प्य कृत्वा आकल्पस्य वेशस्य कल्पनकलायां रचना कर्म्मणि कुशलैर्निपुणैः सुजुष्टः सेवितः सन् वेशपरिग्रहणार्थमिति भावः। अथ अनन्तरं राजकं

आकल्प कल्पन कला कुशलैः सुजुष्टः
संस्फोट चेष्ट मथराजक मुन्निनाय । १५ ॥
श्रीरुक्मिणी हृति जयैधितया विवेधात्
लघ्यस्य चेदि नृपतिः प्रहितः क्रुधाशु ।
माद्रीं जिघृक्षु रघघात्यभिघाति भूपान्
नद्धी चकार निशि मन्त्रण तन्तु योगात् । १६ ॥
दैत्यावरोध मधिगत्य सुधां यथेन्द्रः
स्त्रीमूर्त्तये मधुभिदेऽर्पितवान् पुरैव ।

राजसमूहं संस्फोटे युद्धे चेष्टा उद्योगो यस्य तत् सत् उन्निनाय अनुमितवान् । कलिसंस्फोटसंयुगा इति युद्धपर्य्यायेऽमरः । उपमा । प्रातः श्रीभगवान् वेशपरिग्रह समये शत्रु नृपाणां युद्धोद्योगमनुमितवानितिभावः । १५ ॥

श्रीरुक्मिणीति । निशि गतायां रात्रौ चेदिनृपतिः शिशुपालः श्रीरुक्मिण्याः हृतिः हरणं तस्माज्जायत इति तथोक्तया रुक्मिणीहरण जन्यया पुनः लघ्यस्य विवेधात् श्रीकृष्ण कर्त्तृक वेधनाद्धेतोः एधितया वर्द्धितया क्रुधा क्रोधेन प्रहितः प्रेरितः सन् माद्रीं लक्ष्मणां जिघृक्षुः आच्छेत्तुमिच्छुः अघ घातिनः अघासुरनाशकस्य श्रीकृष्णस्य अभिघातिनः शत्रून् भूपान् राज्ञः मन्त्रणं गुप्तमन्त्रणमेव तन्तुः सूत्रं तद्योगात् आशु शीघ्रं नद्धीचकार युद्धोद्युक्तान् चकार । काव्यलिङ्गरूपके । १६ ॥

दैत्येति । पुरा अमृतमन्थनावसरे इन्द्रः दैत्यानां असुराणां अवरोधं आक्रमणं अधिगत्य ज्ञात्वा सुधां अमृतं स्त्रीमूर्त्तये मोहिनीमूर्त्तिधारिणे मधुभिदे विष्णवे यथा अर्पितवान् तथा मद्रमघवा वृहत्सेनः क्षितिभुजां राज्ञां रोधं

रोधं तथाच्चितिभुजां प्रवितर्क्य पुत्रीं
कृष्णाय मद्रमघवा चकमे प्रदातुं ।१७॥
रुक्मि स्वसार मिव सीरधरानुजोऽयं
प्रोद्वच्यते दुहितरं स्वपुरे मदीयां ।
यास्यामि भीष्मकइवानु सयौतुकादिः
दातास्मि कल्य इति नक्त मसौच मेने ।१८
भानुं प्रभेव कमलं सुषमेव चेष्टा
लोकं यथा बलिभुगालि कलेऽत्र काले ।

कन्याहरणार्थं रोधनं प्रवितर्क्य उत्प्रेक्ष्य पुत्रीं कन्यां लक्ष्मणां कृष्णाय प्रदातुं कृष्णनिकटे समर्पयितुं चकमे इयेष। उपमा। १७।

रुक्मिस्वसारमिति। अयं सीरधरस्य बलदेवस्य अनुजः श्रीकृष्णः रुक्मिस्वसार रुक्मिणीमिव मदीयां दुहितरं कन्यां लक्ष्मणां स्वपुरे द्वारकायां प्रोद्वच्यते परिणेष्यति। सयौतुकादिः कन्यादेयवस्त्वादि सहितः अहं भीष्मकः रुक्मौ पितेव अनुपश्चात् यास्यामि गमिष्यामि द्वारकामितिशेषः कल्ये प्रातःकाले प्रत्यूषोऽहर्मुखं कल्यमित्यमरः" दातास्मि लक्ष्मणां कृष्णायेति शेषः, इति वाक्यार्थं कर्म्म, नक्तं रात्रौ असौ बृहत्सेनः मेने निश्चितवान् किञ्चेतिचार्थः। उपमा। १८।

भानुमिति। बलिभुजां काकानां या आलिः समूहः तस्याः कलः ध्वनिः यस्मिन् तस्मिन् अत्र काले अस्मिन् प्रातःकाले प्रभा कान्तिः भानुं सूर्य्यमिव सुषमा परमशोभा कमलं पद्ममिव चेष्टा चेतना लोकं जनं यथा मात्री लक्ष्मणा निर्व्वाद्य भृत्य बिभवा बादित्रपरिकर यौतुकादिरहिता जनकेन पित्रा

निर्बाध भृत्य विभवार्जन काभि गुप्ता
माद्री यदूत्तम मवाप शताङ्कक्रेन ।१९॥
मद्रेश्वरः प्रधन तत्पर वीरभूप
व्रातागतां भिय मुपेन्द्र पदारविन्दे
माद्र्या तया सह विसृज्य ययौ विहृष्टो
हृष्टस्त्रिविक्रम पराक्रमवित् स्वगेहं ।२०॥
द्वारावतीपति रथान्तिक वर्त्तिनं तं
द्राक् दारुकं निजदृशा स विडम्बयन्त्या।
प्रोद्वर्त्तनं नवजल प्रचलच्छ फर्य्याः
प्राचोदय द्रथ वरस्य सुसज्जनाय ।२१॥

अभिगुप्ता रक्षिता सती शताङ्केन चुद्ररथेन यदूत्तमं श्रीकृष्णं अवाप प्राप। मालोपमा। १९॥

मद्रेश्वरइति। त्रिविक्रमस्य श्रीकृष्णस्य पराक्रमवित् प्रभावज्ञो मद्रेश्वरः वृहत्सेनः प्रधन तत्पराणां युद्धोद्युक्तानां वीरभूपानां शूरनृपतीनां व्रातात्समूहात् आगतां जातां भियं भयं तया माद्र्या लक्ष्मणया सह उपेन्द्र पदारविन्दे विसृज्य त्यक्त्वा समर्प्येति यावत् विहृष्टः श्रीकृष्णागतेति शेषः हृष्टः आनन्दितः सन् स्वगेहं ययौ गतवान्। सहोक्तिः। २०॥

द्वारावतीति। अथ वृहत्सेन विसर्ज्जनानन्तरं सः द्वारावती पतिः श्रीकृष्णः नवजले प्रज्वलन्त्याः सञ्चरन्त्याः शफर्य्याः "प्रोष्ठीतु शफरीद्वयोः" प्रोद्वर्त्तनं उल्लुण्ठनं विडम्बयन्त्या अनुकुर्व्वन्त्या सूचनार्थं मुद्युक्तयेत्यर्थः निजदृशा अन्तिकवर्त्तिनं निकटस्थितं तं प्रसिद्धं दारुकं स्व सारथिं द्राक् हठात् रथवरस्य रथश्रेष्ठस्य सुसज्जनाय प्राचोदयत् प्रेरयामास। उपमा। २१॥

सुग्रीव शैव्य घन पुष्प वलाहकोढ़ं
शस्त्रास्त्र भासुर तरं लघु नन्दिघोषं
तार्क्ष्य ध्वजाढ्यमथ दारुक आनिनाय
नाज्ञा विलम्बन सहा महतां हि सिद्धिः ।२२॥
तत्रोपवेश्य दयिता मथ संनिविश्य
यावद् ययौ रथवरे स यदु प्रवीरः ।
तावन्नृपाः तमनुजग्मु रवाप्त वार्त्ताः
श्येनं यथा वलिभुजो हृत मांस भोज्यं ।२३॥

सुग्रीवेति । अथ भगवत आदेशानन्तरं दारुकः सुग्रीव-शैव्य घनपुष्प वलाहकैः तन्नामभिरश्वैः उढं युक्तं शस्त्रास्त्रै भासुरतरं अधिक तेजस्कं तार्क्ष्यध्वजाढ्यं गरुड़ध्वजेन शोभमानं नन्दिघोषं तन्नामकं रथं लघु शीघ्रं आनिनाय आनीतवान् । हि महतां सिद्धिः फललाभः आज्ञाविलम्बनस्य आदेश विलम्बस्य सहाक्षमा न भवति । महतां आज्ञामात्रेण कार्य्यसिद्धिर्भवतीभावः । अर्थान्तरन्यासः । २२ ।

तत्रेति । अथ रथानयनानन्तरं सः यदुप्रवीरः श्रीकृष्णः तत्र रथवरे दयितां प्रियां लक्ष्मणां उपवेश्य वेशयित्वा सन्निविश्य स्वयं उपविश्य यावत् ययौ गतवान् तावत् अवाप्त वार्त्ताः प्राप्त कृष्ण गमनो दन्ताः नृपाः राजानः तं श्रीकृष्णं अनुजग्मुः युद्धार्थं मनुसस्रुः, कथमिव वलिभुजः काकाः हृतमांस भोज्यं गृहीत मांसाहारं श्येनं शशादनं यथा तथा अनुजग्मुरितिभावः उपमा । २३ ॥

भो दार तस्कर न सर्प च तिष्ठ दण्डं
व्याघ्रस्य मेऽज इव संपतित स्त्वमग्रे।
भागः पुरा भवसि रुक्मिण एधि मेऽद्य
युध्यस्व साध्विति स चेदि नृपोऽन्वधावत्॥२४

बाणो धनुर्द्धरधनुस्त इव प्रधावन्
बाणो धनुर्द्धर उपेत्य च शैव भावं।
कृष्णे स्वतात परभूति विघातकेऽस्मिन्
मात्सर्य्यभागनुजगाम च चेदिनाथं। २५॥

भो इति। भो दारतस्कर! भार्य्यापहारिन् न सर्प न गच्छ च पुनः दण्डं घटिकार्द्धकालं तिष्ठ व्याघ्रस्य अग्रे अजः छाग इव त्वं मे अग्रे सम्पतितः पुरा रुक्मिणीहरणे युद्धे त्वं रुक्मिणः रुक्मिणी भ्रातुः भागः प्रतिभटत्वेन युद्धभागः भवसि पुरा योगे लट् अभवः। अद्य मे मम भागः एधि भव, साधु युध्यस्व युद्धं कुरु, इति एवं प्रकार मुक्त्वा सः चेदिनृपः शिशुपालः अन्वधावत् श्रीकृष्णमिति शेषः। उपमा। २४॥

बाण इति। धनुर्द्धरस्य धन्विनो धनुस्तः धनुषः बाणः शर इव धनुर्द्धरः धानुष्कः बाणः बाणासुरः प्रधावन् स्वतातस्य निज पितुः बलेः या परभूतिः परमैश्वर्य्यं तस्याः विघातके विनाशके त्रिविक्रमाभिन्न इत्यर्थः अस्मिन् कृष्णे शैवभावं शिवभक्तत्वं उपेत्य अनपेत्य च पुनः मात्सर्य्यभाक् मत्सर बुद्धिः सन् चेदिनाथं चैद्यं अनुजगाम साहाय्यार्थमनुगतवान्। किञ्चेतिचार्थः। उपमा। २५॥

मातुस्तव श्रुति युगादिव वामनस्य
प्रोद्भासि कुण्डलवर द्वितयीं मुरारे!
त्वद्वक्षसोऽद्य परिहृत्य दधामि माद्री
मित्यश्मसार रथगो नरकोऽन्व धावत ।२६

( युग्मकं )

त्वं जन्मनः प्रभृति चोरितवद्व्रजान्त
र्लीनोऽपहृत्य नवनीत मथोऽपि गोपीः।
कंसादि कैतव वधैधित साहस श्रीः
भीष्मात्मजां क्रमवलः सदसोऽप्यहार्षीः ।२७॥

मातुरिति। हे मुरारे! वामनस्य वामनावतारिणः तव मातुः अदित्याः श्रुतियुगात् कर्णद्वयात् प्रोद्भासि कुण्डलवर द्वितयीं देदीप्यमान कर्णभूषण युगलमिव अद्य त्वद्वक्षसः माद्रीं लक्ष्मणां परिहृत्य दधामि ग्रहीष्यामि (वर्त्तमान सामीप्ये लट् एवमग्रे मिलर चापि) इति उक्त्वेति शेषः अश्म सार रथगः अयस्मय रथगतः नरकः प्रागज्योतिपाधीश्वरः अन्वधावत् कृष्णमिति शेषः "लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालाय सायसी अश्मसार इत्यमरः। उपमा। २६॥

अथ युग्मेन दुर्गति पूर्व्वं जरासन्धानुधावनं वर्णयति। त्वमिति हे कृष्ण इत्याहाय्यं त्वं जन्मनः प्रभृति जन्मकाला-दारभ्य चोरितवत् अपहृत पदार्थ इव व्रजान्तः गोपपुर मध्ये लीनः सन् अथो कालक्रमेण, नवनीतं अपिच गोपीः गोपिकाः अपहृत्य कंसादीनां कैतववधेन कपटमारणेन एधिता वर्द्धिता साहसश्रीः साहसातिशयो यस्य तथोक्तः क्रमवलः क्रमेण प्राप्तवलः सन् भीष्मात्मजां रुक्मिणीं सदसः सभाया अपि अहार्षीः हृतवान्। उपमा। २७॥

तस्मिन्ननेहसि भगिन्यनुराग योगात्
रुक्मीऽश्लथ प्रहरणो विजितोद्य किन्तु।
आच्छिद्य चेदि पतये प्रददामि माद्रीं
त्वद्वीति मागध उपेन्द्र मथोऽन्व धावत्।२८॥
शाल्वोऽपि भीष्मकसुता हरणेऽपमानात्
शर्व्वा दवाप्य तपसा प्रवणाद्विमानं।
सौभं प्रकाम गम मर्कइवोष्ण कालं
खेदुर्विलङ्घ्य गमनोहरि मन्व यासीत्। २९॥
मुक्तावली परिगतं परया च लक्ष्म्या
विभ्राजितं पृथुरथाङ्ग विराजमानं।

तस्मिन्निति। तस्मिन्ननेहसि काले कालोदिष्टोऽप्य नेहापि समय इत्यमरः, रुक्मिणीहरणकाले रुक्मी भीष्मकात्मजः भगिन्यनुराग योगात् रुक्मिणी स्नेहवशात् श्लथ प्रहरणः त्वयि शिथिल प्रहारः सन् विजितः त्वया परास्तः। किन्तु अद्य त्वत् त्वत्तः माद्रीं लक्ष्मणां आच्छिद्य अपहृत्य चेदिपतये प्रददामि दास्यामि इति उक्त्वेति शेषः मागधः जरासन्धः अथो अनन्तरं श्रीकृष्णं अन्वधावत्। २८॥

शाल्वइति। शाल्वः सौभपोऽपि भीष्मकसुताहरणे रुक्मिणी-हरणे अपमानात् युद्धे पराजयाद्धेतोः तपसा तपस्यया प्रवणात्प्रसन्नात् शर्व्वाच्छिवात् प्रकामगमं स्वेच्छागमनं सौभं तन्नामाङ्कं विमानं व्योमयानं अर्कः सूर्य्यः उष्णकालं ग्रीष्मकालमिव अवाप्य प्राप्य खे आकाशे दुर्विलङ्घ्यं दुर्विज्ञेयं दुर्द्दशञ्च गमनं यस्य तथोक्तः सन् हरिं श्रीकृष्णं अन्वयासीत अनुधावितवान्। उपमा। २९॥

वैकुण्ठ बद्ध ज विटङ्क वितानजुष्टं
वैकुण्ठ ऐक्षत पुरो गगने स सौभं। ३०॥
विभ्रद्धनुः कनक दंशन शस्त्रतेजो
विद्युत्प्रभो नभसि सौभ विजृम्भ माणः।
गर्जन्न सशाल्व जलदःपरुषैर्न्निनादा
टोपै र्विधुं सदयितं च तिरश्चकार। ३१॥

मुक्तेति। सः वैकुण्ठः श्रीकृष्णः मुक्तावलीभिः मुक्तामालाभिः विमुक्त समूहैश्च परिगतं व्याप्तं च पुनः परया लक्ष्म्यापरमशोभया महालक्ष्मीदेव्याच विभ्राजितं शोभितं पृथुभिर्विशालैः रथाङ्गैः चक्रैः अन्यत्र पृथुना महता चक्रेण सुदर्शनाख्येन चक्रेण विराजमानं शोभमानं ध्वजैः पताकाभिः विटङ्केन कपोतपालिकयाच वितानैः उल्लोचै जुष्टं युक्तं उभयत्र तुल्यमिनद्विशेषणं पताका वैजयन्तीस्यात्केतनं ध्वजमस्त्रियां, कपोतपालिकायान्तु विटङ्कं। अस्त्री वितान मुल्लोच इति चामरः। सौभं व्योमयान विशेषं वैकुण्ठवत् वैकुण्ठलोकमिव पुरः पुरस्तात् गगने ऐक्षत अपश्यत्। उपमा। ३०॥

विभ्रदिति। धनुः चापं विभ्रत् धारयन् कनकदंशनस्य सुवर्णकवचस्य अस्त्राणाञ्च तेजांसि विद्युत्प्रभाः तड़ित स्फुरणानि यस्य तथोक्तः सः शाल्व एव जलदो मेघः नभसि आकाशे सौभे तदाख्ये विमाने विजृम्भमाणः प्रकाशमानः अन्यत्र सौभवत् विजृम्भमाणः गर्ज्जन् ससिंहनादं नदन्परुषैः कर्कशैः निनादाटोपैः शब्दाड़म्बरैः सदयितं प्रियासहितं सनक्षत्रञ्चेति गम्यते विधुं श्रीकृष्णं चन्द्रञ्च तिरश्चकार विगर्हयामास अन्यत्र आच्छादयामास रूपकं। ३१॥

( कुलकं )

रुक्मिस्वसार मपहृत्य पलायित स्त्वं
चौराधुना जवन यानवतः पुरो मे।
तार्क्ष्यस्य सर्प इव संपतितः प्रमादा
त्तिष्ठ क्षणं स्मर निजेष्टतमं च देवं। ३२॥
पश्य प्रसादित पुरान्तक दत्त मुच्चै
र्वृष्णि प्रभीषण मदोऽधि रुहन् विमानं।
व्योम्नि प्रभाकर इव द्युतिमान् तमिस्रं
त्वां संहरामि मलिनं शर रश्मि जालैः। ३३॥

अथ पञ्चभिः शाल्वकृत भगवदधिक्षेपं वर्णयति। •

रुक्मीति। हे चौर! रुक्मिस्वसारं रुक्मिणीं अपहृत्य पलायितः त्वं अधुनाजवनयानवतः वेगगामि विमानारूढ़स्य मे पुरःतार्क्ष्यस्य गरुड़स्य पुरः अग्रे सर्प इव प्रमादात् अनवधानतायाः हेतोः सम्पतितः असीति शेषः अथ क्षणं तिष्ठ निजेष्टतमं देवं स्वेष्टदेवतां च स्मर शीघ्रं निधनमेष्यतीतिभावः। उपमा। ३२॥

पश्येति। पश्य प्रसादितेन सन्तोषितेन पुरान्तकेन शिवेन दत्तं वृष्णीनां यदूनां प्रभीषणं भयङ्करं एतत्त्वेन शिववरप्राप्त मिति भावः। उच्चैः उन्नतं अदः एतत् विमानं अधिरुहन् व्योम्नि आकाशे प्रभाकरः सूर्य्य इव द्युतिमान् अहं मलिनं वर्णेन स्वभावेन च कृष्णां त्वां तमिस्रं अन्धकारं व्यस्तरूपकं शरा रश्मयः किरणाइव तेषां जालैः समूहैः संहरामि नाशयिष्यामि। उपमा रूपके। ३३॥

भा स्वद्विमान वरदीप्ति कृत प्रकाशो
ज्योत्स्नां विधोर्दिवसवत् त्वदिमां विकर्षन्
चैद्ये निवेद्य नितरा मनृणोऽहमद्य
श्रीशङ्करार्च्चन फलं सकलं प्रपद्ये । ३४ ॥

यावन्मदीय विशिख स्तव देहतोऽसून्
तूलान् समीर इव शाल्मलितः खलेन्द्र ।
नोत्पातयेदिह समर्पय राज कन्यां
तावन्न गोपतनयोऽर्हसि लब्धु मेनां । ३५ ॥

आबाल्य मन्य वनिता हरण स्पृहावान्
यस्त्व पाप्मन उदर्क मिमं लभस्व ।

भास्वदिति । भास्वतः दीप्तिमतः विमानवरस्य भौमस्य दीप्तिभिः कृतः प्रकाशो यस्य तथोक्तः अहं दिवसपक्षे भास्वतः सूर्य्यस्य यत् विमानवरं यानश्रेष्ठं तस्य दीप्त्या तेजसा कृतः प्रकाशो द्योतो यस्मिन् सः प्रकाशोद्योत आतपइत्यमरः, विधोः चन्द्रात् ज्योत्स्नां कौमुदीं दिवसवत् दिनमिव इमां लक्ष्मणां त्वत् त्वत्तः विकर्षन्नाहरन् चैद्ये शिशुपाले निवेद्य समर्प्य अनृणः परिशोधित मितऋणः सन् रुक्मिणी हरणादृखं प्रमार्जयन्नित्यर्थः अद्य सकलं समग्रं श्रीशङ्करस्य सदाशिवस्य अर्च्चनफलं प्रसादन प्रयोजनं प्रपद्ये प्राप्स्यामि । उपमा । ३४॥

यावदिति । हे खलेन्द्र दुष्ट श्रेष्ठ! समीरः वायुः शाल्मलितः वृक्षविशेषात् तूलानिव मदीय विशिखः मम वाणः तव देहतः शरीरात् असून् प्राणान् यावत् न उत्पातयेत् नोत्सारयेत् तावदिह राजकन्यां समर्पय प्रत्यर्पय ममेति शेषः गोपतनयः गोपालपुत्रः त्वं एनां राजपुत्रीं लब्धुंनार्हसि न योग्यो भवसि । उपमा । ३५ ॥

लोभान् मृतिं प्रवदतां विदुषां यथार्था
वागस्तु सुस्थिरतरो भव गोपसूनो । २६ ॥
इत्यादिवाक् परुषतां पुरुषार्थयन्तं
तं सौभगं सभमवेक्ष्य मिवेभराजः ।
वृष्णग्रणीर्नगणयन् पवमान तार्क्ष्य-
क्षिप्रत्व शिक्षक हयैश्चपलं प्रतस्थे । २७ ॥
आरूढ आशु गरुडं सुदृढं जडं च
यन्त्रेण यान्त मुरुदारु भुजद्वयेन

आवश्यमिति । त्वं आबाल्यं गोमण्डादारभ्य अन्य वनितानां परस्त्रीणां हरणे स्पृहावान् लोलुपः यत्, तस्य पापस्य परस्त्री हरण जनितस्य पापस्य इमं उदर्कं परिणामं मरणरूपं लभस्व प्राप्नुहि: लोभाद्धेतोः मृतिं मरणं प्रवदतां विदुषां वाक् लोभा न्मृत्युः प्रभवतीति वचनं यथार्था सार्था अस्तु हे गोपसूनो ! हे गोपालपुत्र ! सुस्थिरतरः युद्धार्थं स्थैर्यवान् भव । २६ ॥

इतीति । सः वृष्णग्रणीः श्रीकृष्णः इत्यादीनां पूर्वोक्तानां वाचां परुषतां रूक्षतां तिरस्कारमित्यर्थः पुरुषार्थयन्तं पौरुषत्वेन प्रकाशयन्तं सौभगं विमानस्थितं तं शाल्वं इभराजः हस्तिश्रेष्ठः भषकेशं कुक्कुरश्रेष्ठमिव 'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः शुनकोभषकः श्वा स्यादित्यमरः" नगणयन् पवमानतार्क्ष्ययोः वायुगरुडयोः क्षिप्रत्व शिक्षकाः वेगाध्यापकाः ये अश्वाः शैव्यादयः तैः चपलं शीघ्रं प्रतस्थे । उपमातिशयोक्ती । २७ ॥

आरूढइति । सुदृढं सुस्थिरं जडं निश्चेष्टं, यन्त्रेण कारुकौशलेन यान्तं चलन्तं गरुडं आशु शीघ्रमारूढः उरुणा दीर्घेण दारुभुजद्वयेन काष्ठरचितबाहुयुगलेन

स्वां दोर्द्व्योँ द्विगुणितां दधदिन्दिराङ्क
श्रीवत्स कौस्तुभ धरो विरराज पौण्ड्रः ।३८॥
श्रीराघवं श्वशुर वेश्मन आव्रजन्तं
भार्य्या युतं भृगुपतिः पथि नाम साम्यात् ।
संस्पर्द्धमान इव पौण्ड्रक वासुदेवो
रोद्धुं क्रुधा स्म लघु धावति वासुदेवं । ३९॥
मद्रेन्द्रजास्थिर शत ह्रदया प्रदीप्तं
चक्रध्वनि स्तनित तूर्ण विदीर्ण कर्णं ।

'स्वां स्वकीयां दोर्द्व्योँ बाहुयुगलं द्विगुणितां द्विरावृत्तां बाहुचतुष्टय मित्यर्थः दधत् धारयन् इन्दिराङ्कः लक्ष्मीरेखा श्रीवत्सः तदाख्य रोमावर्त्तविशेषः कौस्तुभो तदाख्यो मणिश्च तेषां धरतीति धरः नारायण मनुकुर्व्वन्नित्यर्थः पौण्ड्रः पुण्ड्काधीशः विरराज शुशुभे। स्वभावोक्तिः । ३८ ॥

श्रीराघवमिति। नाम्नः राम इत्यस्या आख्यायाः साम्यात्सादृश्यात् पौण्ड्रकपक्षे वासुदेवनाम्नः, संस्पर्द्धमानः स्पर्द्धावान् भृगुपतिः परशुरामः श्वशुरस्य जनकस्य वृहत्सेनस्य च वेश्मनः आलयात् आव्रजन्तं आगच्छन्तं भार्य्यया सीतया लक्ष्मणाया च युतं श्रीराघवं रामचन्द्रमिव पथिमार्गे पौण्ड्रक-वासुदेवः वासुदेवाख्यः पुण्ड्रदेशाधीश्वरः वासुदेवं श्रीकृष्णं रोद्धुं आक्रमितुं क्रुद्धा क्रोधेन लघु शीघ्रं धावतिस्म अधावत्। उपमा । ३९ ॥

मद्रेति। सः पौण्ड्रक वासुदेवः मद्रेन्द्रजा लक्ष्मणा स्थिर शतह्रदा स्थिरविद्युदिवतया प्रदीप्तं उज्ज्वलितं चक्राणांध्वनयः स्तनितानि गर्जितानीव तैः तूर्णं शीघ्रं विदीर्णाः कर्णाः लोकश्रवणानि येन तथोक्तं नानामणीनां द्युतयः कान्तयः

नाना मणि द्युति पुरन्दर कार्मुकाढ्यं
पश्यन् जगर्ज सहरेर्हरि बद्रथाभ्रं ।४०॥

कुलकं

भङ्गीं प्लवोऽङ्ग निवहे वहु यत्न तोऽङ्गी
कुर्वन् मृगेन्द्र पदभाक् हरिनाम साम्यात् ।
किं सम्भवेद्भण वृथा मम चिह्न माख्यां
धृत्वापि नासि निरपत्रप मत्सः मानः । ४१ ॥
कंसाद्व्रजे परिनिलीय पयः प्रदात्रीं
त्वं पूतनां च वृष वत्स खरादि जन्तून् ।

पुरन्दर कार्मुकमिव तेन आढ्यं युक्तं हरेः श्रीकृष्णस्य रथः अभ्रं मेघइव तत् पश्यन् अवलोकयन् हरिवत् सिंहइव जगर्ज दध्वान वचनमागामिश्लोकस्य दितिभावः । उपमा । ४० ॥

अथ सप्तभिः पौण्ड्रक कृतं भगवद्भर्त्सनं वर्णयति ।

भङ्गीमिति । प्लवः भेकः “भेके मण्डूकवर्षाभूः शालूर प्लव दर्दुरा इत्यमरः” हरिरित्यस्य नाम्नः साम्यात् सादृश्यात् “यमानिलेन्द्र चन्द्रार्क विष्णु सिंहांशु वाजिषु शुकाहि कपिभेकेषु हरिर्ना कपिलेत्रिषु इत्यमरः” अङ्गनिवहे अवयवसमूहे बहु यत्नतः यत्नातिशयेन भङ्गीं छटां सिंहस्येत्यर्थः अङ्गीकुर्वन् स्वीकुर्वन्नपि मृगेन्द्र पदभाक् सिंहाधिकारवान् सम्भवेत्किं न सम्भवेदित्यर्थः भण कथय हे निरपत्रप निर्लज त्वं मम चिह्नं श्रीवत्सादिकं आख्यां वासुदेव इति नाम वृथा व्यर्थं धृत्वापि मत्समानः ममतुल्यः नासि । निदर्शना । ४१ ॥

कंसादीति । हे पापपुरुष ! पापात्मन् ! त्वं कंसाद्भोजेश्वरात् व्रजे गोपपुरे परिनिलीय गुप्तं स्थित्वा पयः प्रदात्रीं

व्यापाद्य पाप पुरुषाधमतामवाप्य
स्याःकैर्गुणैर्नु पुरुषोत्तम शब्द वाच्यः। ४२॥
भ्राम्यन् वने मधु पुटानि विभज्य खादन्
निर्बोध घोष शिशुभि र्मधुसूदनाख्यां।
शार्दूल तामिव कुविन्द पुरे शृगालः
संप्रापितो मृगपतौ नति लङ्घसे नः। ४३॥
भोजेश्वराद्व्रजवने मगधाधिनाथात्
द्वारावती पुरि पयोनिधि दुर्गमायां
जीवन्निलीय कपटेन जनान्नि हन्तु
चौर्य्याय वा समय एव विनिर्गतोऽसि। ४४॥

स्तन्यदात्रीं पूतनां च वृषवत्सखरादीन् जन्तून् प्राणिनः व्यापाद्य विनाश्य अधमतां नीचतां अवाप्य प्राप्य कैः गुणैः पुरुषोत्तम शब्दवाच्यः पुरुषोत्तम इति प्रसिद्धः स्याः नु दोषबाहुल्यात् नत्वं पुरुषोत्तम शब्दवाच्य इति भावः। काव्यलिङ्गं। ४२॥

भ्राम्यन्निति। वने वृन्दावनादौ भ्राम्यन् गोचारणार्थमटन् मधुपुटानि क्षौद्रपटलानि विभज्य भंक्त्वा खादन् निर्बोधैः अज्ञैः घोषशिशुभिः व्रजबालकैः शृगालः कुविन्दपुरे तन्तुवाय पत्तने शार्दूलतां व्याघ्रत्वं सम्प्रापितः मृगपतीन् सिंहानिव मधुसूदनाख्यां मधुनः क्षौद्रस्य सूदनात् नाशात् मधुसूदन इति आख्यां नाम सम्प्रापितः लम्भितः त्वं "तन्तुवायः कुविन्दस्यादित्यमरः" नः अस्मान् अतिलङ्घसे अतिवर्त्तसे। काव्यलिङ्गोपमे। ४३॥

भोजेश्वरादिति। भोजेश्वरात् कंसात् व्रजवने वृन्दावनादौ मगधाधिनाथात् जरासन्धात् पयोनिधिना समुद्रेण दुर्गमायां दुष्प्रवेश्यायां द्वारावतीपुरि द्वारकानगर्य्याञ्च निलीय जीवन्

आजन्मनोऽपि चरितैर्दुरितै विपक्वं
दैवं तवाद्य भवति प्रतिकूलवर्त्ति ।
यद्भोगिनो ममपुरः पतितोऽसि भेकै
नात्युत्कटं फलति पापमिहैव किन्नु । ४५ ॥
गोवर्द्धनाचल गुहासुनिवेश्य गोपान्
ऋज्वाशयान् पशु धनैः सम मिन्द्र वृष्टौ ।
अज्ञान् प्रतार्य्य कथितो गिरिधारि नाम्ना
तैर्व्यर्थ मुद्धु र तरोऽसि मुहूर्त्त मास्व ।४६ ॥

गुप्तं धीयमाणः त्वं कपटेन कितवाचारेण जनान् लोकान्निहन्तुं नाशयितुं वा चौर्य्याय समये प्राप्तकाल एव विनिर्गतः असि वहिर्गतोभवसि । ४४ ॥

आजन्मन इति । जन्मनः आ जन्मकालादारभ्यापि चरितैः कृतैः दुरितैः पापैः विपक्वं परिणतं तव दैवं दिष्टं अद्यप्रतिकूलवर्त्ति विपक्षभूतं भवति, यत् हेतोः मम भोगिनः सर्पस्य भोगशीलस्येति गम्यते व्यस्तरूपकं पुरः अग्रे भेकः मण्डूकः त्वं व्यस्तरूपकं पतितः असि. अत्युत्कटं अत्यधिकं पापं दुष्कृतं इहैव न फलति न किन्तु फलत्येव "अत्युत्कटैः पापपुण्यैरिहैव फल मश्नुत इति प्रमाणात्" काव्यलिङ्ग रूपकार्थान्तरन्यासाः । ४५ ॥

गोवर्द्धनेति । इन्द्रस्य वृष्टौ वर्षणे यागभङ्गहेतुके सत्यां ऋज्वा शयान् सरलाभिप्रायान् गोपान् गोपालान् पशुधनैः गोमहिष्यादिभिर्द्धनैः समं सह गोवर्द्धनाचलस्य गुहासु कन्दरासु निवेश्य संस्थाप्य अज्ञान् विषयानभिज्ञान् तानितिशेषः प्रतार्य्य वञ्चयित्वा तैः गोपैः गिरिधारी इति नाम्ना कथितः अभिहितः त्वं व्यर्थं वृथा उद्धुरतरः अत्युद्रिक्तः असि भवसि मुहूर्त्तं आसस्व तिष्ठ । काव्यलिङ्गं । ४६ ॥

त्वत् पाप्मनां न गणनेह मनुष्य लोके
तत्साम्प्रतं निखिल दण्डधरस्य पार्श्वं ।
त्वां प्रेरयामि च निरूपित कर्म्म भोग
स्तेनैव याहि निरयान् दुरितानुरूपान् । ४७॥

इत्यादि वाक् शरचयैः स च पुण्डरीक-
प्रख्यांचमेन मपि पुण्ड्रक दण्डधारी ।
नाभ्रंशयन्निज धृते रचलं यथैषत्
नो सारमेय मनु गर्जति यन्मृगेन्द्रः । ४८ ॥

कन्दं मृणाल निचयैरिव कान्तिकुन्तै
र्दन्तैर्दधद्वदन मुद्गुणि दन्तवक्रः ।

त्वदिति । इह मनुष्यलोके त्वत्पाप्मनां तव पापानां गणना संख्या न शक्यत इत्यर्थः तत् तस्मात् कारणात् साम्प्रतं त्वां निखिलानां दण्डधरस्य यमस्य पार्श्वं प्रेरयामि प्रेरयिष्यामि, तेन यमेन निरूपितः कर्म्मणां पापादृष्टानां भोगो यस्य तथोक्तः सन् दुरितानां पापानां अनुरूपान् उचितान् निरयान् नरकान् "स्यान्नारक स्तुनिरयो नरको दुर्गतिस्त्रियां" याहि गच्छ । काव्यलिङ्गं । ४७ ॥

इतीति । सः पुण्ड्रकदण्डधारी पुण्ड्रकवासुदेवः इत्यादिभिः पूर्व्वोक्तैः वाग्भिः शरचयैरिव अचलं यथा पर्व्वतमिव पुण्डरीक प्रख्याख्यं पुण्डरीकनयनं एनं श्रीकृष्णं निज धृतेः धैर्य्यात् स्वावस्थानाच्च ईषदल्पं नाभ्रंशयत् अस्खलयत्, यद्धेतोः मृगेन्द्रः सिंहः सारमेयं श्वानं नोऽनुगर्जति नानुध्वनति । उपमा दृष्टान्तौ ॥ ४८ ॥

कन्दमिति । अथ मृणालनिचयैः कन्दमिव करहाटमिव स्थितं कान्त्याः शोभायाः कुन्तैः कुन्तस्वरूपैर्नाशकैरित्यर्थः

जन्मत्रय स्थिर विरोध वशान्मुकुन्द
क्रुद्धो ऽन्वधावदथ भर्त्सन वाक् प्रवीणः ।४९ ॥

( कुलकं )

घोषे कदन्न मुपभुज्य पराङ्गनानां
साध्वीव्रतं विघटयन्नपि मातुलंघ्नन् ।
त्वं यादवैर्यदपि संकलितः समाजे
नास्मादृशैः सुमतिभिः कुटिल स्वभाव । ५० ॥

रे यादवापसद तिष्ठ मदं तवाद्य
मन्दी करोमि नियतं त्वमनर्गलोऽसि ।

दन्तैः उद्गीर्णं उद्गतकिरणं "किरणोस्रमयूखांशु गभस्ति घृणिधृष्णाय इत्यमरः" वदनं मुखं दधत् धारयन् दन्तवक्त्रः तन्नामान्नृपतिः जन्मत्रये हिरण्याक्षादिषु त्रिषु जन्मसु विरोधो विद्वेषः श्रीकृष्णविषयकः तद्वशाद्धेतोः क्रुद्धः कुपितः भर्त्सन-वाक्षु तिरस्कार वाक्येषु प्रवीणः सन् मुकुन्दं श्रीकृष्णं अन्वधावत् अनुजगाम अनुगतवान् । उत्प्रेक्षा । ४९ ॥

अथ पञ्चभिर्दन्तवक्त्र भर्त्सन प्रकारं वर्णयति ।

घोषइति । घोषे आभीर पल्ल्यां कदन्नं कुत्सितमन्नं उपभुज्य भुक्त्वा पराङ्गनानां परस्त्रीणां साध्वीव्रतं पातिव्रत्यं विघटयन् ध्वंसयन् अपिच मातुलं मातुर्भ्रातरं कंसं घ्नन् नाशयन् त्वं यदपि यादवैर्दुर्भिः समाजे गोष्ठ्यां संकलितः गृहीतः तर्हि हे कुटिलस्वभाव ! वक्रशील ! अस्मादृशैः सुमतिभिः न समाजे संकलित इत्यर्थः अपाङ्क्तेय स्त्वमिति भावः । काव्यलिङ्गं । ५० ॥

रे यादवापसदेति । रे यादवापसद ! हे यादवाधम ! तिष्ठ अद्य तव मदं गर्व्वं मन्दीकरोमि नाशयि ष्यामि त्वं निय-

मद्यं पिबन् यदपि घूर्णित रक्तनेत्रः
किंमेन्दुरुः परिचिनोति यमं स्वमोतुं। ५१॥
गोमूत्र, गोमय बिगन्धि करीष भस्म
स्त्रीणां व्रजाजिर मलं पशु पोतकैस्तु।
सत्रोचितोऽधिशयितुं शठ गोपिकानां
सेवा पटुः कथमिहेच्छसि राजकन्याः। ५२॥
अद्य प्रमार्ष्टु तव नाम सचित्र गुप्तः
त्वद्वार मुज्झतु धराप्यधुना हताशाः।
सन्तूग्र भाव यदवः पितरौ चिरं ते
दुर्लङ्घ्य दुःख लवणाम्बु निधौ पवेतां। ५३॥

निश्चितं अनर्गलः उच्छृङ्खलः असि भवसि। उन्दुरु मूषिकः "उन्दुरु मूषिकोऽप्याखुरित्यमरः" मद्यं पिबन् सुरापानं कुर्वन् घूर्णिते रक्ते नेत्रे यस्य सः मदघुर्णित चक्षुर्यदपि तथापि स्वं स्वकीयं यमं अन्तकं ओतुं बिडालं न परिचिनोति किं, अप्रस्तुतप्रशंसा। ५१॥

गोमूत्रेति। हे शठ! गोपीकानां गोपाल स्त्रीणां सेवापटुः शुश्रूषानिपुणः गोमूत्र गोमयैः गवां मलमूत्रैः विगन्धि दुर्गन्धं करीषभस्मभिः शुष्क गोमय भस्मभि स्त्रीणां व्याप्तं व्रजाजीरं व्रजाङ्गणं पशुतर्णकैः गवादिपोतकैः सत्रा सह "साकन्तुसाकं सत्रासमं सहेत्यमरः" अधिशयितुं तत्रशयितुं उचितः योग्यः त्वं कथं केन प्रकारेण इह राजकन्याः नृपपुत्रीः इच्छसि अभिलषसि। काव्यलिङ्गं। ५२॥

अद्येति। अद्य सः प्रसिद्धः चित्रगुप्तो यमराजमन्त्री तव नाम आख्यां प्रमार्ष्टु लोपयतु धरा पृथ्व्यपि त्वद्वारं तव भरं उज्झतु त्यजतु उग्रभावाः प्रचण्डस्वभावाः यदवः यादवा

दग्ध्वा प्रमोदं मधुना धमते बधूना
मारब्धधारं मुदिताश्रु पयः प्रवाहैः ।
मत् क्रोध वह्नि रधिगच्छतु निः शिखत्वं
शूरो यदि स्थगयतत्र रथं रथाङ्गं । ५४ ॥

इत्थं कटूक्ति पटुरेष परं प्रलापी
गोपीश्वरेण गमितो न दृगन्तपातं ।
नोष्णोदकेन सदनं परिदह्यते वा
वातैरपि प्रजवनै रचलस्थलेन । ५५ ॥

हताशा निराशाः सन्तु ते तव पितरौ देवकी वसुदेवौ दुर्लङ्घ्ये दुस्तरे दुःखे पुत्रशोक एव लवणाम्बुनिधौ लवण समुद्रे प्रवेतां निमज्जतां । पर्य्यायोक्तिः । ५३ ॥

दग्ध्वेति । हे अधम ! मम क्रोधवह्निः कोपाग्निः तव वधूनां रुक्मिण्यादीनां प्रमोदं आनन्दं दग्ध्वा भस्मीकृत्य तव विनाशादिति भावः आरब्ध धारं धारावाहिकं यथा तथा उदितैः अश्रुभिरेव पयः प्रवाहैः जलप्रवाहैः निःशिखत्वं निर्व्वाणत्वं अधिगच्छतु प्राप्नोतु शाम्यत्विति भावः, यदि शूरोऽसि तर्हि तव रथं रथाङ्गं स्थगय निवर्त्तय । रूपकं । ५४ ॥

इत्थमिति । इत्थं पूर्व्वोक्तरीत्या कटूक्त्यां अप्रिय वचने पटुः निपुणः परं अत्यर्थं प्रलापी निरर्थकवादी एषः दन्तवक्रः गोपीश्वरेण श्रीकृष्णेन दृगन्तपातं अपाङ्ग पतन मपि न गमितः न प्रापितः तस्मिन् श्रीकृष्णस्य दृक्पातोऽपि नाभूदित्यर्थः, यतः उष्णोदकेन सदनं गृहं न परिदह्यते वा प्रजवनैः वेगगामिभिः वातैः पवनैरपि अचलः पर्व्वतः न चलेत् । अप्रस्तुतप्रशंसा । ५५

युग्मकं

मानापहो मम पृथा सुतभूति हेतुः
मादृशा न योग्य इह नैक विजेय एषः।
सम्भूय राजभिरतोऽपहरामि कन्यां
लभ्येत नात्र विजये समयोऽप्यभूदृक् । ५६ ॥
एवं विचिन्त्य धृतराष्ट्र सुतोऽनुजानां
वृन्देन सार्द्धमधिरुह्य शताङ्ग संघान्।
सिंहं शृगाल समवाय इवान् पेदे
निर्भर्त्सनस्वनविरावित दिक् मुकुन्दं । ५७ ॥

अथ युग्मेन दुर्योधनानुधावनं वर्णयति ।

मानापह इति । मम मानापहः अभिमाननाशकः पृथासुतानां युधिष्ठिरादीनां भूत्याः सम्पदः हेतुः कारणभूतः एषः श्रीकृष्णः मादृशा लक्ष्मणाया न योग्यो नानुरूपः अपिच इह जगति एकेन विजेयः जेतुं योग्यः न बहुभिर्जेतुं शक्य इत्यर्थः अतः राजभिः नृपतिभिः सम्भूय संघीभूय कन्यां लक्ष्मणां अपहरामि हरिष्यामि । अस्य श्रीकृष्णस्य विजये पराजये अभूदृक् एतादृक् समयः कालः नापि लभ्येत प्राप्येत । काव्यलिङ्गं । ५६ ॥

एवमिति । धृतराष्ट्रसुतो दुर्योधनः एवं पूर्वोक्तप्रकारं विचिन्त्य अनुजानां भ्रातृणां दुःशासनादीनां वृन्देन समूहेन सार्द्धं सह शताङ्गसंघान् रथसमूहान् अधिरुह्य आरुह्य निर्भर्त्सन स्वनैः तिरस्कारशब्दैः विराविताः प्रतिशब्दिताः दिशः येन तथोक्तः सन् शृगाल समवायः सिंहमिव मुकुन्दं श्रीकृष्णं अनुपेदे अनुजगाम । उपमा । ५७ ॥

(कलापकं)

भद्रां शठेन्द्र गुरुणा बलभद्रकेण
त्वं मे मतां कपट मन्त्रणयार्जुनेन।
आजीहरो यद धुना मधुकोटराद्वा
कर्षन् वधूं त्वदिह तत् प्रतिशोधयामि॥५८

हर्य्यक्ष शून्यबिपिने मृगवत् पुरा त्वं
गोवर्द्धनाचल शिलाभ्रमण प्रवीणः
अस्मादृशैर्बिरहिते गतभी विदर्भे
चैद्यात् प्रियां हरसिनास्ति सकाल एषः।५९

अथ चतुर्भिः दुर्योधन भर्त्सन प्रकारं वर्णयति।

भद्रामिति। हे शठेन्द्र! बञ्चक श्रेष्ठ! गुरुणा अस्त्रशिक्षकेण बलभद्रकेण बलदेवेन मे मम सम्बन्धे मतां पत्नीत्वेन सम्मतां भद्रां सुभद्रां कपटमन्त्रणया छद्म बिचारेण अर्जुनेन धनञ्जयेन प्रयोज्यकर्त्त्रा त्वं आजीहरः आहारितवान् यत् अधुना कोटरात् वृक्षनिष्कुहात् "निष्कुहः कोटरं वानेत्यमरः" मधुवा चौद्रमिव "वात्रेवार्थकः" तत् लक्तः वधूं लक्ष्मणां कर्षन् आहरन् इह जगति तत् सुभद्राहरण प्रयोजकत्वरूपापकारं प्रतिशोधयामि शोधयिष्यामि। उपमा। ५८॥

हर्य्यक्षेति। गोवर्द्धनाचलस्य शिलासु प्रस्तरेषु यानि भ्रमणानि गोचारणार्थमित्यर्थः तेषु प्रवीणः पटुः त्वं हर्य्यक्षेण सिंहेन शून्ये रहिते बिपिने मृगवत् हरिणइव गतभीः निर्भीकः सन् अस्मादृशैः अस्मद्विधैर्वीरैः विरहिते विदर्भे कुण्डिननगरे चैद्यात् शिशुपालात् प्रियां भार्य्यां रुक्मिणीं पुरा हरसि हृतवानसि। एषः सः काली रुक्मिणी हरण समयो नास्ति न भवति। उपमा। ५९॥

कर्णास्त्रवात परिसर्पि पराक्रमाग्नि
ज्वालाद्बिभेषि यदि मेऽर्पयमद्रकन्यां
त्वामन्यथा कपटनाट्य पटुं प्रमथ्नन्
तामाहरामि लघु भानुमतीमिवाजौ ।६० ॥
तिष्ठक्षणं मम कठोर विपाठ दृष्ट्या
पृष्ठे लुठिष्यसि भुवः प्रविकुण्ठ शक्तिः
एवं रटन् संधृतराष्ट्रज उग्रदंष्ट्रा
दंष्ट्राधरोष्ठपुटकोऽन्वटतिस्म कृष्णां । ६१ ॥
संवर्ण्य कर्णकटु वर्णगणा प्रपूर्णैः
कर्णौ वचोभिरधिरोपितकृष्णदोषान् ।

कर्णेति। कर्णास्य अङ्गेशास्य अस्त्रवातैः आयुधैरेव पवनैः परिसर्पिणः प्रसर्पतः पराक्रमस्यैव अग्नेः ज्वालात् ज्वालायाः बिभेषि यदि, तर्हि मद्रकन्यां लक्ष्मणां मे मह्यं अर्पय उपहर अन्यथा उक्त वैपरित्ये कपटनाट्य पटुं कपटाचारनिपुणं त्वां आजौ युद्धे प्रमथ्नन् भानुमतीं मत्प्रियामिव तां लक्ष्मणां लघु शीघ्रं आहरामि ग्रहीष्यामि। भानुमती हरणवार्त्ता महाभारते द्रष्टव्या। रूपकोपमे। ६० ॥

तिष्ठेति। हे कृष्ण ! क्षणं तिष्ठ मम कठोराणां विपाठानां बाणानां दृष्ट्या प्रविकुण्ठशक्तिः विनष्ट प्रभावः सन् भुवः पृष्ठे भूतले लुठिष्यसि निपतिष्यसि, एवं रटन् कथयन् स धृतराष्ट्रजो दुर्योधनः उग्रदंष्ट्राभिः विकटदशनैः दष्टं पीड़ितं अधरोष्ठपुटकं उत्तरोष्ठपुटो येन तथोक्तः सन् कृष्णं अन्वटतिस्म अनुजगाम। ६१ ॥

कर्णे इति। मदेन गर्व्वेण अन्धा ज्ञानशून्या बुद्धिर्यस्य सः कर्णः अङ्गाधीशः कर्णकटुभिः दुःश्राव्यैः वर्णगणैः शब्दैः

स्वासूययास ममियेष मदान्धबुद्धिः
माद्रीमिवाध्वरचरुं वलिभुग्ग्रहीतुं। ६२

( विशेषकं )

रे यादवापसद दर्शय दोर्व्बलं ते
देहात् शरैः शिर उदस्य रथाच्च माद्रीं।
दुर्योधनाय परिहृत्य ददामि मेऽग्रे
मार्जारकस्य पतितस्त्वमिवाखुरद्य। ६३॥

आभीरदारवरजारनजारजानां
हानिं सदा सहस एव पृथासुतानां

प्रपूर्णानि पूरितानि तैः वचोभिः वाग्भिः अधिरोपितान् मृषारोपितान् कृष्णस्य दोषान् स्वस्य असूयया अभ्यसूयया समं सह "असूया तु दोषारोपो गुणेष्वपीत्यमरः" संवर्णेन प्रकाश्य कृष्णदोषाविष्करणात् स्वासूयां प्रकटय्येत्यर्थः। बलिभुक् वायसः अध्वरस्य यागस्य चरुमिव माद्रीं लक्ष्मणां ग्रहीतुं इयेष च कामे। सहोक्त्युपमे। ६२॥

अथ त्रिभिः कर्णदुरुक्तं वर्णयति।

रे यादवापसदेति। रे यादवापसद! यदुकुलाधम। ते तव दोर्व्बलं वाहुवलं दर्शय प्रकटय शरैर्बाणैः ते देहात् शरीरात् शिरः मस्तकं उदस्य उत्क्षिप्य च पुनः रथात् माद्रीं लक्ष्मणां परिहृत्य आनीय दुर्योधनाय ददामि दास्यामि अद्य मार्जारकस्य विडालस्य अग्रे पुरतः आखुः मूषिक इव त्वं मेऽग्रे पतितः असि, उपमा। ६३॥

आभीरेति। हे आभीरदाराणां गोपस्त्रीणां वरजार! उत्कृष्टोपपते! जारजानां कुण्डानां येषां पृथासुतानां पाण्डवानां हानिं त्वयं सदैव न सहसे सोढ़ुं न शक्नोषि ते इमे निकटवर्त्तिनः

येषा मवन्तुत इमेऽन्तक भीमवक्त्रे
त्वां नष्ट चेष्ट मधुना च विचेष्टमानं। ६४॥
मद्विक्रमानविदतश्च विनिन्दतस्ते
सन्दर्शयतान् चिरमविस्मरणीय कृत्यान्।
सम्पादयामिहय रश्मि सुसंयमाय
सुतं समादिश लवं यदि शूर गण्यः। ६५॥
तद्वद्विदूरथमुखा अपरे विपक्षाः
तार्क्ष्यं सुधामिव वधू ममरा हरन्तं।
संख्यार्थमच्युतममुं परितोऽप्य संख्या
मार्गे तदारुरुधुरायुध दीपिताशाः। ६६॥

पाण्डवाः अधुना अन्तकस्य यमस्य भीमे भयङ्करे वक्त्रे मुखे विचेष्टमानं वर्त्तमानं नष्टचेष्टं त्वां अवन्तु रक्षन्तु। ६४॥

मद्विक्रमानिति। मम विक्रमान् पराक्रमान् अविदतः च पुनः विनिन्दतः भर्त्सयतः अगणयत इत्यर्थः ते तव सम्बन्धे तान् मद्विक्रमान् सन्दर्शय प्रकाशय चिरं चिरकालं अविस्मरणीयानि स्मरणीयानि कृत्यानि येषां तथोक्तां चिरस्मरणीय व्यापारां सम्पादयामि करिष्यामि यदि शूरेषु गण्यः गणनीयः असीति शेषः तर्हि लवं अल्पकालं हयानां रथाश्वानां रश्मि संयमनाय प्रग्रह संयमनं कर्त्तुं सूतं सारथिं समादिश आज्ञापय। ६५।

तद्वदिति। तदा तद्वत् कर्षादय इव विदूरथमुखाः विदूरथाद्याः अपरे असंख्याः विपक्षाः शत्रवः सुधां अमृतं हरन्तं तार्क्ष्यं गरुड़ं अमरा देवा इव वधूं लक्ष्मणां हरन्तं नयन्तं अमुं अच्युतं श्रीकृष्णं परितः सर्वतः मार्गे पथि आयुध दीपिताशाः अस्त्रैः कृद्धासितदिशः सन्तः सख्यार्थं युद्धाय रुरुधुः आचक्रमुः उपमा। ६६॥

कोटिच्छटामिव हरौ वहतानुरागं
स्थित्या रजोगुणमुपर्य्यरुणाङ्घ्रिणा च।
क्षीराम्भसोरिव तदाच्युत मित्र शत्रो
र्भेदः कृतो झटिति सत्व मराल यूना। ६७॥
क्रोधाट्टहास किरणैः सविधुस्तदानीं
माद्री हृदोदर तमः प्रविलोप्यकाष्ठाः।
प्रोद्दीपयन् स्वजन कैरववृन्द हर्षं
तन्वन् चतुर्भुज इयेष विधातु माजिं। ६८॥

कोटिच्छटामिति। हरौ अनुरागं श्रीकृष्ण भक्तिमित्यर्थः कोटिच्छटां चञ्चुशोभामिव वहता धारयता च रजोगुणं उपरि स्थित्या रजोगुणोर्द्ध्वावस्थानेन अरुणाङ्घ्रिणा अरुणचरणेन सत्वं सत्वगुणएव मरालयुवा हंसयुवकः तेन तदा क्षीराम्भसोः दुग्धजलयोरिव अच्युतस्य श्रीकृष्णस्य मित्रशत्रोः सपक्ष विपक्षयोः भेदः पृथक्करणं कृतः सम्पादितः ये सत्वगुण सम्पन्नास्ते कृष्णसपक्षा इतरेतद्विपक्षा अभवन्निति भावः। उत्प्रेक्षारूपकोपमाः। ६७॥

क्रोधेति। तदानीं राज्ञां परितोऽवरोधनसमये स विधुः श्रीकृष्णएव चन्द्रः क्रोधाट्टहासानां क्रोधजनित विकटहासानां किरणैः मयूखैरेव चन्द्रिकाभिः माद्र्या लक्ष्मणायाः हृदः मनसः दरतमः भयान्धकारं प्रविलोप्य नाशयित्वा काष्ठादिशः प्रोद्दीपयन् स्वजना आत्मीया एव कैरवाणि तेषां वृन्दस्य समूहस्य हर्षं आनन्दं तन्वन् कुर्व्वन् चतुर्भुजः भुजचतुष्टयवान् सन् आजिं युद्धं विधातुं इयेष ऐच्छत् तस्याबाजौ चतुर्भुज इति भागवत प्रामाण्यात्। रूपकं। ६८॥

रुद्धस्य तैरिव वृकैः क्षितिपैर्हरेर्ज्या
टङ्काररावउदितो हरिदन्तरालं ।
स्फूर्जत्प्रतिध्वनिभरैर्भृतमाशु कुर्व्वन्
कल्पान्तवज्रनिनदोऽनुमितो जनौघैः ॥ ६९

कृष्णास्यवातभरितो दरराट् तदानीं
नव्याम्बुमुक्तटचराभ्रमुकान्तकान्तः ।
गर्ज्जन्नराति करतः स्खलयन् सुहेतीः
सन्नाहयत्यतितरां सुहृदः स्म शीघ्रं । ७०॥

तालाङ्कचक्रिणि बलोऽपि च सिंहनादं
कुर्व्वन् सुमेरुशिखरे प्रतिपच्च बुद्ध्या ।

रुद्धस्येति। वृकैरीहामृगैरिव "कोक ईहा मृगो वृक इत्यमरः" तैः पूर्व्वोक्तैः क्षितिपैः राजभिः रुद्धस्य वेष्टितस्य हरेः श्रीकृष्णस्य सिंहस्येति च गम्यते उदित उत्पन्नः ज्याटङ्काररावः धनुर्गुणटङ्कारध्वनिः हरिदन्तरालं दिङ्मध्यं स्फूर्ज्जत्प्रतिध्वनिभरैः उद्गच्छत् प्रतिशब्दातिशयैः आशु शीघ्रं भृतं कुर्व्वन् जनौघैः लोकवृन्दैः कल्पान्तवज्रनिनदः क्षयकालवज्रध्वनिः अनुमितः तर्कितः आसीदिति शेषः। उत्प्रेक्षा ।६९॥

कृष्णेति। तदानीं कृष्णस्य आस्यवातैः मुखमारुतैः भरितः पूरितः अतः नव्यस्य नूतनस्य अम्बुमुचः मेघस्य तटचरः समीपस्थितः यः अभ्रमुकान्तः ऐरावतः स इव कान्तः कमनीयः दरराट् शङ्खश्रेष्ठः पाञ्चजन्यः गर्जन् शब्दं कुर्व्वन् अराति करतः शत्रूणां हस्तेभ्यः सुहेतीः उत्तमायुधानि स्खलयन् भ्रंशयन् सुहृदः मित्राणि अतितरां शीघ्रं सन्नाहयति स्म सन्नद्धान् चकार। उपमातिशयोक्ती ७० ॥

तालाङ्केति। सुमेरुशिखरे हेमाद्रिशृङ्गे स्विकां स्वकीयां क्रीडां विलोक्य हृष्टः गर्जन् ध्वनन् त्रिदशराजस्य गज इव

छायां स्विकां त्रिदशराज गजो विलोक्य
गर्ज्जन्निवारि हृदयानि ददार दूरात्। ७१॥
रोषारुणः समुषलं च हलं दधानः
यातिस्म यादव चमू मनपेक्ष्य योद्धुं।
दक्षाः प्रमार्ष्टुमपि निश्चित दिष्ट सृष्टिं
शौर्य्याश्रया न मृगयन्ति सहाय मन्यं। ७२॥
रामं तदोदित दिवाकर तुल्य भासं
दृष्ट्वा पुरोऽरितिमिराणितिरोबभूवुः।
मित्राम्बुजानि जहृषु र्यदुवीरसिंहाः
क्ष्वेडा जयध्वनिरवान् मुदिताबितेनुः। ७३॥

ऐरावत इव तालाङ्क चक्रिणा तालध्वजरथे बलः बलदेवोऽपि सिंहनादं सिंहध्वनिं कुर्व्वन् अरातीनां शत्रूणां हृदयानि दूरात् विददार विदारितवान्। उपमातिशयोक्तो। ७१॥

रोषारुण इति। रोषेण क्रोधेन अरुणः पाटलः स्वयं गौरत्वादिति भावः मुषलं हलञ्च दधानः धारयन् सः बलदेवः यादवचमूं यदुसेनां अनपेक्ष्य उपेक्ष्य योद्धुं यातिस्म ययौ हि निश्चितां निरूढां दिष्टसृष्टिं दैव सर्ज्जनां अपि प्रमार्ष्टुं लोपयितुं दक्षाः समर्थाः शौर्य्याश्रयाः पराक्रमावलम्बाः अन्यं इतरं सहायं न मृगयन्ति नान्विष्यन्ति, अर्थान्तरन्यासः। ७२॥

राममिति। तदा उदित दिवाकरेण उदयमान सूर्य्येण तुल्यभासं समद्युतिं रामं बलदेवं दृष्ट्वा पुरः अग्रे अरितिमिराणि शत्रवोऽन्धकारा इव तिरो बभूवुः अन्तर्हितानि बभूवुःमित्राम्बुजानि सुहृदः पद्मानीव जहृषुः हृष्टानि बभूवुः यदुवीराः सात्यक्यादयः सिंहा इव मुदिताः सन्तः क्ष्वेडाः

प्रोद्यझणात्क्वणनदीप्त सुवर्ण वर्म्मा
प्रत्यर्थि सार्थ बहु सार्थ महोग्र कर्म्मा ।
श्रीराम भीष्म मुखवीर समान धर्म्मा
प्रायाद्बलं प्रबलयन् कृतवर्म्म नामा । ७४॥

स्पष्टं स्फुरन्त मय मुत्तर मोष्ठमिष्टा
नीकस्तदा शमयितुं किमु तत्स्थलोम्नां ।
राजिं स्पृशन् विकट घूर्णित रक्त नेत्रो
हुंकार पूर्व मरिराजक माबभाषे । ७५ ॥

सिंहनादाः खेड़ा तु सिंहनादः स्यादित्यमरः जयध्वनयः जयशब्दाः रवा इव तान् बतेनुः विस्तारयामासुः, उपमा । ७३॥

अथ यदुवीरागमनं बर्णयति ।

प्रोद्यदिति । प्रोद्यन्ति प्रकटितानि झणात्क्वणनानि झणत्कारशब्दाः यस्य तथोक्तं दीप्तं सुवर्णवर्म्म स्वर्ण कवचो यस्य सः प्रत्यर्थिसार्थेषु शत्रु समूहेषु बहुश्नेकशः सार्थं सफलं महोग्रं अति भीषणं कर्म्म कृत्यं यस्य तथाभूतः श्रीरामः परशुरामः भीष्मः गङ्गापुत्रश्च मुखं येषां तैः वीरैः समान धर्म्मा साधर्म्यवान् कृतवर्मा इति नाम यस्य सः तदाख्य यादव विशेषः बलं बलदेवं स्वसैन्यञ्च प्रबलयन् प्रकृष्टबलं कुर्व्वन् प्रायात् युद्धार्थमगमदित्यर्थः । ७४ ॥

स्पष्टमिति । तदाइष्टानीकः युद्धाभिलाषी अयं कृतवर्म्मा स्पष्टं व्यक्तं स्फुरन्तं क्रोधेन कम्पमानं उत्तरं ओष्टं शमयितुं किमु सान्त्वयितुमिव तत्स्थानां तत्र उत्तरोष्ठोपरि स्थितानां लोम्नां रोम्णाः राजिं समूहं स्पृशन् परामृशन् विकटघूर्णिते रक्ते नेत्रे यस्य तथोक्तः सन् अरिराजकं शत्रुराजसमूहं हुङ्कार पूर्वं आबभाषे वक्ष्यमाण मकथयत् । उत्प्रेक्षा स्वभावोक्ती ।७५॥

कलापकं ।

रे क्षत्रिया ननु मदान्धतरा भवन्तः
पश्यन्ति यद्यदुषु नाम न कञ्चवीरं ।
एकः सहस्रमपि रोद्धु मलं शशुनों
कृष्णादयः किमुतमादृश शूरमुख्याः । ७६ ॥
मद्रेश्वरेण पणलक्ष्य विवेध तुष्ट्या
दत्तां समक्षमखिलस्य सुरक्तचित्तां ।
यत्कन्यकां फणिफणा मणिवत् ग्रहीतुं
दुराग्रहाः स्थ चपलं फलमाप्नुतास्त्र । ७७ ॥

अथ चतुर्भिः कृतवर्मोक्तिं वर्णयति ।

रे क्षत्रिया इति । रे क्षत्रियाः ! राजानः ! भवन्तः मदान्धतराः अतिदर्पिताः ननु, यद्येतोः यदुषु यादवेषु कञ्च कमपि वीरं न पश्यन्ति नाम, किन्तु नः अस्माकं मध्ये एकः शिशुः वालः शाम्वादिः सहस्रं वीराणामिति शेषः अपि रोद्धुं आक्रमितुं अलं समर्थः । कृष्णादयः श्रीकृष्णप्रमुखा मादृशाः अस्मत्सदृशा वीरमुख्याः किमुत रोद्धुं समर्था इति किमु वक्तव्यं । अर्थापत्तिः । ७६ ॥

मद्रेश्वरेणेति । रे क्षत्रियाः ! मद्रेश्वरेण वृहत्सेनेन पणलक्ष्यस्य पणभूतशरव्यस्य विवेधेन वेधनेन या तुष्टिः सन्तोषः तया अखिलस्य समक्षं निखिलजनानामग्रे दत्तां पुनः सुरक्तचित्तां अनुरागिणीं कन्यकां लक्ष्मणां फणिफणामणिवत् सर्पफणास्थरत्नामिव ग्रहीतुं यत् दुराग्रहाः दुराग्रहिणः स्थ भवथ यूयमिति शेषः । अस्य दुराग्रहस्य फलं चपलं शीघ्रं आप्नुत लमध्वं । उपमा । ७७ ॥

लज्जा न वो विफल लक्ष्य विबेधयत्ना
यन्नोपलाय्य विषया न पथैर्निजानां
कन्यार्थमत्र परिधावथ निर्विशङ्कं
नूनं भविष्यथवताद्य कथा वशिष्टाः। ७८॥
रुक्मि स्वसुः परिहृतौ वरणे च भद्रा-
देव्याश्च सप्त वृषवन्ध पणीकृतायाः।
सत्याभिधान युवते रुपयामकाले
दृष्टन्नु दुष्टहृदया बहुशो बलं वः। ७९॥
गर्जन्निदं सगजयूथमिव द्विपारि
र्विद्वेषि चक्रमभितः क्रमणं चकार।

लज्जेति। रे क्षत्रियाः। वः युष्माकं लज्जा अपत्रपा नास्ति यत् हेतोः विफलो व्यर्थः लक्ष्य विवेध यत्नः शरव्यवेधप्रयासो येषान्ते यूयं अपथैर मार्गैः निजानां स्वेषां विषयान् देशान् नो पलाय्य नगत्वा अत्र कन्यार्थं कन्यका हरणार्थं निर्विशङ्कं परिधावथ उपसर्पथ, अद्य कथा वशिष्टाः कथामात्र शेषा भविष्यथ नूनं बत इति खेदे। ७८॥

रुक्मिस्वसुरिति। हे दुष्टहृदयाः रुक्मिस्वसुः रुक्मिण्या परिहृतौ हरणे तत्काल इत्यर्थः सप्तवृषाणां सप्तसंख्यक वृष-भाणां वन्धस्य बन्धनस्य पणीकृतायाः मूल्यत्वेन निरूपितायाः भद्रादेव्याश्च वरणे स्वयम्वरकाले सत्याभिधान युवतेः सत्या-नाम्न्या महिष्याः उपयामकाले विवाहसमयेऽपि बहुशः बहुवारं वः युष्माकं बलं सामर्थ्यं दृष्टं अनुभूतं नु यूयं बहुवारं पराभूता इत्यर्थः। ७९॥

गर्जन्निति। सः कृतवर्म्मा इदं पूर्व्वोक्तं गर्जन् ध्वनन् कथयन्नित्यर्थः द्विपारिः सिंहः गजयूथमिव विद्वेषिचक्रं

धुन्वन्नथो धनुररि क्षयकाल मेघो
निर्घोष निःस्वन उवाच शिनि प्रवीरः । ८० ॥

( विशेषकं )

धूर्त्ताः प्रधावथ कथं कुपथे निरर्थं
स्वापाय एव फलमस्य नचान्यदस्ति ।
शूरैः पुनः पुनरतीव पराजितानां
नास्माभिरुन्मद तयापगतं व ईषत् । ८१ ॥

ज्वाला कराल मनलं किमु धर्त्तु मिच्छा
वद्धु प्रभञ्जन मरे विषमा समीहा ।
पाथः पटेन परिनेतु मथो मनीषा
या योषितोऽच्युतरथाद्भवतां जिघृक्षा । ८२ ॥

शत्रु सैन्यं अभितः क्रमणं गमनं चकार कृतवान् । उपमा । अथो अरीणां शत्रूणां क्षयकाल मेघः शिनि प्रवीरः सात्यकिः धनुः धुन्वन् कम्पयन् निर्घोषनिःस्वनं गर्जित समस्वनं यथा तथा उवाच वक्ष्यमाणं कथयामास । रूपकं ।८० ।

अथ त्रिभिः सात्यकिवचनं निर्वाचयति ।

धूर्त्ता इति । हे धूर्त्ताः ! यूयं कुपथे अमार्गे निरर्थं व्यर्थं कथं प्रधावथ धावमाना भवथ, अस्य अमार्ग धावनस्य स्वापायः स्वेषां विनाशएव फलं, च अन्यन्नास्ति, शूरैरस्माभिः पुनः पुनः वारम्वारं अतीव अत्यर्थं पराजितानां वः युष्माकं उन्मदतया उन्मत्तत्वेन ईषत् स्वल्पमपि नापगतं इत्याश्चर्य्य-मितिशेषः । ८१ ॥

ज्वालेति । अरे क्षत्रियाः भवतां युष्माकं कर्त्तॄणां अच्युतरथात् श्रीकृष्णस्यन्दनात् योषितः, स्त्रिया लक्ष्मणायाः कर्म्मभूतायाः या जिघृक्षा सेतिशेषः ज्वालाकरालं शिखाभीषणां अनलं अग्निं धर्त्तुं इच्छा किं, प्रभञ्जनं वायुं बद्धुं विषमा

युष्माभिरद्यपुरमस्तु यमस्य पूर्णं
व्यग्रोभवद्गणन कर्मणि चित्रगुप्तः ।
संजायतां फलमवाप्नुत दुग्रहस्य
प्रोच्येदमेष रिपु सागर मन्दरोऽगात् ।८३ ॥
आस्फोटय यादव भटाः सकलाः प्रवेष्टान्
दंष्ट्रा विदष्ट चलदोष्ठ पुटाः स्फुटाभाः ।
वक्त्रारि कालभुजगोभृकुटी मुखेषु
क्षिप्तास्त्र सञ्चलन कन्मरुतो व्यधावन् । ८४ ॥

असङ्गता सस्रोद्वा चेष्टा अथ पाथः जलं पटेन वस्त्रेण परिणेतुं गृहीतुं स्नोप्ता वुद्धिः भवतीति शेषः । मालानिदर्शना । ८२ ॥

युष्माभिरिति । अद्य युष्माभिः यमस्य पुरं नगरं पूर्णं अस्तु, भवतां गणान कर्म्मणि गणानाव्यापारे चित्रगुप्तः व्यग्रः उद्विग्नः संजायतां भवतु, दुग्रहस्य दुराग्रहस्य दुष्टग्रहस्य च फलं अवाप्नुत लभध्वं इदं एतत् प्रोच्य उक्त्वा रिपुसागरस्य शत्रुसमुद्रस्य मन्दरः मन्दररूपः मथनकारी एषः सात्यकिः अगात् युद्धार्थमगमत् । पर्य्यायोक्तिरूपके । ८३ ॥

आस्फोटयेति । स्फुटाभाः व्यक्तप्रभाः सकलाः सर्वे यादवभटाः यदुवीराः प्रवेष्टान् बाहून् 'भुजबाहुप्रवेष्टोदोरित्यमरः" आस्फोटय दंष्ट्राभिः दशनैः विदष्टाः पीड़िताः चलन्तः कम्पमानाः ओष्ठपुटाः येषां तथोक्ताः सन्तः अरीणां शत्रूणां कालभुजङ्गीः कालसर्पिणीरूपाः भ्रूकुटीः भ्रूभङ्गान् मुखेषु वदनेषु वक्त्रा कृत्वा क्षिपुः शत्रव एव अस्त्राणि तेषां सञ्चलनं कम्पनं कुर्वन्तीति तथोक्ताः मरुतः वायुस्वरूपाः सन्तः व्यधावन् युद्धार्थमगमन् । रूपकं । ८४ ॥

वायोरिव प्रचलितस्य युधिष्ठिरस्य
द्राक्‌प्रेरणोद्धतरया अथ भीम मुख्याः।
चत्वार और्वविकटाः प्रलयाम्बयोवा
तत्काल मायुध धरारभसान्वधावन्। ८५॥

सिंहध्वनिं यमतिभीम मधात्सभीमो
ब्रह्माण्डभाण्ड परिपिण्डित चण्डभावं।
सर्वारवान् सपरिभूय विजृम्भमाणा
स्तैपिष्टपान् पिचकार विसृष्ट चेष्टान्। ८६॥

आस्फोटय सव्य मथ सप्रकटं प्रवेष्टं
प्रोत्प्लुत्य चक्रिण मधिष्ठित एववीरः।

अथ प्रचलितस्य चलचित्तस्य प्रवाहितस्य च युधिष्ठिरस्य वायोः पवनस्येव द्राक्‌प्रेरणेन झटिति प्रचोदनया उद्धतरयाः उद्धतवेगाः आयुधधराः शस्त्रधारिणः भीममुख्याः भीमसेनाद्याः चत्वारः पाण्डवाः और्वेण वाडवाग्निना विकटा भयङ्करा प्रलयाम्बयोवा चयकाल समुद्रा इव वाडवाग्निनार्थकः तत्कालं रभसा वेगेन अन्वधावन्। उपमा। ८५।

सिंहध्वनिमिति। सः भीमः भीमसेनः ब्रह्माण्डभाण्डे परिपिण्डितः परिपूर्णः चण्डभावः प्रचण्डत्वं यस्य तथोक्तं अतिभीमं अतिभयङ्करं यं सिंहध्वनिं अधात् अकरोत् सः सिंहध्वनिः सर्वारवान् सकलान् शब्दान् परिभूय तिरस्कृत्य विजृम्भमाणः प्रकटितः सन् त्रैपिष्टपान् स्वर्गिणोऽपि विसृष्ट चेष्टान् विगतसंज्ञान् चकार कृतवान्। अतिशयोक्तिः। ८६

आस्फोट्येति। अथ वीरः सः भीमः सव्यं प्रवेष्टं वामबाहुं प्रकटं यथा तथा आस्फोटय आस्फाल्य प्रोत्प्लुत्य प्रोत्पत्य एव

वाङ्मार्गणै रपजहार सुयोधनादे
स्तेजांसि कर्ण सहितस्य रिपूच्चयस्य। ८७॥

युग्मकं

रे सूत नन्दन सहाय महान्ध पुत्र
सभ्रातृकस्य तव गर्व मया करोमि।
संशोधयामि कुमते जतु गेहदाह
क्ष्वेड़ प्रदापन मुखापकृती स्तथाव। ८८॥
या शिक्षिता बलवतो बलभद्र वीरात्
तां पूर्ण मात्र मभिदर्शय गदास्त्र विद्यां।

चक्रिणं रथं अधिष्ठितः अधिरूढ़ः सन् सुयोधनादेः कर्ण सहितस्य रिपूच्चयस्य शत्रुसमूहस्य तेजांसि प्रभावान् वाङ्मार्गणैः वाग्भिरेवशरैः अपजहार अपहृतवान् परुषवचनैः शत्रूणां तेजांसि मन्दीचकारेत्यर्थः। स्वभावोक्ति परिणामौ। ८७॥

रे सूतनन्दन सहायेति। रे सूतनन्दनसहाय! सारथि पुत्राश्रय! महान्धपुत्र! जन्मान्धस्य नन्दन अद्य सभ्रातृकस्य भ्रातृसहितस्य तवगर्वं अपाकरोमि अपसारयिष्यामि, तथा कुमतेः कुबुद्धेः तव जतुगेहदाहः जतुगृहदहनं च क्ष्वेड़प्रदापन विषप्रयोगश्च मुखं यासां ताः अपकृतीः अपकारान् संशोधयामि प्रतिशोधयिष्यामि। ८८।

येति। बलवतः बलिष्ठात् बलभद्र वीरात् बलदेवात् या गदास्त्र विद्या शिक्षिता अभ्यस्ता अद्य तां गदास्त्रविद्यां पूर्णपात्रं सम्पूर्णकल्पं अभिदर्श्य प्रकाश्य अखिलान् समग्रान् नरेन्द्रान् राज्ञः कृतान्तस्य यमस्य कवलान् ग्रासान् कुर्वन् नाशयन्नित्यर्थः गुरुदक्षिणायाः निष्कृतिं उद्धारं अलं लप्स्ये

कुर्वन् कृतान्त कवला नखिलान्नरेन्द्रान्
लप्स्येऽद्यनिष्कृतिमलं गुरु दक्षिणायाः। ८९॥
इत्यादि वाक्व्ययहृतान्य निनादराजे
संस्तम्भितं धरणि पाल कुलं निनाय।
सूतो रथं प्रथमतोऽस्य दरं स्वमुच्चैः
साधुः करोत्यनुदितोऽपि विभोरभीष्टं। ९०॥
अत्रान्तरे प्लवगकेतु शताङ्ग संस्थो
गाण्डीव मण्डित समुद्यत बाहुदण्डः।
संस्तब्ध कर्ण दिग्गिभालि गृहीत नादं
दध्मौ धनञ्जय उरु प्रभ देवदत्तं। ९१॥

प्राप्स्यामि, रामानुजस्य श्रीकृष्णस्य साहाय्यार्थं राज्ञोनाशेन गुरो रामस्य गदाशिक्षा दक्षिणातः निर्मुक्तो भविष्यामीत्यर्थः। ८९।

इत्यादीति। इत्यादीनां पूर्व्वोक्तानां वाचां व्ययेन हृता अपसारिता अन्येषां निनादानां राजिः येन तथोक्तस्यस्वं स्वकीयं दरं शङ्ख उच्चैः उच्चस्वरं प्रथमतः पूरयतोऽस्य भीमस्य सूतः सारथिः रथं भीमाधिष्ठित स्यन्दनं संस्तम्भितं भीमसेन वाचा स्तब्धं धरणीपालकुलं राजसमूहं निनाय प्रापयामास। साधुः सज्जनः अनुदितः अनुक्तोऽपि विभोः स्वामिनः अभीष्टं अभिलषितं करोति सम्पादयति। अर्थान्तरन्यासः। ९०॥

अत्रेति। अत्रान्तरे प्लवग केतु शताङ्ग संस्थः कपिकेतन रथस्थितः गाण्डीवेन स्वधनुषा मण्डितौ भूषितौ समुद्यतौ उद्युक्तौ बाहुदण्डौ यस्य तथोक्तः धनञ्जयोऽर्जुनः संस्तब्ध कर्णानां विस्मयेन निभृत कर्णानां दिग्गिभानां दिग्गजानां आल्या समूहेन गृहीतः श्रुतः नादोध्वनिर्यस्य तथोक्तं उरु प्रभं प्रकृष्ट कान्तिं देवदत्तं तदाख्यं शङ्खं दध्मौ पूरयामास। स्वभावोक्त्यतिशयोक्ती। ९१॥

सख्युः समीक्ष्य कृतमाक्रमणं विपक्षै
रुच्चैर्जगाद मरिपूनपि धीरचेताः।
ईषद्विहस्य सहना स्वरुजं महंते
नैवापमानमपि मित्र जनस्य किञ्चित्। ६२॥

चान्द्रीं कलां करतलैरपिधर्तु कामाः
दुर्मार्ग धावितधियो यदि जीविताशा।
युष्माक मस्ति विरता भवताच युष्मान्
भस्मी करिष्यति नचेन्मम बाणवह्निः। ६३॥

द्रोणात् कृपाच्च हरितोऽधिगतास्त्र विद्या
मद्य प्रदर्श्य भवतां ननु खाण्डवीयां।

सख्युरिति। धीरचेताः धैर्य्यवानपि सः अर्जुनः सख्युः मित्रस्य श्रीकृष्णस्य विपक्षैः शत्रुभिः कृतं आक्रमणं रोधं समीक्ष्य दृष्ट्वा रिपून् शत्रून् उच्चैर्जगाद। धीरस्य ईदृगौद्धत्यं समर्थयति। ईषदिति। हि सहनाः सहिष्णवः ईषद्विहस्य ईषद्धासं कृत्वा स्वरुजं स्वपीडां महन्ते चाम्यन्ति। मित्रजनस्य किञ्चिदपि अपमानं न सहन्त एव। अर्थान्तरन्यासः। ६२॥

अथ चतुर्भिरर्जुनोक्तिं वर्णयति।

चान्द्रीमिति। ये चान्द्रीं चन्द्र सम्बन्धिनीं कलां करतलैः अपि धर्तुकामाः दुर्मार्गे अमार्गे धाविता धीः येषां तथोक्ताः! युष्माकं जीविताशा जीवनेच्छा अस्ति यदि, तर्हि अत्र विरता निवृत्ता भवत नचेत् अन्यथा ममबाण एव वह्निः युष्मान् भस्मी करिष्यति। रूपकं॥ ६३॥

द्रोणादिति। द्रोणात् भारद्वाजात् कृपात् कृपाचार्य्यात् हरितः श्रीकृष्णात् अधिगतां शिक्षितां अस्त्रविद्यां अद्य प्रदर्श्य दर्शयित्वा भवतां युष्माकं खाण्डवीयां खाण्डववनसम्बन्धिनीं

कृत्वा दशां यदुपते रुपकार पारं
प्राप्स्यामि हारित वतः सुदतीं सुभद्रां। ९४
साहाय्यतो वन मदाहय मिन्द्रजेता
यस्यैव खाण्डवमहं प्रविनाश्य युष्मान्।
तस्याधुनोपकृति मत्र करोमि भूपा
नोसन्त्यजन्ति सुहृदोह्युपकार कालं। ९५॥
तिष्ठन्तु सर्वसुहृदः परिदर्शनार्थं
मद्विक्रमस्य सकलानहमेकएव।
नेष्ये रिपून् प्रलय मत्र गृहीत शस्त्रो
मृत्युञ्जयो भुवनजातमिव क्षणार्द्धं। ९६॥

दशां अवस्थां भस्मीकरणरूपां कृत्वा विधाय सुदतीं सुन्दरीं सुभद्रां स्वभगिनीं हारितवतः दापितवतः यदुपतेः श्रीकृष्णस्य उपकार पारं उपकार परिशोधं प्राप्स्यामि। निदर्शना काव्यलिङ्गे। ९४॥

साहाय्यत इति। हे भूपाः। राजानः। यस्य श्रीकृष्णस्य साहाय्यतः सहायताया एव हेतोः इन्द्रजेता शक्रविजयी अहं खाण्डवं वनं अदाहयं। अधुना युष्मान् प्रविनाश्य अत्र तस्य श्रीकृष्णस्य उपकृतिं उपकारं करोमि सम्पादयिष्यामि। हि सुहृदः मित्राणि उपकारस्य कालं समयं नो संत्यजन्ति शीघ्रमुप कुर्व्वन्तीतिभावः। अर्थान्तर न्यासः। ९५॥

तिष्ठन्त्विति। सर्व्वे सुहृदः सर्व्वाणि मित्राणि मद्विक्रमस्य ममपराक्रमस्य परिदर्शनार्थं सम्यगवलोकयितुं तिष्ठन्तु। एकः एव अहं गृहीत शस्त्रः सन् मृत्युञ्जयो रुद्रः भुवनजातं लोकसमूहमिव अत्र सकलान् रिपून् शत्रून् क्षणार्द्धं अर्द्धक्षणकालं प्रलयं संहारं नेष्ये प्रापयिष्यामि। उपमा। ९६॥

एवं स्वसार सदृशं सरुषा विभाव्य
गाण्डीव चापमथ मध्यम पाण्डु पुत्रः
टंकृत्य हस्ततलतो द्विषतां च हेती
धैर्य्यैः समं हृदयतोऽस्खलयत् प्रवीरः।६७

अन्यै स्तदा सनकुलैः सहदेव मुख्यै
र्वृष्णि प्रियै भटगणै र्गहना समस्तैः।
सेना समुल्लसतरा प्रलयोग्रवातै
र्यादोभिरब्धि लहरीव विभीषणागात्।६८

तत्रायुधद्युति तड़ित् कपिशो विमर्द्दे
धूलिघनः समवरुद्ध खरांशु बिम्बं।

एवमिति। प्रवीरः सः मध्यम पाण्डु पुत्रोऽर्जुनः सुषा क्रोधेन एवं पूर्व्वोक्तं स्वसार सदृशं निज बलानुरूपं विभाव्य कथयित्वा अथ गाण्डीव चापं स्वं धनुः टंकृत्य द्विषतां शत्रूणां हस्ततलतः करतलेभ्यः हेतीः आयुधानि हृदयतः मनोभ्यः धैर्य्यैः धृतिभिः समं सह अस्खलयत् अभ्रंशयत्। सहोक्तिरति शयोक्ती।६७॥

अन्यैरिति। तदा सनकुलैः नकुल सहितैः सहदेवः मुख्यो येषु तैः वृष्णिप्रियैः यादव सुहृद्भिः समस्तैः भटगणैः वीरसमूहैः गहना सङ्कटा सेना प्रलयोग्रवातैः संहारकालीन प्रचण्ड वायुभिः यादोभिर्जलजन्तुभिश्च विभीषणा भयङ्करी अब्धि लहरी समुद्रतरङ्ग इव समुल्लसतरा अति प्रकटिता सती अगात् युद्धार्थमगमत्। उपमा॥६८॥

तत्रेति। तत्र विमर्द्दे सेना संघर्षे आयुधद्युतिभिः अस्त्र कान्तिभिरेव तड़िद्भिः विद्युद्भिः कपिशः पिङ्गलः धूलिघनः रज एव मेघः खरांशु बिम्बं सूर्य्यमण्डलं समवरुध्य

प्रादुर्बभूव शरवृष्टिरकारि वीरै
स्तप्ताबभूवुरधिकं प्रहृता विचित्रं । ९९ ॥
मर्य्यादया रहित मादितनं समीकं
शस्त्राहत क्षतज वर्षणा लुप्तमूलं ।
कृत्वेभकर्ण चलनोद्ध गतं रजश्च,
पश्चात् क्रमात् सदृश युग्म गतं बभूव ।१००
पत्तिः पदाति मथ हस्तिगतं गजस्थः
सादी तुरङ्ग गतमात्त रथो रथेशं ।

आच्छाद्य प्रादुर्बभूव जातः । वीरैः शराणां वृष्टिर्वर्षणं अकारि कृता । प्रहृताः ताड़िताः अधिकं तप्ताः संतप्ता बभूवुः । इति विचित्रं धूलिघनस्योदयः वीराणां वर्षणं वर्षणेऽपि तप्तत्वमित्य सङ्गतिः रूपकञ्च । ९९ ॥

मर्य्यादयेति । मर्य्यादया स्थित्या रहितं निर्मर्य्यादं आदितनं आदिभवं समीकं युद्धं कर्त्तृ, ' समीकं साम्परायक मिति युद्ध पर्य्यायेऽमरः ” शस्त्रैः आहतानां ताड़ितानां क्षतजवर्षणेन रक्तवृष्ट्या लुप्तमूलं छिन्नमूलदेशं रजः धूलिं इभानां हस्तिनां कर्णचलनैः उर्द्ध गतं उत्क्षिप्तं कृत्वा पश्चात् रजोनिवृत्त्यनन्तरं क्रमात् सदृशानि अनुरूपाणि यानि युग्मानि रथ्यादि युगलानि तानि गतं श्रितं बभूव प्रथमतो रजोवरणात् निर्मर्य्यादं युद्धं धूलि निवृत्त्या यथारीत्यभूदित्यर्थः ।१०० ॥

पत्तिरिति । अथ तदानीं अत्र धूलिपटले ध्वस्ते निवृत्ते सति पत्तिः पादचारी पदातिं अभ्यपतत् अभिजगाम । गजस्थः हस्त्यारोही हस्तिगतं अभ्यपतत्, सादी अश्वारोही तुरङ्गगतं अश्वारूढं अभ्यपतत् । “ सादिनो तुरगारूढा इत्यमरः ” आत्तरथः रथी रथेशं रथिनं अभ्यपतत् , हि सन्तः सज्जनाः

ध्वस्तेऽत्र धूलिपटलेऽस्य पतत्तदानीं
तुल्ये बलप्रकटनं प्रगृणन्ति सन्तः । १०१ ॥
संयद्दिदृक्षु दिविजाकुलितेऽन्तरीक्षे
हर्षाश्रुपूर्ण नयनः करजान् विघृष्य ।
नोनारदः किमुननर्त्त चिरस्य वाञ्छा-
पूर्तौ नहृष्यति जनः क इह प्रकामं ।१०२॥
सिंहः प्रतिद्विपमिवानुपदं व्रजन्तं
मध्येऽध्वनोऽपि करिणः करिणी युतस्य ।
योद्धुं प्रलम्ब दमनो मूषलायुधाढ्यः
कृष्णानुधावि मगधेन्द्र मलं रुरोध । १०३ ॥

तुल्ये सदृशे वीरे विषये बल प्रकटनं सामर्थ्य प्रकाशं प्रगृणन्ति प्रशंसन्ति। अर्थान्तरन्यासः। १०१ ॥

संयदिति। नारदो देवर्षिः संयद्दिदृक्षुभिः युद्धदर्शनोत्सुकैः दिविजैः स्वर्गीयैः आकुलिते व्याप्ते अन्तरिक्षे आकाशे हर्षाश्रु-पूर्णनयनः सन् करजान् नखान् विघृष्य घर्षयित्वा कलह दर्शन जनिता नन्दे नेत्यर्थः नो ननर्त्त किमु नर्त्तितवानेव, इह चिरस्य वाञ्छापूर्त्तौ मनोरथ सिद्धौ सत्यां कः जनः नहृष्यति। सर्वएव नन्दन्तीत्यर्थः, अर्थान्तर न्यासः। १०२ ॥

सिंह इति। करिणी युतस्य करेणु सहितस्य करिणः हस्तिनः अनुपदं पश्चात् व्रजन्तं आक्रमणाय धावन्तं प्रति-द्वीपं प्रतिपक्षगजं अध्वनोमध्ये अर्द्धमार्गे सिंह इव मुषलायु-धाढ्यः मुषलधारी प्रलम्बदमनः बलदेवः कृष्णानुधाविनं श्रीकृष्ण मनु धावन्तं मगधेन्द्रं जरासन्धं योद्धुं युद्धार्थं अलं अत्यर्थं रुरोध अरुणत्, उपमा। १०३ ॥

पश्यन्बलं मगधपोमुषल प्रहारं
स्मृत्वानुभूत मपिलाङ्गल कर्षणं च।
ईषन् मृदुप्रभ उवाह रुषार्त्ति तेज
स्तेजस्विनो निकृति संस्मरणै ज्वलन्ति।१०४
तौ यादवेन्द्र मगधेन्द्र महाप्रवीरौ
ज्ञात्वाकृत प्रतिकृते प्रहितोग्र शस्त्रैः।
संच्छादितौ च समुदीरित नाम वर्णै
युद्धे परस्पर मलक्षयता मदृश्यौ। १०५॥
भीत्येव हेति तति पातजया जयश्री
राच्छादितेऽस्त्र निवहैः समर प्रदेशे।

पश्यन्निति। मगधपः जरासन्धः बलं बलदेवं पश्यन्नवलोकयन् अनुभूतं मथुरायुद्धादौ ज्ञातं मुषल प्रहारं लाङ्गलेन कर्षणञ्च स्मृत्वा ईषदल्पं मृदुप्रभः सन् पुनः रुषा क्रोधेन अतितेजः अधिकं पराक्रमं उवाह धारयामास यतः तेजस्विनः तेजीयांसः निकृतीनां पराभवानां संस्मरणैः ज्वलन्ति प्रज्वलिता भवन्ति। अर्थान्तरन्यासः। १०४॥

ताविति। तौ पूर्व्वोक्तौ यादवेन्द्रः बलदेवः मगधेन्द्रो जरासन्धश्च तावेव महाप्रवीरौ कृत प्रतिकृते प्रहार प्रतिप्रहारौ ज्ञात्वा प्रहितैः प्रेरितैः उग्रैः भयङ्करै शस्त्रैरायुधैः संच्छादितौ अतः अदृश्यौ सन्तौच पुनः समुदीरितैः उच्चारितैः नामवर्णैः नामाक्षरैः युद्धे परस्परं अन्योऽन्यं अलक्षयतां लक्षितवन्तौ। अतिशयोक्तिः। १०५॥

भीत्येति। अस्त्रनिवहैः आयुधसमूहैः आच्छादिते समरप्रदेशे युद्धभूमौ जयश्रीः विजयलक्ष्मीः हेतिततीनां आयुधसमूहानां पातात् पतनात् जायत इति यथोक्तया भीत्या

मार्गं तयोर्न परिहृत्य विषस्म चित्ता
नालं शशाक सहसैकतरं वरीतुं । १०६ ॥
योगीयथाच्युतगतिं समनु प्रयातो
रोषेण दीप्त वपुषा रिपुणार्द्धमार्गे ।
दुर्य्योधनो धृत गदेन सुभीम कर्म्मा
भीमेन विघ्नित कृति र्युयुधेसतेन । १०७ ॥
कर्णार्जुनौ भट वृषौ शरशृङ्गघातै
रन्योन्य माहव दवर्त्तयतां प्रहृष्टौ ।

भयेनैव विषस्मचित्ता सती मार्गं न परिहृत्य अदृष्ट्वा सहसा तयोः बल मागधयोः एकतरं वरीतुं स्वीकर्त्तुं अलं न शशाक न समर्था बभूव । उत्प्रेक्षा । तयोः कस्यापि विजयो न बभूवेत्यर्थः । १०६ ॥

योगीति । योगीयथा योगीव अच्युतगतिं श्रीकृष्णमार्गं अन्यत्र अविनाशिनीमवस्थां मोक्षमित्यर्थः समनुप्रयातः अनुधावन् सुभीमकर्म्मा स दुर्योधनः अर्द्धमार्गे मार्गमध्ये रोषेण क्रोधेन दीप्तवपुषा धृतगदेन गदाधारिणा रिपुणा शत्रुणा भीमेन भीमसेनेन विघ्निता सञ्जातविघ्ना कृतिः कार्य्यं श्रीकृष्णानुधावनरूपं यस्य तथोक्तः सन् तेन भीमेन सह युयुधे युद्धञ्चकार । उपमा । योगिपक्षे धृतगदेन रोगञ्जनयता भीमेन भयङ्करेण दीप्तवपुषा उद्दीप्त सरूपेण रिपुणा शत्रुभूतेन रोषेण क्रोधेन इत्येवमर्थः करणीयः । १०७ ॥

कर्णार्जुनाविति । भटवृषौ वीरश्रेष्ठौ एवम्भूतौ कर्णार्जुनौ प्रहृष्टौ सन्तौ अन्योऽन्य परस्परं शरशृङ्गघातैः बाण विषाण-प्रहारैः आहवं युद्धं अवर्त्तयतां अकुरुतां जयार्थिनौः विजयाभिलाषिणोः तयोः कर्णार्जुनयोः कश्चिदेकोऽपि

कश्चित्तयोर्न विषसाद जयार्थिनोस्तु
तुल्यानुराग मुदपश्य दुभौ जयश्रीः । १०८
शैनेय शाल्व समरः कर पल्लवेभ्यः
पुष्पोत्करं दिविषदां स्खलयन् व्यराजत् ।
तं सत्यकस्य तनयो बहुमाय माशु
मायां सुसत्यमिव जेतु मभूत् समर्थः । १०९॥
कारूष भूप मरुणत् कृतवर्म्म वीरो
द्राक् सान्निपातिकगदं च बिषायनं वा ।
पुण्येन पापमिव संरुरुधे तदानीं
दुःशासनो यदुसुतेन गदाभिधेन । ११० ॥

न विषषाद विषन्नो न बभूव तु पुनः जयश्रीः विजयलक्ष्मीः उभौ द्वौ कर्णार्जुनौ तुल्यानुरागं समस्नेहं उदपश्यत् अवालोकयत् तयोः समबलं युद्धमभूदित्यर्थः । रूपकं । १०८ ॥

शैनेय इति । शैनेय शाल्वयोः सात्यकि सौभाधिपयोः समरः रणः दिविषदां देवानां करपल्लवेभ्यः पुष्पोत्करं कुसुम समूहं स्खलयन् भ्रंशयन् विस्मयादिति भावः व्यराजत् अशोभत सुसत्यं मायां कपटमिव सत्यकस्य तनयः सात्यकिः बहुमायं मायायुद्ध विशारदं तं शाल्वं आशु जेतुं समर्थः अभूत् । अतिशयोक्त्युपमे । १०९ ॥

कारुषभूपमिति । किन्त्वेतिचार्थः कृतवर्म्मवीरः विषायनं औषधविशेषः सान्निपातिकगदं वा सन्निपात रोगमिव कारूषभूपं दन्तवक्रं द्राक् झटिति अरुणत् । तदानीं पुण्येन सुकृतेन पापं दुष्कृतमिव गदाभिधेन गदनामकेन यदुसुतेन यादवेन दुःशासनः संरुरुधे संरुद्धः । उपमे ॥ ११० ॥

युद्धं वृहद्दल कलिङ्ग महीशयोर्यत्
शार्दूलयोरिव बभूव समस्त शस्त्रैः ।
अद्रिश्चचालसविता स्थिरतामवापत्
तत्रासतत्र भुवनं वसुधा चकम्पे ।१११॥
जन्यं बभूव नकुलोत्कल भूमिपत्योः
काशी नरेश सहदेव कयोश्च तत्र ।
अन्ये तथा समबलैर्युगलीभवन्ताः
कीर्त्तिं क्रयं चकमिरेऽप्यसुमूल्यदानैः ।११२॥
चेदीशबाण नरकाश्च विदूरथाद्या
भूपा हरिं जलधरा इव बाणवर्षैः ।

युद्धमिति । शार्दूलयो व्याघ्रयोरिव वृहद्दलः अयोध्याधीशः कलिङ्ग महीशश्च तयोः समस्तशस्त्रैः यत् युद्धं बभूव तत्र युद्धे अद्रिः पर्व्वतः चचाल, सविता सूर्य्यः स्थिरतां स्थैर्य्यं अवापत्, भुवनं लोकः तत्रास विभाय, वसुधा भूमिः चकम्पे कम्पिता बभूव । उपमातिशयोक्ती । १११ ॥

जन्यमिति । तत्र प्रदेशे नकुलः उत्कल भूमिपतिः तयोः च काशी नरेश सहदेवकयोः जन्यं युद्धं बभूव । तथा तद्वत् अन्ये वीराः समबलैः तुल्यपराक्रमैः सह युगली भवन्तः द्वन्द्वीभूताः सन्तः असवः प्राणा एव मूल्यं किं तेषां दानैः प्रदानैः कीर्त्तेः यशसः क्रयं क्रयणं चकमिरे इयिषुः । रूपकं । ११२ ॥

चेदीशेति । उद्यतानां कार्मुकाणां धनुषां ज्याटङ्कारनादेन गुणटङ्कृति शब्देन वधिरीकृताः लोकानां कर्णाः यैः तथोक्ताः विदूरथाद्या वीराः चेदीशः शिशुपालःबाणः बलिपुत्रः नरकः क्षितिपुत्रश्च एते भूपाः राजानः जलधरा मेघा इव बाणवर्षै

आच्छाद्य संरुरुधुरुद्यत कार्मुक ज्या-
टङ्कार नाद बधिरी कृत लोककक्षाः ।११३॥

एकोहरिः प्रददृशे रिपुभिः समन्तात्
कौमोदकी शर सुदर्शन शार्ङ्ग धारी
तद्युद्धलाघववशान्नविभुत्व शक्त्या
नोकायसञ्चयकृतिक्षमयाविभूत्या । ११४ ॥

तद्ज्वालजालजटिलं प्रलयोदितार्क
व्यूहभ्रमा वह ममर्त्य सुदुर्निरीक्ष्यं ।

शरवृष्टिभिः हरिं श्रीकृष्णं सिंहञ्च आच्छाद्य संरुरुधुः वेष्टयामासुः । उपमा । ११३ ।

एक इति । कौमोदकी स्वगदा शरः बाणः सुदर्शनं स्वचक्रं शार्ङ्ग धनुश्च एतानि धारयतीति तथोक्तः चतुर्भुजत्वादितिभावः एकः हरिः श्रीकृष्णः रिपुभिः शत्रुभिः समन्तात् सर्वतः प्रददृशे दृष्टः । तत्रएकस्य हरेः समन्ततो व्यापनं युद्धलाघववशात् रणकौशल हेतोः अभूदित्यर्थः, विभुत्वशक्त्या व्यापकत्वमहिम्ना न तत् न वभूव । कायसञ्चयस्य देहव्यूहस्य कृतौ करणे क्षमया समर्थया विभूत्या ऐश्वर्य्येण नो तत् नवभूवेत्यर्थः । अतिशयोक्तिः । ११४ ॥

तदिति । ज्वालानां शिखानां जालैः समूहैः जटिलं सञ्जातजटं करालमित्यर्थःप्रलयोदिताः क्षयकाले उदयमानाः ये अर्काः सूर्य्याः तेषां यो व्यूहः समूहः तस्य भ्रमावहं तद्विषयकभ्रान्तिजनकं भ्रान्तत्वेन सर्वत्र दृश्यमानत्वादितिभावः अमर्त्यैः देवैरपिसुदुर्निरीक्ष्यं अतिदुर्द्दर्शं चक्रं सुदर्शनं अहितैः शत्रुभिः प्रहिताः प्रेरिताः या उग्रहेतयः भीषणायुधानि तासां व्रातस्य समूहस्य यत् प्रभिवर्षणं सर्वतो वृष्टिः तस्य विशोषण

बभ्राम चक्र मद्दित प्रहितो ग्रहेति
ब्राताभि वृषेण विशेषण कृत् समन्तात् । ११५ ॥
कर्णान्त कृष्ट मथबाणगणान् किरन्तं
चक्रीकृतं विततटंकृति शार्ङ्ग चापं।
दृष्ट्वा जनै रनुमितं किमुतत् सुनाभं
काण्डीकृतांशु निचयान् ध्वनति प्रमुञ्चत् ।११६
कृष्णोविकृत्य युधिकेतु मथातपत्रं
चूड़ामणिं त्वपिगुणं चतुरस्तु रङ्गान् ।

कृत्० विशेषकं सत् निवारकं भवदित्यर्थः समन्तात् बभ्राम अभ्रमत्। तदा सुदर्शनं विपक्षप्रयुक्तास्त्राणि निवारयत् बभ्राम। उत्प्रेक्षा। स्वभावोक्तिश्च। ११५॥

कर्णान्तकृष्टमिति। अथ अनन्तरं कर्णान्तकृष्टं आकर्ष-कृष्टं बाणगणान् किरन्तं विक्षिपन्तं चक्रीकृतं मण्डलीकृतं विततटङ्कृतिः अविरतटङ्कारध्वनिः शरप्रयोग लाघवात् सदैवेवम्भूतो दृश्यमान इत्यर्थः यः शार्ङ्गचापः श्रीकृष्णधनुः तं दृष्ट्वा जनैः तत्रत्यैः अनुमितं अनुमेने। किमिति उच्यते। तत् पूर्वोक्तं सुनाभं सुदर्शनंकाण्डीकृतान् बाणरूपेण परिणमितान् अंशुनिचयान् किरणसमूहान् प्रमुञ्चत् विसर्जयत् सत् ध्वनति शब्दायते किमु इत्यनुमितमित्यन्वयः उत्प्रेक्षा। ११६॥

कृष्ण इति। अथ अनन्तरं कृष्णः तत्र युधि चैद्यस्य शिशुपालस्य केतुं रथपताकां आतपत्रं छत्रं तु चूड़ामणिं किरीटरत्नं अपि गुणं धनुर्गुणं चतुरः तुरङ्गान् रथाश्वान् युगपत् समकालं विकृत्य कर्त्तित्वा पाञ्चजन्यं स्वशङ्खं प्रापूरयत्

चैद्यस्य तत्र युगपत् खलु पाञ्चजन्यं
प्रापूरयन्नरियशांसि पिबन्निवाभात् । ११७ ॥
कृष्णस्य वाण उपसृत्य समान नाम्नो
वाणस्य निर्भयतया निकटं सखेव ।
भूत्वाञ्जसास्य हृदयङ्गम एव तावत्
संप्रेरकस्य निजगाद परं प्रभावं । ११८ ॥
कार्ष्णायसं रथ मसौ नरकस्य कृष्ण
स्तूर्णं चकर्त्त तिलशो निशितैः क्षुरप्रैः ।
वीरास्त्रयोऽथ नरकासुरवाण चैद्या
नुन्नाः क्रुधा युध धराः सपदि व्यधावन् ।११९॥

प्रकर्षेण धमन् सन् अरियशांसि पिबन्निव अभात् अशोभत खलु । अतिशयोक्त्युत्प्रेक्षे । ११७ ॥

कृष्णस्येति । कृष्णस्य वाणः शरः समाननाम्नः समनाम धेयस्य वाणस्य बलिपुत्रस्य निकटं सखाइव मित्रमिव निर्भयतया निर्भीकत्वेन उपसृत्य अञ्जसा झटिति अस्य वाणा सुरस्य हृदयङ्गमः हृद्गतः मित्रत्वाद्धृद्यश्च भूत्वैव सम्प्रेरकस्य प्रयोजकस्य कृष्णस्येत्यर्थः परं उत्कृष्टं प्रभावं जगाद सूचयामास कृष्णस्य शरो वाणहृदयं बिभिन्दन् प्रभावं द्योतयामासेत्यर्थः । उपमा । ११८ ॥

कार्ष्णायसमिति । असौ कृष्णः नरकस्य नरकासुरस्य. कार्ष्णायसं लौहमयं रथं निशितैस्तीक्ष्णैः क्षुरप्रैः शरविशेषैः तूर्णं शीघ्रं तिलशः तिलप्रमाणं चकर्त्त चिच्छेद । अथ नरकासुरवाणचैद्याः त्रयो वीराः क्रुधा क्रोधेन नुन्नाः प्रेरिताः आयुधधरा अस्त्रधारिणः सन्तः सपदिव्यधावन् रथं त्यक्त्वा कृष्णमनु ससृरित्यर्थः । अतिशयोक्ति काव्यलिङ्गे । ११९ ॥

तातस्वसुः प्रमुख संश्रुततोऽपि चैद्यं
बाणं सयादव मणिः शिव सेवकत्वात्।
व्यापादयन्न नरकं च धरानुरोधात्
स्कन्धे प्रहृत्य गदया सम मोहयत्त्रीन्। १२० ॥
माद्री मुखेन्दु गलितस्मित चन्द्रिकाभि
र्धौत श्रमः स्ववदनाब्जमयं सशब्दं।
कम्बुच्छलेन वरटामिव चुम्बयित्वा
श्लिष्यन् प्रियामल मलज्जय दुर्ज्जित श्रीः।१२१॥

तातस्वसीति। सः यादवमणिः श्रीकृष्णः तातस्वसुः स्व पितृभगिन्याः शिशुपाल मातुः प्रमुखे अग्रे संश्रुवतः "सहिष्ये शत मागांसीति" प्रतिज्ञाया हेतोः चैद्यं शिशुपालं अपिच शिवसेवकत्वात् वाणं बाणासुरं च किञ्च धराया भूदेव्या अनुरोधात् नरकं नरकासुरं तस्य धरापुत्रत्वादितिभावः अत्र युद्धे न व्यापाद्य विनाश्य एतेन तेषामिदानीम प्राप्त मृत्युकाल त्वात् समयान्तरे श्रीकृष्णावध्यत्वं सूचितं। स्कन्धे स्कन्धावच्छेदे त्रीन् एतान् चैद्यादीन् प्रहृत्य सममोहयत् सम्मोहयामास। तुल्ययोगिता। १२० ॥

माद्रीति। माद्र्या लक्ष्मणाया मुखेन्दोः मुखचन्द्रात् गलिताभिः स्मितचन्द्रिकाभिः धौतश्रमः गतश्रमः अयं श्रीकृष्णः स्ववदनाब्जं निजमुखपद्मं कम्बुच्छलेन पाञ्चजन्य कपटेन वरटां हंसीमिव सशब्दं चुम्बयित्वा ध्वनिपुरःसरं ध्वनिपूर्व्वकं संस्पर्शयित्वा शङ्खमापूरयन्नित्यर्थः उर्जित श्रीः प्रियां लक्ष्मणां श्लिष्यन् आलिङ्गन् अलं अत्यर्थं अलज्जयत् लज्जयामास नवोढाया अस्थानालिङ्गनादित्यर्थः, प्रियान्तर चुम्बन दर्शनादिति च गम्यते। रूपकापह्नवोत्प्रेक्षे। श्रीकृष्णः शङ्खमापूर्य्य सज्जितां प्रियामालिलिङ्ग इत्यर्थः। १२१ ॥

पश्यन् समीकमवि दूरत एवभीतो
विद्धः शरैरथ विदूरथ आप्तमोहः ।
यन्त्रा विविच्य सहसा समपोह्यतेस्म
प्राणा नवन्ति रथिनां खलु सूत मुख्याः । १२२ ॥
रामोरथं मगधपस्य हलेन कर्षन्
साश्वं विचूर्ण्य मुषलेन च धावतोऽस्य ।
भ्राम्यद्गदस्य पुरतो गदया स शृङ्ग
स्तस्थौ महीध्र इव सूत पतितः स्वयानात् ॥ १२३
घूर्णद्गदाभ्रमि युगान्तर वर्त्तिनौ तौ
नाना विचित्र तर मण्डलमावहन्तौ ।

भगवन्तमाक्रमतस्तु चतुर्णां त्वयाणां मोहं वर्णयित्वा चतुर्थस्य प्रस्तौति पश्यन्निति । अथ चैद्यादि मोहानन्तरं विदूरथः समीकं श्रीकृष्ण युद्धं अविदूरतः अल्पदूरात् पश्यन्नवलोकयन्नेव भीतः शरैः कृष्णप्रहितैरित्यर्थः शरैः विद्धः अतएव आप्तमोहः प्राप्तसम्मोहः सन् यन्त्रा सारथिना विविच्य सम्यक् विचार्य्य सहसा शीघ्रं समपोह्यते स्म अपवाहितः यतः सूतमुख्याः सारथि प्रवराः रथिनां प्राणान् अवन्ति रक्षन्ति खलु । अर्थान्तरन्यासः । १२२ ॥

अथ त्रिभिः बलदेव जरासन्धयोर्युद्धं वर्णयति ।

राम इति । रामः बलदेवः मगधपस्य जरासन्धस्य रथं हलेन लाङ्गलेन कर्षन् साश्वं अश्वसहितं मुषलेन विचूर्ण्य चूर्णयित्वा च पुनः धावतः युद्धार्थमागच्छतः भ्राम्यन्ती गदा यस्य तथोक्तस्य अस्य मागधस्य पुरतः स्वयानात् निजरथात् सूतपतितः उत्प्लुत्या गतः सन् गदया उपलक्षितः सशृङ्गः शृङ्ग सहितः महीध्रः पर्वत इव तस्थौ । अतिशयोक्त्यप्रेक्षे । १२३ ॥

दृष्ट्वा जनै र्निजगदे किमु पुष्पवन्तौ
युद्धे रतौ सपरिधी भुवन क्षयाय। १२४॥
योऽभूत्तयोश्चटच्चटा निनदो गदाभ्यां
यावद्बलव्यय परष्पर घट्टिताभ्यां।
कल्पान्त दुर्भव ममुं दधतोऽम्बरस्य
मानेन तत्र सदृशोऽपिमहान् गुणोऽभात् ।१२५
हन्तव्य एष भवतान जरासुतेन
जेतव्य एव भगवन्न तथा त्वमेवं।

घूर्ण्णदिति। घूर्णान्तयोः गदयोः यत् भ्रमि युगं भ्रमण मण्डलद्वयं तस्य अन्तरयोः मध्ययोः वर्त्तेत इति तथोक्तौ। गदाभ्रमि मध्यस्थाविव हस्तलाघवाद् दृश्यमानावित्यर्थः नानाविचित्रतर मण्डलं आवहन्तौ आचरन्तौ तौ राममागधौ दृष्ट्वा जनैः निजगदे कथितं, किन्तदुच्यते, सपरिधी परिवेष-सहितौ पुष्पवन्तौ चन्द्रसूर्य्यौ भुवनक्षयाय युद्धे रतौ किमु? इति निजगद इत्यन्वयः, प्रलये ग्रहयुद्धं भवेदिति प्रसिद्धिः "परिवेषस्तु परिधिरुप सूर्य्यकमण्डले। एकयोक्त्या पुष्प-वन्तौ प्रभाकरनिशाकराविति चामरः। उत्प्रेक्षा। १२४॥

य इति। तयोः मागधबलरामयोः यावद्बलव्ययं सकलबलव्ययं यथा तथा परस्परं अन्योऽन्यं घटिताभ्यां ताड़िताभ्यां गदाभ्यां यः चटचटानिनदः चटचटाध्वनिः अभूत्, कल्पान्ते क्षयकालेऽपि दुर्भवं भवितुमशक्यं अमुं चटचटा शब्दं दधतः वहतः अम्बरस्य आकाशस्य गुणः शब्दाख्यः "आकाशस्य तु विज्ञेयो शब्दो वैशेषिकोगुणः" इति प्रामाण्यात् तत्र तदामानेन परिमाणेन पारिमाण्डल्येन इत्यर्थः सदृशः समः महान् महत्त्ववान् अभूत्। यथा आकाशस्य परिमाणं महत् तथ तत्र शब्दोऽपिगुणो महान भूदित्यर्थः। अतिशयोक्तिः। १२५॥

वाणी तदा दिविषदां सदृशं चरन्तौ
युद्धान्न्यवर्त्तयदथो वलमागधेन्द्रौ । १२६ ॥
कर्णार्जुनौ च सदृशं युधि चेष्टमानौ
सर्वास्त्रशेषमभि युध्य गदानि युद्धे ।
सक्तौ समान वलभीम सुयोधनौ च
धर्म्मात्मजादि सुधियः शमयां वभूवुः ।१२७॥
संख्येऽभिलक्ष्य विमुखानिह योधमुख्यान्
मध्ये युधिष्ठिर मुखानपि विघ्नभूतान् ।
अन्येऽभवन् प्रविरताः खलु युग्म युद्धात्
श्रेष्ठानुगैरुचित वाग्ध्रियतेऽपिदुष्टैः । १२८ ॥

हन्तव्य इति । हे भगवन् हे राम ! एषः जरासन्धः भवता न हन्तव्यः तथाल जरासुतेन मागधेन न जेतव्य एव । एवं इत्याकारिका दिविषदां देवानां वाणी आकाशवाणीत्यर्थः । तदा सदृशं समवलं चरन्तौ युध्यमानौ वलमागधेन्द्रौ वलदेव जरासन्धौ अथोऽनन्तरं युद्धात् न्यवर्त्तयत् निवर्तयामास ।१२६॥

कर्णार्जुनाविति । धर्म्मात्मजादि सुधियः युधिष्ठिरप्रमुखाः पण्डिता युधि युद्धे सदृशं तुल्यं चेष्टमानौ वर्त्तमानौ कर्णार्जुनौ च सर्वास्त्रशेषं यथा तथा अभियुध्य गदानियुद्धे सक्तौ निरतौ समानबलौ समबलौ भीमसुयोधनौ च शमयाम्बभूवुः युद्धाद्विरमयामासुः । १२७ ॥

संख्य इति । अन्ये वीराः योधमुख्यान् भटश्रेष्ठान् इह संख्ये युद्धे विमुखान् विरतान् पुनः मध्ये विघ्नभूतान् अन्तराय भूतान् युधिष्ठिर मुखान् युधिष्ठिरादीनपि अभिलक्ष्य दृष्ट्वा युग्म युद्धात् द्वन्द्व युद्धात् प्रविरताः अभवन् खलु । श्रेष्ठानुगैः प्रधानानुगतैः दुष्टैः दुर्जनैरपि उचितवाक् युक्तवचनं ध्रियते अङ्गीक्रियते । अर्थान्तरन्यासः । १२८ ॥

सा भूरभूज्झटिति वीर वरैश्च रिक्ता
पूर्णा पलाशि मृगदंशक जम्बुकाद्यैः ।
निःसारितोज्ज्वलमणि प्रकरं भवेच्चेत्
पात्रं च कण्टकमयं तदद्स्तुलास्यात् । १२६ ॥

कन्यार्थिनां निववृते प्रधनं नृपाणां
रक्ताशया तदभवत् श्वशिवागणानां ।
देवैर्मुदासनिनदैः शनकैर्गतं खात्
गृध्रास्रपैः पलमनाप्य पलायितुष्णीं ।१३०

'सेति । सा भूः युद्धभूमिः झटिति शीघ्रं वीरवरैः वीरश्रेष्ठैः रिक्ता शून्या अभूत् च पुनः पलाशिभिः मांसाशिभिः मृगदंशक जम्बुकाद्यैः वृक शृगालादिभिः पूर्णा अभूत्, पात्रं कश्चिदाधारः निःसारितः अपसारितः उज्ज्वल मणीनां प्रकरः समूहः यस्मात् तत् च पुनः कण्टकमयं कण्टकपूर्णं भवेच्चेत् स्याद्यदि तत् तर्हि अदस्तुला एतस्या युद्धभूमेः साम्यं स्याद्भवेत् अतिशयोक्तिः । १२६ ॥

कन्यार्थिनामिति । कन्यार्थिनां लक्ष्मणेच्छूनां नृपाणां प्रधनं युद्धं निववृते निवृत्तं वभूव, रक्ताशया रक्तपानेच्छया श्वशिवागणानां कुक्कुरशिवासमूहानां तत् प्रधनं समभवत् मुदा आनन्देन सनिनदैः कोलाहल सहितैः देवैः युद्धदिदृक्षुभिरिति भावः खादाकाशात् शनकैः गतं प्रस्थितं, गृध्रैः पक्षिविशेषैः असपैः राक्षसैः "राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आसरः इत्यमरः" पलं मांसं अनाप्य अप्राप्य युद्धेऽत्र वीरक्षया भावादिति भावः । तुष्णीं निःशब्दं पलायि पलायितं स्ववाञ्छा पूर्त्त्यभाव जनित दुःखादिति भावः खादिति शेषः । १३० ॥

श्वा सं लिहन् क्षतज लिप्त कृपाणधारां
कश्चित्तयैव विनिकृत्त विलोल जिह्वः ।
रक्ताक्तभूः कति पदानि विधाय कुर्वन्
भेङ्कार मुद्भ्रमित मौलि पतन् ममार ।१३१

लीढ़ः स्खलन् क्षतजलिप्त फलः कलम्बः
कण्ठं व्रजन् सरभसं धुत मस्तकेन ।
एकेन फेरु युवकेन विवृत्य वक्त्रं,
पर्य्यस्तनेत्र मुदगारि रणाजिरेऽस्मिन् ।१३२॥

श्वेति । कश्चित् श्वा कुक्कुरः क्षतजैः प्रहृतानां रक्तैः लिप्तां कृपाण धारां खड्गधारां संलिहन् जिह्वया स्पृशन् तया कृपाण धारयैव विनिकृत्ता छिन्ना विलोला जिह्वा यस्य सः अतः रक्तैः जिह्वाच्छेदजनितै रुधिरैः आक्ता व्याप्ता भूः तत्रत्या भूमिः येन तथोक्तः सन् भेङ्कारं भें कारशब्दं कुर्व्वन् कतिपदानि विधाय उद्भ्रमितमौलि घूर्णितमस्तकं यथा तथा पतन् भूमाविति शेषः ममार मृतोऽभूत् विषमालङ्कारः । १३१ ॥

लीढ़ इति । अस्मिन् रणाजिरे युद्धभूमौ एकेन केनचित् फेरुयुवकेन शृगालयूना लीढ़ः जिह्वया स्पृष्टः क्षतजेन प्रहृत-रक्तेन लिप्तं फलं अग्रं यस्य तथोक्तः स्खलन् मुखात् इतिशेषः कण्ठं व्रजन् गलं गच्छन् फेरुयुवकस्येतिशेषः कलम्बः बाणः तत्रपतित इत्यर्थः सरभसं सोद्वेगं धुतमस्तकेन कम्पित मूर्द्ध्ना सता वक्त्रं मुखं विवृत्य व्यादाय पर्य्यस्ते विपर्य्यस्ते नेत्रे यस्मिन् कर्म्मणि यथा तथा उदगारि कण्ठत उद्गीर्णः । अलङ्कारस्तु पूर्व्ववत् । १३२ ॥

क्रेङ्कार घोर मभि संक्रमतां पलादां
सन्तर्जनं विदधतोऽपि परेतरङ्काः ।
प्राश्याश्वमांस ममराइव वाजिमेधे
प्रीयामहे वयमिति प्रजगुः प्रकामं ।१२३॥
विद्राव्य जम्बुक युवाश्वगणां समेतं
व्यग्रोलिहन् रुधिर दिग्ध मुखं पृषत्कं ।
तेनैव विद्धरसनः प्रससार नर्द्दन्
आदूनता चपलता फलमीदृगेव ।१२४॥
आघ्रायाघ्रायभूमिं क्वचिदभिपतितांसंप्रदृश्यास्रधारां
सङ्घीभूय प्रवृत्ताः प्रविततरसना लेढुमग्राङ्घ्रिघातैः ।

क्रेङ्कारघोरमिति । परेतरङ्काः पिशाचाधमाः क्रेङ्कारैः क्रेमित्याकारक ध्वनिभिः घोरं भयङ्करं यथा तथा अभिसंक्रमतां अभितः मांसभक्षणार्थं माक्रमतां पलादां मांसाशिनां शृगालादीनां सन्तर्जनं निष्कासनं विदधतः कुर्व्वन्तोऽपि अश्वानां मृतरथाश्वानां मांसं प्राश्य भक्षयित्वा वाजिमेधे अश्वमेधे यागे अमरा देवा इव वयं प्रीयामहे प्रीतास्मः इति एवं प्रकारेण प्रकामं प्रजगुः कथयामासुः । उपमातिशयोक्ती ।१२३।

विद्राव्येति जम्बुकयुवा शृगालयुवकः कश्चिदितिशेषः समेतं मांसभक्षणार्थं सङ्गतं श्वगणं कुक्कुरसमूहं विद्राव्य निष्कास्य व्यग्रः सोद्वेगः रुधिरेण प्रहृतस्य रक्तेन दिग्धमुखं लिप्तफलकं पृषत्कं बाणं लिहन् जिह्वया स्पृशन् तेन पृषत्केनैव विद्धरसनः क्षतजिह्वः सन् नर्द्दन् गर्ज्जन् प्रससार जगाम आदूनता औदरिकता च चपलता चाञ्चल्यं च तयोः फलं कार्य्यं ईदृक् एवम्भूतमेव भवतीतिशेषः । विषमालङ्कारः, अर्थान्तरन्यासश्च । १२४ ॥

घ्रात्वानोऽन्योन्यं द्विषंतो विरचितकलहा घर्घरारावबन्तः
पीतान्तां बञ्चकेन प्रमुदित मनसा वेदिषु नैव केऽपि ॥

स्वान् पक्षान् तदनुसमीक्ष्य नक्षताङ्गान्
लोलाक्षी विमुख तरान् युधो विपक्षान्
श्रीकृष्णं विजयमहाश्रियासमेतं
संरेजे नृपतनुजा प्रहर्षिणीयं । १३६ ॥

मित्रोप्यमित्रैः सहहीन तेजा
ईयेष गन्तुं निलयं तदानीं ।

आघ्रायेति। श्वानः कुक्कुराः भूमिं आघ्रायाघ्राय क्वचित् कस्मिंश्चित् प्रदेशे अभिपतितां असृधारां रक्तधारां सम्यग्दृष्ट्वा सम्यग्दृष्ट्वा युद्धेऽस्मिन् बधस्य क्वाचित्कलात् रुधिरस्य स्वल्पता सूचिता, संघीभूय एकीभूय प्रविततरसनाः विस्तृत जिह्वाः लेढुं आस्वादितुं रक्तधारामित्यर्थः प्रवृत्ता आसक्ताः ततः अग्राङ्घ्रिघातैः पुरःपादप्रहारैः अन्योऽन्यं परस्परं द्विषन्तः द्वेषं कुर्व्वन्तः विरचितकलहाः घर्घरारावबन्तः घर्घरध्वनिं कुर्व्वन्तः सन्तः केऽपिप्रमुदितमनसा हृष्टचित्तेन वञ्चकेन शृगालेन पीतां आस्वादितां तां असृधारां तत्पानमित्यर्थः न अवेदिषुः नाज्ञासिषुरेव स्रग्धरावृत्तं। स्वभावोक्तिः। १३५ ॥

स्वानिति। तदनु लोलाक्षी चञ्चलनयना इयं नृपतनुजा लक्ष्मणा स्वान् स्वकीयान् पक्षान् सहायान् अर्ज्जुनादीन् नक्षताङ्गान् अक्षतावयवान् विपक्षान् शत्रून् चैद्यादीन् युधः युद्धात् विमुखतरान् अतिविमुखान् पुनः श्रीकृष्णं विजयमहाश्रिया जयलक्ष्म्या समेतं सङ्गतं समीक्ष्य दृष्ट्वा प्रहर्षिणी प्रहृष्टा संरेजे शुशुभे। प्रहर्षिणीवृत्तं। त्र्याशाभिर्म्मनजरगाः प्रहर्षिणीयं। काव्यलिङ्गं। १३६ ॥

मित्रइति। तदानीं युद्धावसानसमये मित्रोऽपि सूर्य्यश्च अमित्रैः श्रीकृष्णस्य शत्रुभिः सह तत्साम्येनेत्यर्थः हीनतेजाः

अध्वश्रमारब्ध विलोहित श्रीः
स्वास्थ्याय भेजे किमु वारुणीं सः। १३७॥

प्रियायुक्तान् कुर्वन् सुहृद इव हृष्टान् यदुपते
र्विपक्षक्ष्मापालानिव विरहिणश्चार्त्त मनसः
समं चौरश्रेण्याभिसरणपराः स्त्रीस्तरलयन
अभूद्वीनां नीड़ द्रुम मभिसृतानां कलकलः। १३८

पश्यन् हेति गभीरणो दिनमणिः सौदर्शनीयास्तदा
नीचं नम्य इवातट प्रपतनं वाञ्छन् प्रतीचीगिरेः
निस्तेजस्काः हीनपराक्रम त्वं गम्यते निलयं अस्तमयं गन्तुम्
गन्तुं इयेष, अध्वश्रमैः मार्गपरिश्रमैः आरब्धा जाता विलोहित
श्रीः रक्तकान्तिः यस्य तथाभूत इव स्थितः सन्ध्याकालीनरक्तत्वे
हिनगमन परिश्रमजरक्तत्वस्योत्प्रेक्षा गम्यते, सः मित्रः स्वस्थाय
सुस्थतालाभाय वारुणीं पश्चिमां दिशं सुराञ्च भेजे सिषेवे
सहोक्त्युत्प्रेक्षे। लोकाः श्रान्तेः सुरापानं कुर्वन्तीति प्रसिद्धिः
उपजातिवृत्तं। १३७॥

प्रियायुक्तानिति। नीड़द्रुमं कुलायवृक्षं अभिसृतानां
अभ्यागतानां वीनां पक्षिणां "विविष्किरपतत्रिण इत्यमरः"
कलकलः कोलाहलध्वनिः यदुपतेः श्रीकृष्णस्य सुहृदः मित्रा-
णीव प्रियायुक्तान् सपत्नीकान् जनान् हृष्टान् आनन्दितान्
कुर्वन् विपक्षक्ष्मापालान् श्रीकृष्णस्य शत्रुनृपानिव विरहिणः
प्रियावियुक्तान् जनांश्च आर्त्तमनसः दुःखितचित्तान् कुर्वन्
अभिसरणपराः अभिसारिकाः स्त्रीः स्त्रियः (वाम्शसोरिति
विकल्पादियङभावः) चौरश्रेण्या तस्करसमूहेन समं तरलयन्
चञ्चलीकुर्वन्सन् अभूत् अवर्त्तत। उपमासहोक्ती, शिखरिणी-
वृत्तं। रसैरुद्रैश्छिन्नायमनसभलागः शिखरिणी। १३८॥

कान्तां भोजलता रविन्द वदनान्यामुद्रयन्नस्खलत्
तद्रक्तैरिव संप्लुतं प्रददृशे पाश्चात्य दिङ्मण्डलं ॥

केदारे गगन तले समुप्त वीजे
प्राक्प्रेतपनकरेण यावदेव
प्रासर्पत्तिमिर वृतिः पयो निषेक
स्तावत् किं समजनि तारकाङ्कुराल्या ।१४०

चक्रयोर्वांतदा लक्ष्मणा कृष्णयो
भिन्नमूर्वर्त्तिनो मन्मथं रुन्धतोः

पश्यन्निति। दिनमणिः सूर्य्यः रणे पूर्वोक्तयुद्धे सौदर्शनीया सुदर्शनचक्रसम्बन्धिनीः हेति गतीः ज्वाला वेगानित्यर्थः पश्यन् अवलोकयन् नीचं मन्यः आत्मानं निकृष्टं मन्यमान इव तदा अतट् प्रपतनं पराजय दुःखेन भृगुपतनं वाञ्छन् कान्तानां कमनीयानां प्रियाणां च अम्भोजलतानां पद्मिनीनां अरविन्दान्येव वदनानि मुखानि आमुद्रयन् मलिनयन् प्रतीचः गिरेः अस्ताचलात् अस्खलत् अपतत् अतः पाश्चात्य दिङ्मण्डलं पश्चिमदिक्चक्रवालं तद्रक्तैः तस्य भृगुपतितस्य सूर्य्यस्य रक्तैः रुधिरैः सम्प्लुतं व्याप्तमिव प्रददृशे दृष्टं। रूपकोत्प्रेक्षे। शार्दूलविक्रीडितं वृत्तं। १३९॥

केदारइति। प्राक् पूर्व्वं तपनकरेण सूर्य्यकिरणेन तप्ते गगनतले आकाशप्रदेशे समुप्तवीजे वीजवपनविशिष्टे केदारे क्षेत्रे व्यस्तरूपकं "केदारोवप्रमस्त्रियामित्यमरः" तिमिर वृत्तिः अन्धकारावरणं पयोनिषेकः जलसेचनं व्यस्तरूपकं यावत् यावत्परिमाणमेव प्रासर्पत् प्रससार तावत् तावत्परिमाणं ताराकानामिव अङ्कुराणां आल्या॰ समूहेन अजनि जातं किं सूर्य्यालोके नक्षत्राणामदर्शनात् यावदन्धकारावरणं तावदेव तेषां प्रकाश इतिभावः, रूपकोत्प्रेक्षे। प्रहर्षिणीवृत्तं। १४०॥

भाविनः सङ्गमस्याशया कल्पना-
विस्तरैः सा निशा लिप्तिकेवागमत् । १४१ ॥

योऽभूद्विष्णु रथस्य चित्ररचना दृष्टस्य तूर्ण कवेः
धीरः श्रीभुवनेश्वरः सुविदुषामग्रस्य पुत्रो रथः ।
तस्य श्रीमति लक्ष्मणा परिणये काव्ये कृतौ सप्तमः
सर्गः सर्वदुरात्म राज दमनः शेषं जगामाद्भुतः ।
१४२॥

सप्तमः सर्गः समाप्तः ।

चक्रयोरिती । तदा चक्रयो र्वा चक्रवाकयोरिव भिन्नभूव-र्त्तिनोः पृथक्स्थानस्थितयोः मन्मथं कामावेशं रुन्धतोः उपेक्ष माणयोः अविवाहितत्वादितिभावः लक्ष्मणा कृष्णयो भाविनः भविष्यतः सङ्गमस्य आशया कल्पनाविस्तरैः संकल्पपरम्पराभिः सा निशा रात्रिः लिप्तकेव सूक्ष्मकालविभाग विशेषइव अगमत् । लिप्तिकेवप्रतीयमाना गतेत्यर्थः । स्रग्विणीवृत्तं, रैश्चतुर्भियु ता स्रग्विणीसम्मता । १४१ ॥

श्रीति । लक्ष्मणापरिणये काव्ये सर्वेषां दुरात्मनां राज्ञां दमनं यस्मिन् तथोक्तः अतोऽद्भुतः सप्तमः सर्गः शेषं जगाम समाप्त इत्यर्थः । १४२ ॥

इति श्री लक्ष्मणा परिणयव्याख्यायां सप्तमः सर्गः
समाप्तः ।

---



## अष्टमः सर्गः ।

---

अथ ध्वस्तारितमसो धिन्वतः पद्मिनीं प्रियां ।
योजिताश्वः प्रगे यन्त्रा शताङ्गः शुशुभे हरेः । १ ॥
स जिष्णु घोषणां वीरपताकां वा जयश्रियं ।
प्रास्थापयद्वृतां सैन्यै र्वधूयानगतां वधूं । २ ॥

अथेति । अथ रात्रिशेषानन्तरं प्रगे प्रातःकाले ध्वस्तानि विनाशितानि अरितमांसि रिपुव एव तिमिराणि रिपुभूतानि तिमिराणिच येन तस्य पद्मिनीं तज्जातीयां प्रियां लक्ष्मणां अन्यत्र कमलिनीं धिन्वतः प्रीणयतः शत्रु पराजयात् विकाशाच्च हरेः श्रीकृष्णस्य यन्त्रा सारथिना दारुकेनारुणेन च योजिता अश्वा यस्मिन् सः अश्वयुक्तः शताङ्गो रथः शुशुभे विरेजे । अथ द्वारकाप्रयाणाय भगवतोरथः सज्जितोऽभूदित्यर्थः । श्लिष्टरूपकं । अनुष्टुभि पथ्या वक्तं वृत्तं । युजोश्चतुर्थतोजेन पथ्यावक्तुं प्रकीर्त्तितमिति लक्षणात् । प्रायोऽस्मिन् सर्गे एतद्वृत्तं । १ ॥

स इति । सः श्रीकृष्णः जिष्णोः जयशीलस्य घोषणां उच्चैर्घोषस्वरूपां वीरपताकां वीरध्वजभूतां वा जयश्रियं जयलक्ष्मीभूतां वधूं लक्ष्मणां सैन्यैर्वृतां वेष्टितां वधूयानगतां स्त्रीयानारूढां सतीं "वधूर्जाया स्नुषास्त्रीचेत्यमरः", प्रास्थापयत् प्रस्थापयामास । रूपकं । २ ॥

विधुर्विजय शैनेय सहितोऽधिरुहन् रथं।
सार्थकामस्य धर्मस्य प्रतस्थे श्रियमाप्नुवन् ।३॥
वसन्तं समशीतोष्णा मृतुराजं जयन् तदा।
तपोदृष्टस्तपोद्दृष्टः प्रतपन् प्राणिनः पथि। ४॥
कृष्णकीर्त्यां तपत्राप्त हर्षच्छाया जितातपाः
स्वच्छन्दं नामविश्रम्य निर्भया यदवोययुः। ५॥
त्यक्ततारुण्य सम्पत्तिं जरतीमिव माधवः।
वासन्तीं जहतीं कान्तिं चितिं दृष्ट्वोक्ति माददे।६॥

विधुरिति। विधुः श्रीकृष्णः विजयशैनेयाभ्यां अर्जुन सात्यकिभ्यां सहित. रथं अधिरुहन् सार्थकामस्य अर्थकाम सहितस्य धर्मस्य श्रियं शोभां आप्नुवन् सन् प्रतस्थे। निदर्शना। ।३।

वसन्तमिति। तदा स प्रस्थानसमये पथि मार्गे समशीतोष्णं नातिशीतंनातुष्णाम् ऋतुराजं वसन्तं जयन् प्राणिनः जन्तून् प्रतपन् पीड़यन् तपः निदाघकाल एव दुष्टस्तपः दृष्टः अनुभूतः श्रीकृष्णेनेतिशेषः। रूपकं। ४॥

कृष्णेति। यदवो वृष्णयः कृष्णस्य कीर्त्तिरेवातपत्रं छत्रं तेन आप्ता प्राप्ता या हर्ष आनन्द एव च्छाया अनातपः तेन जितः अनवगणितः आतपो द्योतः यैस्ते आनन्देन अगणिता तपबाधा इत्यर्थः निर्भयाः सन्तः विश्रम्य नाम नामेति सम्भावनायां स्वच्छन्दं ययुः द्वारकांगतवन्तः। परिणामः। ५॥

त्यक्तेति। माधवः श्रीकृष्णः त्यक्ततारुण्यं सम्पत्तिं वर्जितयौवनलक्ष्मीं जरतीं वृद्धामिव वासन्तीं वसन्तकालीनां कान्तिं शोभां जहतीं त्यजन्तीं चितिं पृथ्वीं दृष्ट्वा उक्तिं वक्ष्यमाणां आददे स्वीचकार कथयामासेत्यर्थः। उपमा। ६॥

उशन्ति सरितोमन्द-गतयो निःस्वनाः कृशाः।
विप्रलब्धा इव प्रेष्ठं मेघं नवरसप्रदं। ७॥
चातका विगताभ्रे खे शुष्ककण्ठौष्ठ तालुकाः।
ध्वनन्ति विरले भेग्रहा दुर्भिक्षे भिक्षवोयथा। ८॥
व्यजनैश्चालनक्लेश मङ्गीकृत्यापि मानवाः।
राजन्या इव राज्यैः किं नात्मानं सुस्थयन्त्यलं।९॥
त्रितापैरपि संतप्ता धीरासत्त्वोन्नतायथा।
दावैः प्रदीप्त वपुषो नचलन्त्य चलाः स्थितेः। १०॥

उशन्तीति। मन्दगतयः मन्दस्रोतसः अन्यत्र सालसगमनाः निःस्वनाः निःशब्दाः कृशाः क्षीणाः सरितो नद्यः विप्रलब्धा विरहिण्यः प्रेष्ठं प्रियमिव नवरसप्रदं नूतनजलप्रदं मेघं प्रेष्ठपक्षे रसः शृङ्गारः उशन्ति कामयन्ति। उपमा। ७॥

चातका इति। शुष्ककण्ठौष्ठतालुका चातकाः विगताभ्रे विगतमेघे खे आकाशे विरला इभ्या धनिकाः यस्मिन् तथोक्ते दुर्भिक्षे देशे भिक्षवो यथा भिक्षुका इव खा इति खेदे ध्वनन्ते शब्दायन्ते। ८॥

व्यजनैरिति। मानवा मनुष्या राजन्या राजानो राज्यै राज्यैरिव चालनात् स्वहस्तेन परिचालनाद्धेतो र्यत् क्लेशं कष्टं तत् अङ्गीकृत्य स्वीकृत्यापि व्यजनै स्तालवन्तादिभिरात्मानं स्वं अलमत्यर्थं नसुस्थयन्ति सुस्थं कुर्व्वन्ति किं, सुस्थयन्त्येव उपमा। ९।

त्रितापैरिति। त्रितापैः तापत्रयेण सन्तप्ता अपि सत्त्वेन सत्त्वगुणेन उन्नता अधिकाः धीरा यथा धैर्य्यशालिन इव दावैः वनाग्निभिः प्रदीप्तवपुषः अचलाः पर्व्वताः स्थितेः अवस्थानान्मर्य्यादायाश्च नचलन्ति नभ्रश्यन्ति। उपमा। १०॥

नवागतस्य तीक्ष्णस्य तपस्याधीश्वरस्य किं।
आलोकदायका भान्ति रात्रौदावो ज्वलाद्रयः ।११॥
पान्थ स्त्रीमन्मथाग्निं च प्राहट् शमयितुं दवं।
समर्थैकात्मनिष्ठेव त्रितापौर्वं भवाम्बुधेः । १२ ॥
उन्मुक्तनाल गलकामित्रं चामाम्बुजा ननाः।
शुष्यन्त्यः पुष्करिण्यः किं जीवनार्थमुपासते । १३॥

नवागतसीति। रात्रौ निशासु जात्यैकवचनं दावैर्वना-ग्निभि रुज्वलाः प्रदीप्ता अद्रयः पर्व्वताः नवागतस्य नूतना विर्भूतस्य तीक्ष्णस्य प्रचण्डस्य तपस्य ग्रीष्मर्त्तोरधीश्वरस्य अधिनायकसेरतिव्यस्तरूपकं आलोकदायका दीपाद्यालोक-दायिनः भान्ति शोभन्ते किं। उत्प्रेचा नवागतस्य तीक्ष्णदण्डस्य प्रभोरभिनन्दनार्थं लोके सोत्सवं आलोकान् प्रकाशयन्तीति प्रसिद्धिः । ११ ॥

पान्थेति। एका प्राव्रट् वर्षर्त्तुः पान्थस्त्रीणां पथिकाङ्गनानां मन्मथाग्निं कामवह्निं दवं वनवह्निञ्च आत्मनिष्ठा परमात्म-स्वरूपेणावस्थानं भवाम्बुधेः संसारसमुद्रस्य त्रितापौर्वं तापत्रय रूपवाड़वाग्निमिव शमयितुं निर्वापयितुं समर्था इवाभवति नान्येति शेषः। रूपकोपमातुल्ययोगिताः। १२।

उन्मुक्तेति। उन्मुक्ताः नालाएव गलाः कण्ठाः यासां ताः (स्वार्थे कप्) चामानि चीणानि अम्बुजानेिव मुखानि यासां ताः शुष्यन्त्यः शुष्काः पुष्करिण्यः तड़ागाः मित्रं सूर्य्यं सुहृदञ्चेतिगम्यते जीवनार्थं जलप्राप्तये जीवितुञ्चेतिगम्यते उपासते सेवन्ते किं। रूपकोत्प्रेचे। पयःकीलालममृतं जीवनं भुवनवन मित्यमरः।
।१३।

ह्रसन्ति सलिला नीव किमुसौरकरैः क्षपाः।
इति संशयितै रेतै र्दिवसैः किं विलम्ब्यते। १४ ॥
जलाशयेषुसन्तप्ताः क्रीड़ार्हे षु विलासिनः।
संप्लवन्ते दिनप्रान्ते जीवाइव भवार्णवे। १५ ॥
निदाघेनेव संशुष्कं यूनां कामतरुं पुनः।
शनैः पल्लवयन्त्यापो यन्त्रधारा गृहस्रुताः। १६ ॥
ग्रीष्मारसयुवद्वन्द्व संमोहाय किमुस्मरः।
मालीमल्ली सुमनस श्चकार गरितान् शरान् ।१७॥

ह्रसन्तीति। सौरकरैः सूर्य्य किरणैर्हेतुभिः सलिलानि जलानीव क्षपाः रात्रयः ह्रसन्ति ह्रस्वा भवन्ति किमु इति एवं प्रकारेण संशयितैः सन्दिग्धैः एतैः ग्रीष्मकालीनैः दिवसैः दिनैः विलम्ब्यते विलम्बितं लम्बमानैर्भूयते किं, सन्दिग्धा एव विलम्बन्त इति प्रसिद्धं, प्रकृतेत्वस्मिन् समये रात्रयो ह्रसन्ति दिवसा दीर्घीभवन्तीतिभावः। उपमोत्प्रेक्षे। १४ ॥

जलाशयेष्विति। सन्तप्ताः निदाघतप्ता विलासिनः दिन-प्रान्ते दिवसशेषे क्रीड़ार्हे षु जलक्रीड़ा योग्येषु जलाशयेषु भवार्णवे संसारसमुद्रे जीवाः प्राणिन इव सं-प्लवन्ते। उन्मज्जन निमज्जनादिकं कुर्व्वन्ति। उपमा। १५।

निदाघेनेति। यन्त्रधारागृहस्रुता जलयन्त्रगृहनिःसृताः आपः जलानि निदाघेन ग्रीष्मेण संशुष्कमिवस्थितं यूनां युवकानां काममेवतरुं वृक्षं पुनः शनैः मन्दंमन्दं पल्लवयन्ति सञ्जातपल्लवं कुर्वन्ति। अस्मिन्नृतौ यन्त्रधारा गृहा एव कामोद्दीपकाः भवन्ति। उत्प्रेक्षारूपके।१६ ॥

ग्रीष्मेति। स्मरः कामः ग्रीष्मेण अरसानि रसरहितानि यानि युवद्वन्द्वानि युवक युगलानि तेषां सम्मोहाय सम्मोहनार्थं

चम्पके वर्णगन्धाभ्या मुच्छ्रिते भ्रमरा न यत्।
विश्वन्त्यवैमिमलिनं तेषां रूपसमं मनः। १८॥
निरासकं स्मरस्योष्मा प्रसादयितु मिच्छतः।
इच्छाकृत्या स्थितादीपा सपुष्पाभान्ति चम्पकाः। १९॥
तापशान्त्यर्थमालिप्तं सचन्द्रं चन्दनं स्त्रियः।
व्यवधानं प्रियाश्लेषे मत्वातप्ता भवन्त्यलं। २०॥
जीवनत्वमपां वायोर्जगत्प्राणत्वमेव च।
प्राकृतै रपिकालेस्मिन् प्रव्यक्त मनुभूयते। २१॥

सालोः भ्रमरसहिताः मल्लीसुमनसः मल्लिकाकुसुमानि गरितान् विषाक्तान् शरान् वाणान् चकार किं। उत्प्रेक्षा। १७॥

चम्पक इति। भ्रमरा वर्णगन्धाभ्यां रूपगुणाभ्यां उच्छ्रिते उत्कृष्टे चम्पके तदाख्यपुष्पे न विशन्तियत् अतः अवैमि तर्कयामि तेषां भ्रमराणां मनः चित्तं रूपसमं निजरूपेण सदृशं मलिनं भवतीतिशेषः। उपमोत्प्रेक्षे। १८॥

निरासकमिति। सपुष्पाः पुष्पसहिताः चम्पकाः वृक्षविशेषाः निरासकं निजस्य निवर्तकं उष्मां ग्रीष्मकालं प्रसादयितुं प्रसन्नं कारयितुं इच्छतोऽभिलषतः स्मरस्य कामस्य इच्छा कृत्या वृच्छाकारेण स्थिताः दीपाः प्रदीपाः भान्ति शोभन्ते। उत्प्रेक्षा।१९॥

तापेति। स्त्रियः तापशान्त्यर्थं ग्रीष्मसन्तापनिवारणार्थं आलिप्तं सचन्द्रं कर्पूरसहितं चन्दनं प्रियाणामाश्लेषे आलिङ्गने व्यवधानं अन्तरभूतं मत्वा अलं अत्यर्थं तप्ता दुःखिता भवन्ति। विषमालङ्कारः। २०॥

जीवनत्वमिति। अस्मिन्काले ग्रीष्मार्त्तौ प्राकृतैः पृथग्जनैरपि अपां जलानां जीवनत्वं जीवनभावं च वायोः जगत्प्राणत्वमेव " जीवनं भुवनं वनं " जगत्प्राणसमीरण इतिचामरः,

तमोनाशक मालोकदायिनं चापिवासरं ।
निन्दन्ति परमिच्छन्ति प्रदोषमपिजन्तवः । २२ ॥
अभुक्त सुन्दरीगण्ड गौरसुस्निग्ध मांसलं ।
पक्वचूत फलव्रातं चुम्बन्वेत्ति रसंजनः । २३ ॥
गात्रमार्जन वासोभि र्यत्नरक्तै र्विलासिनः ।
पिहिताविषयाविष्ट रागैरिव चकासति । २४ ॥

प्रव्यक्तं स्पष्टं चनुभूयते ज्ञायते। कृताधस्मिन् प्रायोजनानां जलवायुभ्यां तापशान्तिरिति तात्पर्य्यं । विरोधाभासः । २१ ॥

तम इति । जन्तवः प्राणिनः तमोनाशकं अन्धकारनिवर्त्तकं अज्ञाननिवर्त्तकञ्चेति गम्यते च आलोकदायिनं प्रकाश कारक-मपिज्ञानदायकञ्चेति गम्यते वासरं दिवसं निन्दन्ति प्रदोषं अपि प्रकृष्टदोषमपि रजनीमुखं परं केवलं इच्छन्ति अभिलषन्ति विभावनाविशेषोक्त्योः, सन्देहसङ्करः । २२ ॥

अभुक्तेति । जनः लोकः अभुक्ताया असम्भुक्तायाः सुन्दर्य्याः स्त्रियाः गण्डः कपोल इव गौरं सुस्निग्धं चिक्कणं च मांसलं पुष्टं पक्वचूतफलव्रातं परिणतरसाल फल कुलं चुम्बन् रसंस्वादं वेत्ति जानाति। चुम्बनेन रसमाकृष्य स्वादं जानातीत्यर्थः। उपमा । २३ ॥

गात्रेति । विलासिनः जनाः यत्नैः तैलनारिकेलजल प्रदानादिभिः प्रयत्नैः रक्तानि रक्तवर्णानि तैः गात्रमार्ज्जनार्थं शरीरसंस्कारार्थं यानि वासांसि वस्त्राणि तैः विषयेषु स्रक्चन्दन वनितादिषु आविष्टाः निविष्टा ये रागा अनुरागाः तैरिव पिहिता आच्छादिताः सन्तः चकासति शोभन्ते। उत्प्रेक्षा । अस्मिन् ऋतौ युवानः कृत्रिमरक्त गात्रमार्ज्जन वासांसि व्यवहरन्तीति प्रसिद्धं । २४ ॥

विलासिनामपूर्व्वोऽयं जातोतनु तनूनपात्।
शाम्यतुरष्णेन कौमुद्यादिभिः शीतैर्विदीप्यते। २५॥
चन्द्राश्मकुट्टिमे सौधोत्सङ्गे ज्योत्स्नासमुज्ज्वले।
यूथिकापीड़शोभिन्यः क्रीड़न्तुत्पललोचनाः। २६॥
दिगम्बरत्वमीशस्य स्तुत्वावध्वोनवा अपि।
मोचयन्ति मिथोवाते स्तनौकञ्चुक वन्धनात्। २७॥

विलासिनामिति। विलासिनां विलसनशीलानां अपूर्व्वः असाधारणः अयं अतनुः कामएव तनूनपात् अग्निः "जातवेदा स्तनूनपादित्यग्निपर्य्यायेऽमरः" जातः उष्णेन ग्रीष्मेण उष्णोपचारेण च शाम्यति शान्तोभवति शीतैः शीतलैः कौमुद्यादिभि चन्द्रिका प्रभृतिभिः विदीप्यते दीप्तोभवति। रूपक विरोधाभासौ। २५॥

चन्द्रेति। यूथिकानां तदाख्य कुसुमानां "पुष्पेजातीप्रभृतयः स्वलिङ्गां इत्यमरः" ये आपीड़ाः शेखराः "शिखास्वापीड़ शेखरावित्यमरः" तैः शोभन्त इति तथोक्ताः उत्पल लोचनाः स्त्रियः ज्योत्स्नाभिः चन्द्रिकाभिः समुज्ज्वले चन्द्राश्मकुट्टिमे चन्द्रकान्तमणिनिबद्धभूमि विशिष्टे सौधाना मट्टालिकानां उत्सङ्गे उपरिभागे क्रीड़न्तौ विहरन्ति। काव्यलिङ्गं। २६॥

दिगम्बरत्वमिति। नवा नवोढ़ा अपिवध्वः स्त्रियः ईशस्य शिवस्य दिगम्बरत्वं नग्नत्वं स्तुत्वा प्रशंस्य मिथः रहसिवाते पवनाभिमुखे स्तनौ कुचान् ( जात्याद्विवचनं ) स्तनादीनां प्रायेण द्वित्वविशिष्टाजातिः, कञ्चुकवन्धनात् कार्पासकबन्धात् मोचयन्ति कञ्चुकान् फिटयन्तीत्यर्थः। स्वभावोक्तिः। २७॥

पिपासुभिः प्रपाः पूर्णा द्विरेफैरपि यूथिकाः।
कासाराः कासरैः काकै रसालाश्च चकासति॥२८॥
प्रतिघाती निदाघोऽयं ध्वजवुद्ध्या स्मरस्य किं।
विध्वंसयति मीनानां कुलं शोषक हेतिभिः॥२९॥
अल्पाकृति र्बहुगुणो यूथिकाकुसुमोत्करः।
मूर्द्ध्नाधृतो जनैर्नार्च्चत्र स्त्रिदशैः किमु वामनः॥३०॥
सिधुरषो ग्रीष्मविश्लिष्ट विलासिं हृदयद्वयोः।
यूथिका कलिकाभान्ति मन्मथस्येव सूचिकाः॥३१॥

पिपासुभिरिति। प्रपाः पानीयशालिकाः पिपासुभिः तृषितैः पूर्णाः, यूथिका तदाख्यलताः द्विरेफैः भ्रमरैरपि पूर्णाः, कासाराः सरस्यः कासरै र्महिषैः पूर्णाः, च पुनः रसाला चूतवृक्षाः काकैः पूर्णाः चकासति शोभन्ते। प्रपापानीय शालिका "कासारः सरसी सरः" लुलापोमहिषोवाह द्विषत् कासर सैरिभाइति चामरः। तुल्ययोगिता। २८॥

प्रतिघातीति। प्रतिघाती प्रतिपक्षः स्मरस्येतिभावः अयं निदाघः ग्रीष्मर्त्तुः मीनानां मत्स्यानां कुलं समूहं स्मरस्य कामस्य ध्वजवुद्ध्या पताकाधिया शोषकाभिः शोषणसमर्थाभिः हेतिभिः अर्चिर्भिरेव आयुधैः विध्वंसयति विनाशयति किं। उत्प्रेचारूपके। २९॥

अल्पाकृतिरिति। अल्पाकृतिः ह्रस्वाकारः बहुगुणः अधिक सुगन्धः यूथिकाकुसुमोत्करः यूथीकुसुमसमूहः जनैः मूर्द्ध्ना मस्तकेन धृतः। वामनः वामनरूपेणावतीर्णो विष्णुः त्रिदशैः देवैः न अर्च्चः पूज्यः किमु पूज्य एवेत्यर्थः। दृष्टान्तः। ३०॥

सिधुरषोरिति। ग्रीष्मेण विश्लिष्टाः असंलग्नाः याः विला-सिनां विलसनशीलानां स्त्रीपुंसां याः हृदयश्रयः वक्षोयुगलानि

दीर्घाकारा इमे घस्रा घोररूपाः प्रतापनाः।
परिणाम सुखायान्ति दैत्यारा मइता इव। ३२॥
शीतोपचारनिरताः संतप्ता विरहे यथा।
नक्तं प्रियाप्रिवद्वातं मत्वाश्वस्ताः सचेतनाः।३३॥
स्वयं सन्तापसहनाः सज्जना इव पादपाः।
पान्थार्थिभ्यः प्रयच्छन्ति छायासम्पद मन्वहं। ३४॥

ताः सिष्णुरषोः सौवितुमिच्छो मंन्मथस्य कन्दर्पस्य सूचिका सूच्यइव युथिकाकलिका युथीकोरका भान्ति शोभन्ते उत्प्रेक्षा। ३१॥

दीर्घाकारा इति। दीर्घाकारा दीर्घीभूता दीर्घाकृतयश्च घोररूपाः भयङ्कर स्वरूपाः प्रतापनाः परितापकाः एतानि विशेषणान्यपि दैत्यपक्षे योज्यानि इमे एते ग्रीष्मकालीनाः घस्रा दिवसाः 'घस्रोदिनाहनीवातु क्लीवेदिवसवासरावित्यमरः' रामेण दाशरथिना हता व्यापादिता दैत्या असुराः कुम्भकर्णादय इव परिणामे शेषावस्थायां सुखा सुखकरा अन्यत्र परिणामे सुखं आनन्दः येषां तथोक्ताः वैकुण्ठगामित्वादितिभावः यान्ति गच्छन्ति, उपमा। ३२॥

शीतेति। विरहे यथा विरहावस्थायामिव सन्तप्ताः स्वं ज्वरिताः शीतोपचारनिरताः जलादि शीतलोपचारतत्पराः सचेतनाः प्राणिनः नक्तं रात्रौ वातं पवनं प्रियाप्रिवत् प्रियागमिव मत्वा ज्ञात्वा आश्वस्ताः शान्ततापा भवन्तीतिशेषः उपमा।३३॥

स्वयमिति। स्वयं सन्तापसहनाः तापसहिष्णवः पादपा वृक्षाः सज्जना इव पान्थाः पथिका अर्थिनो याचकाइव तेभ्यः छाया सम्पदिव तां अन्वहं प्रतिदिवसं प्रयच्छन्ति ददति उपमा। ३४॥

वनस्थली तपेपत्यौ नवरागमिवस्फुटं
पाटली पटलं धत्ते पुष्पभार नतत्त्वपं। ३५॥
प्रियाप्तिमुत्पयः पूर वारितोष्णेन विष्णुना।
एव मालापपीयूषैः सिञ्चता सुहृदौ ययै। ३६॥
गच्छता हरिणामार्गे प्रवासेषुमहिषीततेः।
अतुरष्णता यथाशङ्कि न यीष्मा गमस्य च। ३७॥
ससप्त महिषीमान ग्रन्थिभेद पटुन् विधुः।
चाटून् विरचयन् मार्गान् नविवेद विलङ्घितान्। ३८॥

वनस्थलीति। वनस्थली वनभूमिः पुष्पभारैः नता नम्राः त्वुपाः ह्रस्वशाखाः यस्य तत् पाटलीनां वृक्षविशेषाणां पटलं समूहं तपे ग्रीष्म एव पत्यौ स्वामिनि विषये स्फुटं प्रव्यक्तं नवरागं नूतनानुरागमिवधत्ते धारयति। रूपकोत्प्रेक्षे। ३५॥

प्रियेति। प्रियाप्तया लक्ष्मणा प्राप्तया या मुदः ता एव पयांसि जलानि तेषां पूरेण प्रवाहेण वारितः उष्णः ग्रीष्मः यस्य तथोक्तेन आनन्दातिशयात् ग्रीष्ममननुभवता विष्णुना श्रीकृष्णेन एवं पूर्वोक्तैः आलापैरेवपीयुषैरमृतैः सुहृदौ मित्रे धनञ्जय युयुधानौ सिञ्चता सता ययै प्रतस्थे। रूपकं। ३६॥

गच्छतेति। मार्गे गच्छता हरिणा श्रीकृष्णेन महिषीततेः रुक्मिण्यादि महिषीसप्तकस्य श्वासेषु विरहजनित निःश्वासेषु यथा यादृशी अतुरष्णता उष्णातिशयः अशङ्कि तर्किता। उष्णागमस्य ग्रीष्मकालस्य तथा तादृशी अतुरष्णता नाशङ्कि। ग्रीष्मकालापेक्षया श्रीकृष्णस्य तर्कितमहिषीविरहश्वासोष्णत्वं दुःसहमभूदितिभावः। व्यतिरेकः। ३७॥

स इति। सः विधुः श्रीकृष्णः सप्तमहिषीणां रुक्मिण्यादीनां मानःप्रवासजनित एव ग्रन्थिः तस्य भेदे छेदने पटून् समर्थान्

द्वारकां वहिरुद्याने यानेनाति जवेनसः।
पूर्व्वं प्रविश्य दूतैः किं कम्बुनादैरनन्दयत्। ३९ ॥
पाञ्चजन्योनदन् राजकर्मचारीव किंकरैः।
मण्डयित्वा पुरीं लोकान् चकारालोकनोत्सुकान् ॥
प्रवासादागतं कान्तं श्रुत्वात्मानं विभूष्यसा।
महोल्लासा धृतोत्कण्ठा द्वारका समपैक्षत। ४१ ॥
पतिं प्रत्युद्गते सैन्ये सवादित्रेऽत्र मद्रजा।
गर्ज्जता सागरेणायं समुद्यातः किमित्यवैत्। ४२ ॥

चाटून् प्रियोक्तीः विरचयन् विभावयन् सन् विलङ्घितानतिक्रान्तान् मार्गान् अध्वनः नविवेद ज्ञातवान्। काव्यलिङ्गं। ३८।

द्वारकामिति। सः श्रीकृष्णः अतिजवेन वेगवता यानेन रथेन वहिरुद्याने वाह्योपवने द्वारकाया इतिशेषः पूर्व्वं प्रथमं प्रविश्य कम्बुनादैः पाञ्चजन्यशब्दैः दूतैः किं द्वारकां नगरीं अनन्दयत् नन्दयामास। पाञ्चजन्यशब्देन द्वारकावासिनो जहृषुरितिभावः। उत्प्रेक्षा। ३९ ॥

पाञ्चजन्य इति। राजकर्मचारीव राज्ञः प्रधानकर्मकरइव नदन् शब्दं कुर्व्वन् सशब्दमादेशय न्नित्यर्थः पाञ्चजन्यः विष्णुशङ्खः किंकरैः भृत्यैः पुरीं द्वारकां मण्डयित्वा रम्भापूर्णकुम्भ तोरणपताकादिभिरलङ्कृत्य लोकान् तत्रत्यान् जनान् विलोकनोत्सुकान् श्रीकृष्णादर्शनोत्कण्ठितान् चकारः। पाञ्चजन्यशब्दं श्रुत्वा द्वारकावासिनः उत्सुकाः सन्तः पुर्य्यां मङ्गलप्रसाधनानि चक्रुरितिभावः। उपमा। ४०।

प्रवासादिति। सा द्वारका कान्तं पतिं श्रीकृष्णं प्रवासादागतं श्रुत्वा महोल्लासा अत्यानन्दिता आत्मानं विभूष्य मङ्गल प्रसाधनैरलङ्कृत्य धृतोत्कण्ठा कृष्णादर्शनोत्कण्ठिता सती समपैक्षत श्रीकृष्णमपेक्षाञ्चकार। अतिशयोक्तिः। ४१ ॥

सेर्ष्याहर्षा महिष्यस्ताः द्रष्टुं तौ नवदम्पती ।
यानारूढ़ा यदुस्त्रीभिः सार्व्वभौमश्रियाययुः । ४३ ॥
सामन्तामात्य सहिता यदवः सपुरोहिताः ।
शिवं सोममिवामर्त्त्या नवजानिंत मुदययुः । ४४ ॥
वारमुख्यासु वादेषु नृत्यन्तीषु नदत्सुसः ।
विप्राणां मङ्गलं चार्घ्यं स्तुतोबन्दिभिरग्रहीत् ।४५

पतिमिति। अत्र बाह्योपवने मद्रजा लक्ष्मणा सवादित्रे मङ्गलवाद्यसहिते सैन्ये यदुसेनायां पतिं श्रीकृष्णं प्रत्युद्गते प्रत्युद्गयाते सति अयं श्रीकृष्णः गर्जता शब्दं कुर्व्वता सागरेण समुद्रेण समुद्यातः मम्नानार्थं उद्गतः किं इति अवैत् तर्कयामास उत्प्रेक्षा। सशब्दः समुद्रइव यदुसेना श्रीकृष्णं प्रत्युज्जगामेति भावः । ४२ ॥

सेर्ष्येति। सेर्ष्याहर्षाः पत्युः पत्न्यन्तरग्रहणजनिताभ्यसूयया पत्यागमनजनितेनानन्देन च सहिता युक्ताः ताः महिष्यः रुक्मिण्यादयः तौ नवदम्पती नूतनजायापती लक्ष्मणा श्रीकृष्णौ द्रष्टुं यदुस्त्रीभिः सह यानारूढ़ाः सत्यः सार्वभौमश्रिया छत्रचामरादि साम्राज्ञी लक्ष्मा उपलक्षिता ययुः । ४३ ॥

सामन्तेति। सामन्तामात्यसहिताः सपुरोहिताः यदवो वृष्णयः सोमं उमासहितं शिवं अमर्त्त्या देवाइव नवजानिं नवा नूतना जया यस्य तथोक्तं तं श्रीकृष्णं उदययुः द्रष्टुमुद्जग्मुः । उपमा । ४४ ॥

वारमुख्यास्विति। वारमुख्यासु वाराङ्गनासु नृत्यन्तीषु सतीषु वाद्येषु नदत्सु शब्दायमानेषु सत्सु सः श्रीकृष्णः बन्दिभिः स्तुतिपाठकैः स्तुतः सन् विप्राणां ब्राह्मणानां मङ्गलं मङ्गलारोपणं अर्घ्यञ्चाग्रहीत् । यथा संख्यालङ्कारः । ४५ ।

दम्पत्योः सपरीहासं यदुवध्वः प्रदीपकैः ।
मुदासो लूलुनिनदं वन्दनां विदधुस्तयोः । ४६ ॥
हर्षवातेरिताः पौर हर्म्म्यनारी लताहरिं ।
बाहुशाखा विहत्योच्चै र्लाजपुष्पैरवाकिरन् । ४७ ॥
द्वारकायां समृद्धायां प्रतिद्वारं पुरौकसां ।
पतुरेतत् गृहं मेस्यादिति मातुराश्रभून्मतिः । ४८ ।
नत्वालिङ्ग्य शिषः कृत्वा पृष्ट्वास्मित्वा विलोकयन् ।
यथोचितं सुहृदामन्ये जगामालयमच्युतः । ४९ ॥

दम्पत्योरिति । यदुवध्वः यदुस्त्रियोरेवत्यादयः सपरिहासं सोलूलुनिनदं उलूलुध्वनिसहितं यथा तथा तयोः दम्पत्योः लक्ष्मणाकृष्णयोः वन्दनां नीराजनां प्रदीपकैः मुदा आनन्देन विदधुः चक्रुः । ४६ ॥

हर्षेति । हर्ष आनन्द एव वातः तेन ईरिताः प्रेरिताः पौरहर्म्म्य नार्य्यः नगरस्थसौधस्थितस्त्रिय एव लताः बाहुनेव शाखाः वितत्य विस्तार्य्य लाजा एव पुष्पाणि तैः हरिं श्रीकृष्णं उच्चैः अवाकिरन् । रूपकं । ४७ ॥

द्वारकायामिति । समृद्धायां सर्व्वसम्पत्पूर्णायां द्वारकायां पुरौकसां पुरवासिनां प्रतिद्वारं सर्व्वेषु द्वारेषु मातुः लक्ष्मणायाः मे ममपतुः श्रीकृष्णस्य एतत् गृहं स्यादृवेदिति मतिः बुद्धिः अभूत् । अतिशयोक्तिः । एतेन द्वारकागृहाणां राजगृहोपमत्वं व्यज्यते । ४८ ॥

नत्वेति । अच्युतः श्रीकृष्णः नत्वा मान्यान् प्रणम्य आलिङ्ग्य सुहृदो परिष्वज्य आशिष आशीर्व्वादान् कृत्वा तदर्हैः प्रियैरर्थैः पृष्ट्वा अनामय प्रश्नं कृत्वा स्मित्वा मन्दहासेन सम्भाष्य भृत्याश्रितविशेषः विलोक्य दृष्ट्वा दूतरान् दृष्ट्वा सम्भाव्ये-

स्वर्णप्रभेन्द्रमणिकान्ति शिरोरुहेयं
सत्पद्मराग सुषमौष्ठ पुटास्मिताभां ।
संविभ्रती स्फटिकदीप्ति मलं कृताङ्गी
द्वारावती तिलकमाप्य हरिं चकाशे । ५० ॥

निपीड्य पित्रोश्चरणान् सताभ्यां
दृढोपपीडं परिलिङ्गितश्च ।
प्रेमाश्रुसेकं परिनन्द्य मूर्द्धि
घ्रातः सदारः स्वगृहे मुदास्त । ५१ ॥

त्यर्थः यथोचितं यथायोग्यं एतद्विशेषणं सर्वास्वप्रधानक्रियासु योज्यं सैन्यैः सह मुदा आनन्देन आलयं गृहं जगाम । दीपकं । ४९ ॥

स्वर्णेति । स्वर्णैः प्रभाकान्तिर्यस्या अन्यत्र स्वर्णतुल्यकान्तिः इन्द्रमणिकान्तयः नीलमणि द्युतय एव शिरोरुहाः केशा यस्याः सा अन्यत्र नीलमणितुल्यशोभकेशा सत्पद्मरागाणांमाणिक्यानां सुषमा शोभैव ओष्ठपुटौ यस्याः सा अन्यत्र पद्मरागसमान शोभाधरा स्मिताभां स्मिततुल्यां स्फटिकदीप्तिं स्फटिकमणिकान्तिं अन्यत्र स्फटिकसेव्यदीप्तिर्यस्याः तां स्मिताभां मन्दहासशोभां संविभ्रती दधाना अलङ्कृताङ्गी द्वारावती द्वारका हरिं श्रीकृष्णं तिलकं श्रेष्ठं स्यासकञ्च आप्य प्राप्य चकाशे शुशुभे । भगवान् द्वारकास्थो वभूवेत्यर्थः । समासोक्तिः; वसन्ततिलकं वृत्तं । ५० ॥

निपीड्येति । सः श्रीकृष्णः पित्रोः देवकीवसुदेवयोः चरणान् सदारः लक्ष्मणासहितः सन्निपीड्य अभिवन्द्य ताभ्यां पितृभ्यां दृढोपपीडं गाढं यथा तथा परिलिङ्गितः च पुनः प्रेमाश्रुसेकं आनन्दाश्रुसेचन पूर्व्वकं परिनन्द्य मूर्द्धि घ्रातः आघ्रातः सन् स्वगृहे मुदा आनन्देन आस्त अतिष्ठत । ५१ ॥

योऽभूद्दिष्णुरथस्य चित्ररचनादक्षस्य तूर्णं कवे
र्धीरः श्रीभुवनेश्वरः सुविदुषा मग्रस्य पुत्रोरथः।
तस्य श्रीमतो लक्ष्मणा परिणये काव्येरकृतावष्टमः
सर्गः कृष्णगृहाष्टकाप्तिरगमत् कृष्णस्मृतिं कुर्वतः।५२

अष्टमः सर्गः समाप्तः।

य इति। कृष्णस्मृतिं कुर्व्वतः श्रीकृष्णं स्मरतस्तस्य काव्ये कृष्णस्य श्रीकृष्णस्य गृहाणां दाराणां यत् अष्टकं अष्टसमष्टिः तस्याप्तिः प्राप्तिर्वर्ण्यते यस्मिन्सोऽष्टमः सर्गः अगमत् गतः समाप्त इत्यर्थः।५२॥

इति श्री लक्ष्मणा परिणय व्याख्यायामष्टमः सर्गः समाप्तः।





## नवमः सर्गः ।



अथ तत्र मद्रतनया युगायिताः

कतियामिनीरतिगमय्य योषितां ।

कुचपीड़कं पतिकरं निपीड़ितुं

गणकैरवाप गणितं दिनं मुदा । १ ॥

महभूमसप्तपरिणीय तिष्ठतो

महिषीर्विभोर्नववधूपरोधतः ।

परिशेष एष इति शेषभौमनि

स्थितिमुत्सवोऽप्युपयमेऽत्र लब्धवान् । २ ॥

अथेति । अथ गृह प्रवेशानन्तरं तत्र द्वारकायां मद्रतनया लक्ष्मणा युगायिताः कान्तसङ्गमाभावाद्युगमिव प्रतीयमानाः कति काश्चित् यामिनीः रात्रीः अतिगमय्य यापयित्वा योषितां रुक्मिण्यादीनां कुचपीड़कं स्तनमर्द्दनदक्षं पतिकरं श्रीकृष्णस्य पाणिं निपीड़ितुं ग्रहितुं परिणेतुमित्यर्थः गणकैः दैवज्ञैः गणितं स्थिरीकृतं दिनं दिवसं मुदा आनन्देन अवाप । उपमा काव्यलिङ्ग । प्रायः सर्गेऽस्मिन् मञ्जुभाषिणीवृत्तं । सजसाजगौचयदिअञ्जुभाषिणीति लक्षणात् । १ ॥

महभूमिति । सप्तमहिषीः रुक्मिण्यादीः महभूम उत्सववाहुल्यं यथा तथा परिणीय उपयम्य तिष्ठतः स्थितस्य विभोः श्रीकृष्णस्य अत्र उपयमे विवाहे उत्सवः नववध्वा लक्ष्मणायाः उपरोधतः अनुरोधात् एषः विवाहः परिशेषः शेषिक

नवमङ्गल स्नपनधौतमत्यङ्ह
प्रियसङ्गविघ्नदमपास्य लक्ष्मणा।
परिधाय पीतवसनं च भाविनं
पतिवाससोऽपिशुनय द्विपर्य्ययं। ३॥
सुदती प्रसाधनविधौ विभूषणै
र्नतथा मुदं गतवती तदा यथा।
प्रियसंकथामृतरसाभि संप्लुतैः
परिहासभाषितचयै र्यदुस्त्रियां। ४॥

इति च श्रेयःसीमनि काष्ठायां स्थितिं अवस्थानं लब्धवान् प्राप। लक्ष्मणापरिणयोत्सवः सर्वोत्कृष्टो बभूवेत्यर्थः। काव्यलिङ्गं।२॥

नवेति। लक्ष्मणा प्रियस्य श्रीकृष्णस्य सङ्गे संसर्गे विघ्नदं विघ्नकारकं अत्यंह्ह अधिकपापं नवमङ्गलस्नपनेन विवाह प्राक्कालीनमङ्गलस्नानेन धौतं क्षालितं सत् अपास्य त्यक्त्वा च पीतवसनं परिधाय मङ्गलकरत्वादितिभावः भाविनं भविष्यन्तं पतिवाससः श्रीकृष्णवसनस्य पीतत्वेऽरत्यर्थः विपर्य्ययं वैपरीत्यं सुरतोत्सवेषु स्वेन भ्रमात् धारणं अपिशुनयत् असूचयत्। उत्प्रेक्षा। ३॥

सुदतीति। तदा सुदती लक्ष्मणा प्रसाधनविधौ परिकर्मानुष्ठाने यस्य श्रीकृष्णस्य सङ्कथामृतरसैः चरितामृतैः अभिसंप्लुतानि सर्व्वतोभावेन सम्पृक्तानि तैः यदुस्त्रियां रेवत्यादीनां परिहास-भाषितचयैः परिहासवचनसमूहैः यथा मुदं आनन्दं गतवती प्राप विभूषणैराभरणैः तथा न। तस्या भूषणपरिग्रहानन्दात्परिहासजनितानन्दोऽधिकोबभूव। काव्यलिङ्गं। ४॥

सगृहात्मज प्रकृतिना कुशस्थली
समुपेयुषोपयम मण्डपे मुदा।
स्वसुतां त्रयीमिव महीसुपर्व्वणो
हरयेददौ सविधि मद्रभूभृता। ५॥

सनिसर्गकामकमनीय विग्रहो
वरवेश पेशलतरोऽनिमेषकान्।
जनताक्षि मीननिवहानमन्दयत्
सुषमामृताविरत वर्षणैर्हरिः। ६॥

प्रतिगृह्य मुग्धयुवती ततेः करं
तमदात्स्वयं त्रिभुवनैक सुन्दरः।

सगृहेति। सगृहात्मजप्रकृतिना कलत्रपुत्रमन्त्र्यादिभिः सहितेन कुशस्थलीं द्वारकां समुपेयुषा उपगतवता मद्रभूभृता बृहत्सेनेन स्वसुतां उपयममण्डपे विवाहवेदिकायां महीसुपर्व्वणो ब्राह्मणाय त्रयीं त्रिवेदीमिव हरये श्रीकृष्णाय सविधि विधिपूर्व्वकं मुदा आनन्देन ददौ दत्तवान्। उपमा। ५॥

सइति। निसर्गेण स्वभावेन कामकमनीयविग्रहः कन्दर्प सुन्दरशरीरः वरवेशेन वैवाहिकनेपथ्येन पेशलतरः अतिसुन्दरः सः हरिः श्रीकृष्णः इन्द्रस्य अनिमेषकान् विस्मयेन स्वभावेन च निर्निमेषान् जनतायाः जनसमूहस्य अक्षिणि नेत्राण्येवमीनाः तेषां निवहान् समूहान् सुषमामृतानां परमशोभाजलानां अवि-रतवर्षणैः सततवृष्टिभिः अमन्दयत् आनन्दयामास। रूपकं।६॥

प्रतिगृह्येति। त्रिभुवनैकसुन्दरः त्रिलोक्यामद्वितीयसुन्दरः श्रीकृष्णः मुग्धानां सुन्दरीणां युवतीनां रुक्मिण्यादीनां ततेः समूहस्य समूहाच्च करं हस्तं बलिञ्च बलिहस्तांशुवः करा

तदथात्र मद्रदुहितुर्यतस्स्फुटा
परमाभिजातगणचक्रवर्त्तिता। ७॥
महदद्भुतं सुतनुपाणिपङ्कजं
शशिकान्त एव करयोगतोविधोः।
समुपोढभाव जडमच्चरद्यत
त्रपयाश्रमाम्बुशिशिरत्वकैतवात्। ८॥
प्रिययासमं हुतवहं प्रदक्षिणं
सपरिक्रमन् कनकशैलपार्श्वतः।
भ्रमतः प्रभापरिगतस्य भास्वतः
श्रियमाप्य लाजमजुहोद्विधानतः। ९॥

इत्थमरः प्रतिगृह्य गृहीला अथ तं करं तत् हेतोः स्वयं चदात् दत्तवान् लक्ष्मणाया इतिशेषः, यतः हेतोः मद्रदुहितुः लक्ष्मणायाः परमाभिजातगणे उत्कृष्टसुन्दरसमूहे चक्रवर्त्तिता मण्डलेश्वरत्वं अत्र जगति स्फुटा व्यक्ता आसीदितिशेषः यथा राजा प्रजाभ्यः करं गृहीला मण्डलेश्वराय ददाति तद्वदिति भावः। काव्यलिङ्गं। ७।

महदिति। सुतनोः लक्ष्मणायाः पाणिपङ्कजं शशिकान्त एव चन्द्रकान्तमणिः एव एतन्महदद्भुतं अत्याश्चर्यं, यतः विधोः श्रीकृष्णस्य चन्द्रस्य च करयोगतः हस्तयोगात् किरणयोगाच्च समुपोढभावेन सञ्जातानुरागेण जडं सत् त्रपया लज्जया श्रमाम्बुशिशिरत्वकैतवात् स्वेदशैत्यव्याजात् अच्चरत् अगलत् पद्मस्य चन्द्रकान्तत्वे महदाश्चर्यमित्यर्थः। रूपकं। ८॥

प्रिययेति। "सः" श्रीकृष्णः प्रियया लक्ष्मणाया समं सह हुतवहं वैवाहिकाग्निं प्रदक्षिणं परिक्रमन् कनकशैलस्य मेरोः पार्श्वतः समीपेषु भ्रमतः प्रभापरिगतस्य प्रभायुक्तस्य भास्वतः

नवयौवनो दयवती वधूः पतिः
सतुनित्यनूतन उभौ शरीरिणां।
प्रतिपाद्य नव्य मुदमुत्सुकौमिथः
परिजग्मतुर्निशि नवीन सङ्गमं। १०॥
दयिताहमुत्तमतरा परं हरे
रितिकानतस्य महिषीषुमन्यत।
सकलास्तताः प्रियसखीत्वमागता
इतरेतरं प्रियतमं सिषेविरे। ११॥
महिषी भिरष्टभिरिवाथ भूतिभिः
सनिषेवितुं धृततनूभिराहतः।

सूर्य्यस्य श्रियं शोभां आप्य प्राप्य लाजं लाजां विधानतः विधिपूर्व्वकं अजुहोत् जुहाव। निदर्शना। ९॥

नवेति वधूः। लक्ष्मणा नवयौवनोदयवती नवयुवतिः, पतिः सः श्रीकृष्णस्तु नित्यनूतनः सर्व्वदानवीन इव प्रतीयमानः सौन्दर्य्यातिरेकादितिभावः। उभौ दम्पती शरीरिणां प्राणिनां नव्यमुदं नवीनानन्दं प्रतिपाद्य जनयित्वा मिथः अन्योऽन्यं उत्सुकौ उत्कण्ठितौ सन्तौ निशि रात्रौ नवीनसङ्गमं नवसम्भोगं परिजग्मतुः प्रापतुः। १०॥

दयितेति। तस्य श्रीकृष्णस्य महिषीषु मध्ये का "हरेः श्रीकृष्णस्य अहं परं केवलं उत्तमतरा उत्कृष्टा दयिता प्रिया नान्यानेत्यर्थ" इति एवं रूपेण न अमन्यत सर्वाअपि अमन्यन्ति। च किन्तु ताः सकला रहिष्य इतरेतरं अन्योऽन्यं प्रियसखीत्वं प्रियवयस्यात्वं आगताः प्राप्ताः सत्यः प्रियतमं नायकं श्रीकृष्णं सिषेविरे। अतिशयोक्तिः। ११॥

महिषीभिरिति। निषेवितुं उपासितुं धृततनूभिः शरीरधारिणीभिः भूतिभिः विभूतिभिरिव, अष्टाभिः महिषीभिः

परमेश्वरो निखिलकालरूपधृक्
वसुभागभागिव दिवानिशं बभौ ।१२॥
युगपन्नरासद्दव तास्ववर्त्तत
प्रमदासु वारविधिनापिनोविधुः ।
पृथगालयस्थिति जुषोऽपिताःच्चणं
विरहं कृताष्टवपुषोऽस्यनोययुः । १३ ॥
हरदग्ध मूर्त्तिरतनुः शमाय किं
सुषमामृताब्धि मधितिष्ठतिप्रियं ।
इतियन्‌विधोः प्रियतमाभिरूहितं
फलतोमनाक्‌ व्यभिचचारतन्नो ।१४॥

आवृतः वेष्टितः निखिल कालरूपधृक् समस्तकालस्वरूपः सः परमेश्वरः वसुभागभाक् अष्टभागविशिष्टं दिवानिशं अहोरात्र-मिव बभौ शुशुभे । उत्प्रेक्षोपमे । १२ ॥

युगपदिति । विधुः श्रीकृष्णः तासु प्रमदासु रुक्मिण्यादिषु रासे रासक्रीड़ायामिव युगपत् समकालं न अवर्त्तत । वार-विधिना वारक्रमेणापि न अवर्त्तत । किन्तु पृथगालयस्थितिजुषः विभिन्नान्तःपुरवर्त्तिन्योऽपि ताः प्रमदाः कृताष्टवपुषः विर-चिताष्टमूर्त्तेः अस्य श्रीकृष्णस्य विरहं विच्छेदं च्चणमपि नो ययुः प्रापुः । काव्यलिङ्गं । १३ ॥

हरेति । हरेण दग्धा मूर्त्तिः देहः यस्य तथोक्तः अतनुः कामः शमाय दाहशान्त्यर्थं सुषमामृताब्धिं शोभामृतसमुद्रं प्रियं श्रीकृष्णं अधितिष्ठति अधिवसति किं ? इति एवं प्रकारेण विधोः श्रीकृष्णस्य प्रियतमाभिः रुक्मिण्यादिभिः ऊहितं तर्कितं यत्‌ तत्‌ तर्कणं फलतः परिणतौ नव्यभिचचार व्यभिचारी न बभूव ताः श्रीकृष्णात्‌ पूर्णकाम सुखमनुबभूवुः मदनश्च पुत्र रूपेण कृष्णात्प्रादुर्बभूव इतिच भावः । रूपकं । १४ ॥

जनयन् मनोजमवरोधमण्डले
ललितै र्विलासविभवै रहर्निशं ।
प्रियतापयोभिरभिपोष्य केशवो
विजहार हर्षवर हर्म्यसुस्थिते । १५ ॥

प्रमदासुदासइव वासवानुजो
व्यवहृत्य राजतनुजा स्वराजत ।
इति यन्नचित्र मपहृत्य गोपिका
वसनानुरदूढ़वति तत्र लेशतः । १६ ॥

दयितार्पिताष्टवपुरेष केशवः
सुरते दिगम्बरउमार्द्ध मीश्वरं ।

जनयन्निति । केशवः श्रीकृष्णः हर्षे आनन्द एव वरहर्म्यं र सुस्थितं सुस्थं तस्मिन् अवरोधमण्डले अन्तःपुरस्त्रीसमूहे ललितै र्मनोहरैः विलासविभवै र्विभ्रमातिशयैः स्मितकटाक्षादिभिः अहर्निशं मनोजं कामं जनयन् प्रियतापयोभिः प्रेमच्चीरैः "प्रेमाना प्रियता हार्दमित्यमरः" अभिपोष्य पोषयित्वा विजहार चिक्रीड़ । यथा लोकेजातं पुत्रं प्रथमतःपयःपानेन पोषयन्ति तद्वदितिभावः । रूपकं । १५ ॥

प्रमदास्विति । वासवानुजो उपेन्द्रः श्रीकृष्णइत्यर्थः राजतनुजासु राजपुत्रीषु प्रमदासु रुक्मिण्यादिषु दासइव भृत्यइव व्यवहृत्य व्यवहारं कृत्वा अराजत अशोभत इति यत् दासवद्वर्त्तनं तत् गोपिकावसनानि गोपाङ्गनावस्त्राणि अपहृत्य चोरयित्वा उदूढ़वति धृतवति तत्र तस्मिन् श्रीकृष्णे लेशतः स्वल्पमपि चित्रं न । उपमा काव्यलिङ्गं । १६ ॥

दयितेति । दयितासु रुक्मिण्यादिषु अर्पितानि अष्टौ वपूंषि येन तथोक्तः एषः केशवः सुरते दिगम्बरः अम्बरशून्यः सन् उमार्द्धं अर्द्धनारीकं ईश्वरं शिवं प्रविजित्य निर्जित्य तं शिवं

प्रविजित्य चन्द्रसकलाभपाणिज-
क्षतभाक् प्रियाकुचनिभान्ममर्द्द तं ।१७॥
गणनातिग ब्रजवधू मनोरथाधिक-
सौख्यदो नवकिशोर एषयः।
सयुवाष्ट पट्टमहिषी रतोदये
ष्वतिरासहर्ष सुधयाव्यपीप्लवत्।१८॥
वनितागणेन वसतोविधोस्तदा
लववन्निशाः क्षपयतास्मरक्रतुं।
विततं विधातुमिव सत्पुरोहितो
जलदातपत्र रुचिरायथाहृतुः।१९॥

चन्द्रशकलाभं चन्द्रखण्डशोभं पाणिजक्षतं नखक्षतचिह्नं भजतीति तथोक्तस्य प्रियाकुचस्य महिषीस्तनस्य निभात् कपटात् ममर्द्द अमर्द्दयत्। उपमा सापह्नवोत्प्रेक्षे। १७॥

गणनेति। य एषः श्रीकृष्णः नवकिशोरः नवीनकिशोरवयस्कः सन् गणनातिगानां असंख्यानां ब्रजवधूनां मनोरथात् अभिलषिततादपि अधिकसौख्यदः अतिसुखप्रदः आसीदितिशेषः युवा युवकः सः रतोदयेषु सुरतारम्भेषु रासमतिक्रान्तः अतिरासः रासानन्दादप्यधिकः योहर्षः आनन्दः स एव सुधा अमृतं तया अष्टपट्टमहिषीः अष्टसंख्यका ए रुक्मिण्यादीः व्यपिप्लवत् प्लावयामास, काव्यलिङ्गं, योवह्नीनामानन्दकः सोऽष्टसंख्यकानां नितरामानन्दक इति तात्पर्य्यं। १८॥

वनितेति। तदा निशा रात्रयः लववत् निमेषमिव क्षपयता यापयिता वनितागणेन रुक्मिण्यादिदेवीवृन्देन सह वसतः विधोः श्रीकृष्णस्य स्मरक्रतुं कामयागं सुरतमित्यर्थः विततं विस्तारितं विधातुं सत्पुरोहितः समीचीनपुरोधाइव जलदा एव आतपत्रं छत्रं तेन रुचिः शोभा यस्य तादृशः ऋतुः

भुवनेमनोजइव मन्मथोघनो
जनकं निदाघ मुदमर्हयदयतः।
विहितास्य कामसखता प्रजासृजा
समधर्मिणोर्हि सखिता विराजते ।२०॥
सुजनोयथा खलकुले बलोत्तरे
रविरम्बरेऽभ्रवति लीनतां ययौ।
दिवसादवाप्य मदनोऽपितीक्ष्णतां
समतापयन् खलुविलासि मण्डलं ।२१॥

वर्षर्त्तुः आययौ प्रादुर्बभूव। रूपकोपमोत्प्रेक्षाः, कामोद्दीपकोऽयमृतुरितिभावः । १९ ॥

भुवन इति । भुवने जगति मनोजः मनःसम्भूतः कामः मन्मथः मनोमन्थनकारीव घनो मेघः जनकं स्वोत्पादकं निदाघं ग्रीष्मं "ग्रीष्मोत्तापेन धूमादय एकीभूय मेघा भवन्तीति शास्त्रात् उदमर्हयत् अनाशयदयतः, अतः प्रजासृजा देवेन अस्य घनस्य कामसखता कन्दर्पमित्रता विहिता निर्द्धारिता। हि समधर्म्मिणो तुल्य धर्म्मविशिष्टयोः सखिता मित्रत्वं विराजते शोभते। जनकनाशकत्वेन कामघनयोः उद्दीप्यो द्दीपकभाव रूप मित्रत्व सुचितमितिभावः। उपमोत्प्रेक्षार्थान्तरन्यासाः ।२०॥

सुजन इति। वलोत्तरे प्रबले खलकुले दुष्टसमूहे सुजनो यथा सज्जन इव रविः सूर्य्यः अभ्रवति मेघाच्छन्ने अम्बरे आकाशे लीनतां अदृश्यत्वं ययौ प्राप। मदनः कामोऽपि दिवसात् दिनात् एतत् पूर्व्वस्मादित्यर्थः तीक्ष्णतां तीव्रभावं अवाप्य प्राप्य विलासिमण्डलं रसिकसमूहं समतापयत्-सन्तापयामास खलु। ऋतावस्मिन् दिवसानां सन्तापहरत्वं कामस्य सन्तापदायकत्वमितिभावः। उपमोत्प्रेक्षे। २१।

मुहुरुन्मिषत्तड़िदुदग्र लोचनाः
प्रकटय्य दन्तसदृशौ बकावलीः।
कृतघर्घर ध्वनिरलं नवोदितः
पथिकैरतर्कि जलदोऽर्कि कासरः।२२॥
सुरचाप चित्रित पयोमुचोऽङ्कवत्
समुदूह्य बर्हमिह केकिमण्डलं।
धृत शङ्खचक्रमुख लक्षणोहरेः
परयामुदेव भजतां गणोऽस्फुटन्।२३॥
प्रमदाश्रु णीव हरिभक्त सन्तते
स्तनुधारया विगलितेन वाम्भसि।

मुहुरिति। मुहुः वारम्वारं उन्मिषन्ति उन्मेषितानि तड़ितो विद्युत उदग्राणि भयङ्कराणि लोचनानि चक्षुंषीव यस्य तथोक्तः दन्तसदृशी दशनतुल्या बकावलीः बकपंक्तिः प्रकटय्य प्रकाश्य अलं अत्यर्थं कृतः घर्घर ध्वनिः येन तथोक्तः नवोदितः जलदो मेघः पथिकैः अर्के यमस्य कासरः महिषः वाहनभूतः अतर्कि। उपमाभ्रान्तिमन्तौ। २२।

सुरेति। इह ऋतौ केकिमण्डलं मयूरकुलं हरेः विष्णोः धृतानि तिलकरूपेण देहे न्यस्तानि शङ्खचक्रमुखानि लक्षणानि चिह्नानि येन तथोक्तः सापेक्षत्वेऽपिगमकत्वात्समासः। विष्णोः शङ्खादिलक्षणानि तिलकरूपेण बिभ्रत् भजतां भक्तानांगण इव सुरचापेन इन्द्रधनुषाचित्रितस्य पयोमुचो मेघस्य अङ्कवत् चिह्नमिव स्वं स्वकीयं वर्हं पिच्छं उदूह्य उर्द्धं धृत्वा परया मुदा परमेण आनन्देन अनटत् ननर्त। उपमा। २३॥

प्रमदेति। नवाम्भसि नवोदके हरिभक्तसन्ततिः विष्णुभक्तवृन्दस्य प्रमदाश्रुणि आनन्दवाष्पे इव तनुधारया सूक्ष्मधाराभिः

हृदि इद्ध सत्व इव खेऽभ्रमांसले
रजसोऽततिः प्रविततता तिरोऽभवत् ।२४॥
ककुभोरजस्वलतया पुरानयाः
प्रसमीक्षितुं समुचिताश्च ना ययुः ।
अधुना निवृत्तरजसो घनावली
शितिशाटिकाभि पिहिताः सुदृश्यतां ।२५॥
ध्वनता धरादिषु घनेन नो कृतः
पविपात एवतु नितान्त कर्कशे ।

प्रत्यग्रत्वाद्धाराणां सूक्ष्मत्वं सामान्येनैकवचनं विगलिते सति इद्धसत्वे प्रवृद्धसत्वगुणे हृदि हृदये इव भक्तसन्ततेरितिबोध्यं, अभ्रमांसले अभ्रैः मेघैः मांसले बहुले मेघपूर्णे खे आकाशे प्रविततता व्याप्ता पूर्वमिति भावः रजसः धूले रजोगुणस्य च ततिः रावणं धूलिपक्षेजातेरेकवचनं तिरोऽभवत् तिरोहिताभूत् । २४॥

ककुभइति । पुरा ग्रीष्मर्त्तौ याः ककुभः दिशः रजस्वलतया धूलिव्याप्तत्वेन आर्त्तवसम्पन्नत्वेनच प्रसमीक्षितुं सम्यग्द्रष्टुं न समुचिताः नयोग्याः । अधुना वर्षर्त्तौ ता दिशश्च निवृत्तानि रजांसि धूलयः आर्त्तवानिच यासां तथोक्ताः घनावली मेघपंक्ति रेव शितिशाटिका नीलवस्त्राणि ताभिः अभिपिहिताः आच्छादिताः सत्यः सुदृश्यतां स्वच्छन्ददृश्यतां ययुः प्रापुः । रूपकसमासोक्ती । २५ ॥

ध्वनतीति । ध्वनता शब्दं कुर्वता घनेन मेघेन धरादिषु पर्व्वतादिषु एव केवलं पविपातः वज्रप्रहारः नो कृतः । तु पुनः नितान्त कर्कशे अतिकठोरे पुनः नतैः प्रणतैः पतिभिः प्रियैः दुरपनेये दुःखेन अपनेतुमशक्ये मानिनीजनानां मानवतीनां मानाएव शृङ्गाणि तेषां निवहे समूहेऽपि निर्भरं सातिशयं

पतिभिर्नते दूरपनेय मानिनी
जनमानशङ्कु निवहेऽपिनिर्भरं ।२६॥
(युग्मकं)

मदनोऽयमेवनघनो धनुश्च-
तत् बहुवर्ण पुष्परचितं न वासवं ।
विशिखाः पतन्तिन नवोदविन्दवो
ननुसिंहनाद इह गर्जितं घनो ।२७॥

इति भेकभेङ्कृति विभीत मानसैः
पथिकैरमानिगलवर्त्ति जीवितैः ।
यतएव बिभ्यति जनस्तदात्मतां
सकलेषु पश्यतितरांहि सर्व्वदा ।२८॥

कृतः । यथा पर्व्वतादौ वज्रपातोऽभूत्तथा मानिनीमानेऽपत्र भूदित्यर्थः मेघध्वनिश्रवणेन मानिनीनां मानः स्वत एव विध्वस्त एव । रूपकातिशयोक्ती । २६ ॥

मदन इति । अयं पुरोदृश्यमानः मदनः काम एव, घनो मेघोन, च पुनः बहुवर्णैः पुष्पैः रचितं तत् प्रसिद्धं धनुः कामधनुः, वासवं ऐन्द्रं धनुः न, विशिखाः कामस्यवाणाः पतन्ति, नवोदविन्दवः नवजलविन्दवोन, इह सिंहनादः वीरध्वनिः ननु, गर्जितञ्च नो भावतीतिशेषः । अपह्नवः । उत्तरश्लोक इतिना सह सम्बन्धः । २७ ।

इतीति । भेकानांभेङ्कृतिभ्यः भेङ्कारशब्देभ्यः विभीतानि मानसानि येषां तथोक्तैः भेक ध्वनिनां कामोद्दीपकत्वातिभावः गलवर्त्ति जीवितैः कण्ठागतप्राणैः पथिकैः इति । पूर्व्वश्लोकोक्तं समानि मन्यते स्म : हि जनः लोकः यतः यस्मात् एव बिभ्यति भीतोभवति। सर्वदा सकलेषु वस्तुषु तदात्मतां तस्य भयकारणस्य स्वारूप्यं पश्यतितरां । अर्थान्तरन्यासः । २८ ।

हरिलीलयाधिगतयेव भावुकाः
प्रियसङ्गमेन पुरुषा यथा पुनः।
सकला जलस्थल वनौकसः परं
नववारिणा प्रमुदिता भृशं वभुः।२६॥

शशिसूर्य्ययोर्घन हतेरदर्शनं
प्रिययोः परं कुमुदिनीच पद्मिनी।
प्रसमीच्य चक्रतुरगाध पाथसि
स्वनिमज्जनं किमु वियोग मुद्रिते।३०॥

स्तनितेन गाढ़चकितै वंधूजनैः
सहसोपगूढ़ वपुषो विलासिनः।

हरिलीलयेति। अधिगतया प्राप्तया हरिलीलया भावुका भक्ता इव पुनः प्रियसङ्गमेन सुहृत्समागमेन पुरुषा यथा नववारिणासकलाः समस्ता जलस्थलवनौकसः जलचर स्थलचर वनचर प्राणिनः परं अत्यर्थं प्रमुदिताः सन्तः भृशं बभुः शुशुभिरे। नवजलसेवनेन प्राणिनो हृष्टाः शोभिताश्च बभूवुः। मालोपमा।।२६।

शशीति। वियोगेन पतिविरहेण मुद्रिते निमिलिते कुमुदिनी कैरविणी पद्मिनीच द्वे प्रिययोः स्वनायकयोः चन्द्र-सूर्य्ययोः घन हतेः मेघावरणाद्धेतोः अदर्शनं प्रसमीच्य ज्ञात्वा अगाधपाथसि अतलस्पर्शे जले स्वनिमज्जनं चक्रतुः किमु? चन्द्रसूर्य्यौ मेघाच्छन्नौ जलातिरेकात् कुमुदिनी पद्मिन्यौ निमग्ने बभूवतुरितिभावः। उत्प्रेच्चा यथासंख्यं।३०॥

स्तनितेनेति। स्तनितेन मेघध्वनिना गाढ़चकितैः अति चमत्कृतैः वधूजनैः स्त्रीभिः सहसा उपगूढ़वपुषः आलिङ्गित-देहाः वरहर्म्यगताः उत्कृष्टसौधस्थिताः विलासिनः धन्यौ

धरणौ नवीनरस वृष्टि कारिणं
बरहमंगगा घनमदर्शयन्निमान् । २१ ॥
भुजमुन्नमय्य ऋजुतर्जनीं वक्रान्
युवतीजनस्य परिपश्यतः स्फुटान् ।
मदनेन कक्षत उदृच्छता हतो
युवको कुचं प्रतिचकार मर्दयन् ।२२॥
अभिसारिका असितरङ्कु वावृताः
स्तिमितालकाः प्रविरलेऽम्बुवर्षणे ।
निशिविद्रुता तमसिवा वयस्यया
व्यगमन् प्रदर्शितपथाः प्रियालयान् । २३॥

भूमौ नवीनरसवृष्टिकारिणं नवजलवृष्टिं कुर्वाणं घनं मेघं इमान् वधूजनान् अदर्शयन् दर्शयामासुः स्वभावोक्तिः समासोक्तिश्च । २१ ॥

भुजमिति। ऋज्वीसरला तर्ज्जनीअङ्गुलिः यस्य तथोक्तं भुजं बाहुं उन्नमय्य उद्धृत्य वक्रान् पक्षिविशेषान् परिपश्यतो विलोकयतः युवतीजनस्य स्फुटाव्यक्तात् कक्षतः भुजमूलात् उदृच्छता उद्गच्छता मदनेन आहतः प्रहृतः युवकः कुचं स्तनं युवतीजनसीतिभावः मर्दयन् पीडयन् प्रतिचकार कामप्रतिकारं चकार। कक्षात् कामस्योद्गमनात्तत्पीड़ां चकार। प्रकृते तु कुचमर्द्दनेन कामशान्तिं चकार। काव्यलिङ्गं । २२ ।

अभिसारिका इति। असितैः नीलैः राङ्कवैः मृगलोमजवस्त्रैरावृताः अवगुण्ठिताः जलपतन् निवारणार्थमितिभावः। स्तिमिता आर्द्राः अलकाः यासां तथोक्ताः अभिसारिकाः अम्बुवर्षणे जलवृष्टौ प्रविरले सति निशि रात्रौ तमसि अन्धकारे

कलुषे जले कमलिनौ निमज्जनात्
सह दर्दुरैर्वसितु मुत्कट स्वनैः
असहा ययौ किमु मराल मण्डली
भवनान्मुमुक्षुरिव मानसं सरः । ३४ ॥
जलदं प्रियं नवरसाभि वर्षिणं
पुलकाञ्चितेव समुदीक्ष्य पुष्पिता ।
त्रपयेव नीपपटली शिलीमुखै
र्नमिताधिवासित दिगन्तरा वभौ ।३५॥
कृषिकाः कृषेरभिनवां दिने दिने
सुदशां विलोक्य शिशुसन्ततेर्यथा ।

वयस्यया वा सखिव विद्युता प्रदर्शितपथाः दर्शितमार्गाः सत्यः प्रियालयात् सङ्केतालयान् आगमन् । उत्प्रेक्षा । ३३ ॥

कलष इति । कलुषे आविले जले कमलिन्या पद्मिन्याः निमज्जनाद्धेतो उत्कटस्वनैः विकटध्वनिभिः दर्दुरैः भेकैः सह वसितुं असहा किमु अन्नमिव मरालमण्डली हंसकुलं मुमुक्षुः मोक्षेच्छुः भवनात् गृहादिव मानसं सरः ययौ जगाम मानस सरोवरस्यापि मोक्षसाधकत्वं पुराणप्रसिद्धं । उत्प्रेक्षोपमे । । ३४ ॥

जलदमिति । नीपपटली कदम्बतरुपंक्तिः नवरसाभिवर्षिणं नवरसस्य नवजलस्य च दायकं जलदं मेघं प्रियं समुदीक्ष्य पुलकाञ्चिता रोमाञ्चितेव पुष्पिता सञ्जातपुष्पा अतएव त्रपयेव शिलीमुखैः भ्रमरैः नमिता सती अधिवासितानि आमोदितानि दिगन्तराणि दिङ्मध्यानि यया सा सती वभौ शुशुभे । उत्प्रेक्षा । ३५ ॥

कृषिका इति । कृषिकाः कृषीवलाः "क्षेत्राजीवः कर्षकश्च कृषिकश्च कृषीवलइत्यमरः" शिशुसन्ततेर्यथा बालसन्तान-

गृहिणीर्मुदा जगदुरत्र वत्सरे
सुखिनो भवेमयदि शक्र पालिताः ।२६॥
मितवस्त्र पुष्पिततया हलिप्रियात्
विमुखाः सरोरुहमुखान् शिलीमुखाः
प्रसवान वीक्ष्यसलिले निराश्रया
गिरिकूटजेषु कुटजेषु रेमिरे ।२७॥
मरुदार्द्रतामधिगतोऽम्बु वर्षणै
र्बहुलीकृतो धुतकदम्ब धूलिभिः ।

सेत्र कृषेः कृषिजातस्य शस्यस्य दिनेदिने प्रतिदिनं अभिनवां नूतनां सुदशां अवस्थां विलोक्य मुदा हर्षेण गृहिणीः पत्नीः जगदुः बभाषामासुचुः । अत्रास्मिन् वत्सरे वयं शक्रेणेन्द्रेण पालिता यदि तर्हि सुखिनोभवेम धनिकाः स्यामः इति जगदुरित्यन्वयः । उपमा । २६ ॥

मितेति । मितवस्त्रान् द्वित्रिदिनान्यभिव्याप्य पुष्पिततया सञ्जातपुष्पत्वाद्धेतोः हलिप्रियात्कदम्बवृक्षात् विमुखा विरता कदम्बवृक्षस्य पुष्पितत्वं प्रसिद्धं, शिलीमुखा भ्रमरा सलिले जले सरोरुहमुखान् पद्मादीन् प्रसवान् पुष्पाणि अवीक्ष्य नदृष्ट्वा निराश्रया आश्रयशून्याः सन्तः गिरिकूटजेषु पर्व्वतशिखरजातेषु कुटजेषु गिरिमल्लिकासु "कुटजोगिरिमल्लिकेत्यमरः" रेमिरे रता बभूवुः । काव्यलिङ्ग । २७ ॥

मरुदिति । अम्बुवर्षणैः जलवृष्टिभिः आर्द्रतां शीतत्वं अधिगतः प्राप्तः धुतानि कम्पितानि यानि कदम्बानि कदम्ब-पुष्पाणि तेषां धूलिभिः परागैः बहुलीकृतः आर्द्रत्वाद्विलम्बत्वम् सुचितमितिभावः मरुद्वायुः वधूः स्त्रियः प्रियोरसि प्रियतम वक्षसि शयितुं समादिशन् आज्ञापयन् वार्षिकवायुस्पर्शा

शयितुं प्रियोरसि समादिशन्वधूः
पथिकान भीषयदुदग्र निस्वनैः । ३८॥
गृहकेकि नृत्यरुचिरेऽभ्र नन्दिनां
ध्वनिभिः प्लवप्रभृति जन्मिना कृतौ ।
कृतवाद्य कर्मणि तड़ित्प्रदीपिते
युवयुग्मकानि विदधुः स्मरोत्सवं ।३९॥
कलुषाः प्रचण्डनिनदा जवान्विताः
सरितोऽट्टहास रुचिफेन भासुराः ।
लहरी करघ्नतटस्थिताः पतिं
कुपिताः प्रभगल्भवनिता इवोद्ययुः ।४०॥

कामिन्यः प्रियोरसिशयितुमिच्छन्तीतिभावः, उदग्रनिःस्वनैः उच्चध्वनिभिः पथिकान् अभीषयत् भीषयामास काव्यलिङ्गं ।
। ३८ ।

गृहेति । गृहकेकिनां गृहमयूराणां नृत्यैः नर्त्तनैः रुचिरे मनोहरे अभ्रेण मेघेन नन्दिनां अनन्दितानां प्लवप्रभृतीनां भेकादीनां जन्मिनां जन्तूनां ध्वनिभिः शब्दैः कृतं सम्पादितं वाद्यकर्म्म वादित्रकृत्यं यस्मिन् तस्मिन् तड़िद्भिर्विद्युद्भिः प्रदीपिते उज्ज्वलीकृते ऋतौ अस्मिन् प्रावृषि युवयुग्मकानि युवक युवती युगानि स्मरोत्सवं कामकेलिं विदधुः चक्रुः । रूपकं । उत्सवोहि नृत्यवाद्यप्रदीप प्रकाशितेकाले भवेदितिभावः । ३९ ।

कलुषा इति । कलुषा आविला स्वरूपेण मनसाचेत्यर्थः प्रचण्डा रूक्षा निनदा ध्वनय आक्रोशवचनानिच यासां ताः जवेन वर्षाहेतुकेन क्रोधहेतुकेन च वेगेन अन्विता युक्ता अट्टहास रुचिभिः फेनैः डिण्डीरैः भासुराः लहर्य्यः करा हस्ता इव तैः घ्नता ताडिताः तटस्थिता तीरस्था वृक्षादयः उदासीनाश्च

विपदीव पङ्किलतया खिलीकृते
सुपथे प्रयान्ति कुपथेन मानवाः ।
इतिनौकयेश्वदययेव संसृतिः
सरितां ततिः प्रसुतरा तदाभवत् ।४१॥
हरिरेवमादि बहुलक्ष्म लक्षितं
घनकाल मुच्चतर सौध सुस्थितः ।
युवतीव्रतः स्वनुभवन् रसप्लुतां
जगतीं ददर्श निजशासनस्थितां ।४२॥
दृढबन्धगाढ़ सुरतक्षमाः क्षपा
नवसङ्गमावसरेतोपि वार्षिकाः ।

याभिस्ताः क्रोधिनप्रोच्छ्रि यज्ञमपुरदासीनं प्रहरन्तीति दृश्यते, सरितः नद्यः कुपिताः क्रुद्धाः प्रगल्भवनिताइव पतिं समुद्रं उद्दूययुः उन्नता वभूवुः । उपमा । ४० ॥

विपदीति । विपदि विपत्ताविव तदा तस्मिन्नृतौ; इत्यर्थः पङ्किलतया कर्दमात्तलेन प्राक्तनपापबन्धेन च सुपथे सुमार्गे शुभाचारे खिलीकृते अप्रहतीकृते सति मानवाः कुपथेन कुमार्गेण दुराचारेण च प्रयान्ति गच्छन्ति इति विचार्थ्य स्थितया नौकया हेतुना ईश्वदयया परमेश्वरकृपया हेतुना संसृतिः संसारइव सरितां ततिः नदीसमूहः प्रसुतराः प्रकर्षेण सुतरणीया अभवत् । उपमोत्प्रेक्षे । ४१ ॥

हरिरिति । उच्चतरे हर्म्ये सौधे सुस्थितः सुखासीनः हरिः श्रीकृष्णः एवमादिभिः इत्यादिभिः बहुलक्ष्मभिः प्रभूतैः कदम्बादिचिह्नैः लक्षितं युक्तं घनकालं मेघसमयं युवतीव्रतः सन् स्वनुभवन् सुखेन यापयन् रसप्लुतां जलप्लाविता निजशासनस्थितां स्वाधीनां उचितर्त्तु धर्म्मयुतां जगतीं ददर्श । ४२ ।

उपभुज्य मद्रसुतयाच मुग्धया
तनुमध्यया जनितदैव मध्यया ।४३॥
रसितोत्थभीति विरलत्रपां प्रियां
पटुचाटुभिश्च हरिरङ्क मापयन् ।
समदर्शयत्कनक जित्वरद्युतिं,
तड़िदञ्चिते नवघने निजच्छविं ।४४॥

कृष्णां द्वादशमास वाहुलतिकाः षड्भिः प्रसन्नाः समा
ऋत्वासैरदिवस प्रतीकरुचिराः पञ्चाङ्ग सन्धिस्थिराः ।
यामास्थि प्रवलान्तराः चणमया स्त्वक् स्रोतसा बर्द्धिताः
कान्तायुक्त मनेकिकाः सुनिपुणा द्वाद्धोयथोपासते ।४५

इह ति। तनुमध्यया कृशोदर्य्या मुग्धया-सुन्दर्य्या प्रथमावतीर्णयौवनमदनविकारेति लक्षणाक्रान्तया नायिकया मद्र सुतया लक्ष्मणया नवसङ्गमावसरतः नूतनसम्भोगकालेऽपि दृढ़वन्धैः धेनुकादिभिः गाढ़े प्रकृष्टे सुरते क्षमाः समर्थाः वार्षिकाः प्रावृषेण्याः क्षपाः रात्रीः उपभुज्य अनुभूय तदा तत्कालमेव मध्यया मध्याविचित्र सुरतेति लक्षणा क्रान्तया नायिकया अजनि अभूयत। अतिशयोक्तिः मुग्धा लक्ष्मणा वर्षा कालीन सम्भोगसुख मनुभूय मध्याजातेत्यर्थः। ४३ ॥

रसितेति। हरिः रसितेन मेघध्वनिना उत्थया जातया भीत्या भयेन विरलत्रपां मन्दमन्दाचां कनकजित्वरद्युतिं स्वर्णसमानकान्तिं प्रियां लक्ष्मणां पटुचाटुभिः चतुरप्रियोक्तिभिः अङ्कं उत्सङ्गं आपयन् प्रापयन् तड़िता विद्युता अञ्चिते शोभिते नवघने नीलमेघे निजस्य स्वस्य प्रियायुक्तस्येतिभावः छविं तत्सदृशीं कान्तिं समदर्शयत् दर्शयामास। काव्यलिङ्ग निदर्शने। ४४ ॥

दुष्टानिष्ट विशिष्ट तुष्टि घटकं संसेव्य हृष्टान्तरा,
अष्टौ पट्टमहिष्य उत्कटनटत् श्रीनिष्कुटं तं वभुः ।
वालेय बल्लव बल्लभा रमयतो रामानुजस्याश्च तत्,
नोचित्रं निखिलाण्ड चेतनकृतः कंसद्विषोमन्महे ।
। ४६ ॥

सुदामद्विज श्रीप्रदस्य प्रसादात्
सुनन्दन्तु लोकाबुधाः सत्क्रियन्तां ।

कृष्णमिति । द्वादशमासाः वाहुलतिका इव यासां ताः षड्भिः ऋतव आस्यानि मुखानीव तैः प्रसन्नाः दिवसाः दिनानि प्रतीकाः अङ्गानीव तैः रुचिरा मनोहरा पक्षा अर्द्धमासाः अङ्ग सन्धय इव तैः स्थिरा दृढ़ा यामाः प्रहरा अस्थीनीव तैः प्रबलान्तराः दृढ़ाभ्यन्तराः क्षणमयेन क्षणस्वरूपेण असृक्-स्रोतसा रक्तप्रवाहेण वर्द्धिताः पुष्टाः अनेकिकाः बह्व्यः समाः सम्वत्सराः निपुणा दास्यो यथा चतुर परिचारिका इव कान्ताभी रुक्मिण्यादिभिः युक्तं कृष्णं उपासतेस्म आराधयामासुः कान्तायुक्तस्य भगवतो बह्वोऽब्दा गतीता इति भावः । संवत्सरो वत्सरोऽब्दोहायनोऽस्त्री शरत्समाः द्वौयाम प्रहरौ समाविति चामरः । उपमा । शार्दूल विक्रिडितं वृत्तं । ४५ ।

दुष्टेति । अष्टौ पट्टमहिष्य रुक्मिण्यादयः दुष्टानां दुर्जनानां अनिष्टस्य अमङ्गलस्य विशिष्टानां सज्जनानां तुष्टेः सन्तोषस्य च घटकं सम्पादकं उत्कटं नटन्ती या श्रीः शोभा तस्या निष्कुटं आरामभूतं तं श्रीकृष्णं संसेव्य हृष्टान्तरा आनन्दितचित्ताः बभुः शुशुभिरे । बालेय बल्लव बल्लभा गोपाङ्गनाः रमयतः प्रीणयतः निखिलाण्डस्य समग्रब्रह्माण्डस्य चेतनकृतः चैतन्यप्रदस्य कंसद्विषः अस्य श्रीकृष्णस्य तत् अष्टमहिष्या नन्दनं

सुभिक्षं सदास्तां प्रजाः पान्तु भूपाः
सुखङ्गं तु नोवुद्धयस्तत्पदाब्जे। ४७॥
योऽभूद्दिष्णु रथस्य चित्ररचना दक्षस्य तस्य कवे
र्धीरः श्रीभुवनेश्वरः सुविदुषा मग्रस्य पुत्रोरथः।
तस्य श्रीयुत लक्ष्मणा परिणयं नव्यं सुकाव्यं कृति
र्नैष्किञ्चन्य दवेन्धनस्य नवभिः सर्गैरगात् पूर्णतां
। ४८॥

नोचित विस्मयकरं मन्मह्ने जानीमः वयमितिशेषः। रूपक काव्यलिङ्गे, वृत्तं पूर्ब्बवत्। ४६॥

सुदामेति। सुदामद्विजास्य सम्बन्धे श्रीप्रदस्य संपत्प्रदायकस्य श्रीकृष्णस्य प्रसादात् अनुग्रहात् लोका जन्यः सुनन्दन्तु आनन्दिताभवन्तु। वुधाः पण्डिता सत्क्रियन्तां सत्कृता भवन्तु। सदासुभिक्षं आस्तां, भूपाः राजानः प्रजाः पान्तु धर्म्मेण रक्षन्तु। नः अस्माकं वुद्धयः तस्य श्रीकृष्णस्य पदाब्जे पादपद्मे सुभृङ्गन्तु सुखेन भ्रमरीभवन्तु। भुजङ्गप्रयातं वृत्तं। भुजङ्गप्रयातं चतुर्भिर्यकारैः। रूपकं। ४७॥

यद्रति। नास्तिकिंचन यस्य सनिष्किंचनो दरिद्रस्तस्य भावोनैष्किञ्चन्यं तदेवदवोवनाग्नि स्तस्य इन्धनस्य दाह्यभूतस्य अथवा नैष्किञ्चन्यदवे वैराग्यवने इन्धनस्य काष्ठभूतस्य तस्य कवेः कृतिः श्रीयुत लक्ष्मणा परिणयाख्यं नव्यं नूतनं सुकाव्यं नवभिर्नवसंख्यके सर्गैः पूर्णतां अगात् समाप्तः। ४८॥

इति श्री लक्ष्मणापरिणय व्याख्यायां नवमः सर्गः समाप्तः।

समाप्तोऽयं ग्रन्थः।



# शुद्धिपत्रम् ।

| पृष्ठा | पंक्ति | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| ४ | ३ | ईतूर | इतूर |
| ६ | १५ | ह्वारै | ह्वारौ |
| ७ | ८ | भतां | भृतां |
| ११ | ८ | बिहारी | ·बिह्वारि |
| १३ | ११ | दु:खित: | दु:खित |
| १३ | ७ | स्स | स्त्र |
| १३ | ८ | वर्म्म | वर्त्म |
| १३ | २१ | वत्म | वर्त्म |
| १८ | २१ | बिरोधाभाषा | बिरोधाभासा |
| २१ | १५ | वक्ष्यामि | वक्ष्यामि |
| २५ | १९ | जहृषु | जहृषुः |
| २७ | १० | चलन्ति | चलन्तौ |
| २८ | १ | परतर्जितायाः | परितर्जितायाः |
| ३८ | ३ | ऽज्वयुगं | ऽब्जयुगं |
| ३८ | १० | आलयः | अलयः |
| ३९ | १५ | यस्य | यस्य |
| ३९ | १५ | रेखायाया | रेखया |
| ४० | ९ | कर्षं | कर्षान्त |
| १४ | ८ | कर्षन्तौ | कर्षन्तौ |
| ४० | १७ | शल्वांश | शल्द्रांश |
| ४० | १८ | शल्वसेर | शल्द्रसेर |
| ४१ | १४ | चञ्चु | चञ्चु |
| ४१ | १५ | काङ्कवा | कापङ्कवा |
| ४२ | १६ | अरुणा | अरुणा |
| ४२ | १९ | त्विजय | द्विजय |
| ४२ | २१ | संख्यक | संख्यके |
| ४३ | १४ | शरीरस्थः | शरीरस्य |
| ४४ | ९ | शदाः | शब्दाः |
| ४४ | १५ | लक्षमितु | लमिति |

| पृष्ठा | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४५ | ३ | स्थना | स्तना |
| ५० | १५ | ग्रीष | ग्रीष: |
| ५३ | २१ | धात्री | धात्रीं |
| ५४ | ८ | कर्णां | कर्णौ |
| ५४ | ११ | श्रुतेय | श्रुत्वे |
| ५५ | १८ | लीना | लीन |
| ६४ | १५ | पुतः | पुनः |
| ६४ | १८ | चालयेत् | चालयत् |
| ६९ | १६ | जलति | जल |
| ७० | १० | रचिताः | रचिता |
| ७५ | १ | ग्रहै | ग्रव्है |
| ७५ | २१ | कर्त्तुणां | कर्त्तुणां |
| ७९ | ३ | तुरद्क | तुरत्क |
| ८२ | ११ | च्छिदा | छिदा |
| ८१ | २० | गणयित्या | गणयित्वा |
| ८४ | ११ | ग्रक्त | सक्त |
| ८५ | १८ | ममग्रसू | मसू |
| ८६ | १८ | भेदनी | भेदिनी |
| ८८ | १२ | तायिकायाः | नायिकायाः |
| ९० | ७ | वात्मज | दात्मजे |
| ९३ | ६ | वाहिनिनां | वाहिनीनां |
| ९८ | १९ | कैतनानी | केतनानि |
| ९९ | १९ | अपूजयेत् | अपूजयत् |
| १०१ | १९ | रोचस | रोचिषः |
| १०३ | १६ | भवेत्यदि | भवेद्यदि |
| १०३ | २१ | ध्नयः | ध्वनयः |
| १०४ | १ | वेश्म | वेश्म |
| १०८ | ७ | समुलसत् | समुल्लसत् |
| १०९ | १२ | निश्चलं | निश्चलः |
| ११४ | १९ | पुष्पेषुः | पुष्पेषु |
| ११५ | १० | पलानि | फलानि |
| ११५ | १९ | मम्भूताः | सम्भूताः |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ११८ | १२ | मण्डेम | मण्डेन |
| ११९ | १२ | संदशनात् | संदर्शनात् |
| ११९ | १५ | कौशलेः | कौशलैः |
| १२० | १२ | मौनक्क | मौनकं |
| १२० | १७ | सहस्राशः | सहस्रशः |
| १२१ | २० | दृश्यतां | ईक्ष्यतां |
| १२७ | १३ | वेश | देश |
| १२७ | २० | शुण | शुग |
| १२८ | ११ | शिव, | शैव |
| १२८ | १२ | कौतुकं | कौतुकं |
| १२९ | २४ | पलम्बकः | प्रलम्बकः |
| १३० | १४ | प्रलम्बा | प्रलम्ब |
| १३० | १४ | सादृशं | सादृश्य |
| १३० | ७ | बाह्नौ | बाह्नि |
| १३२ | २१ | शमितं | गमितं |
| १३२ | २४ | स्वरूपा | स्वरूपं |
| १३३ | १५ | परमामात्मा | परामात्मा |
| १३७ | १५ | शरं | गरं |
| १३७ | १५ | शत | गत |
| १३८ | ३ | नसौ | न्नसौ |
| १५२ | ११ | अर्थापतिः | अर्थापत्तिः |
| १५४ | १४ | सहोक्तिः | सहोक्तौ |
| १५८ | ५ | ऋषे | कृषे |
| १५८ | १९ | अरचयत् | अरचत् |
| १६२ | १५ | बभ्रम | बभ्राम |
| १७० | १६ | मारिताः | मारितः |
| १७४ | ४ | स्विकं | स्वकां |
| १७४ | ५ | नासिकां | नासिकं |
| १७६ | ११ | शद्वै | शब्दै |
| १७७ | ७ | स्वंमातृपितृ | स्वपितृ |
| १८१ | ५ | त्रसतोऽह | भयमेति |
| १८१ | १४ | [illegible]ति | भयमेति |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १८२ | ६ | रश्मि,ना | रश्मिना |
| १८५ | २ | र्थ्यं | र्थ |
| १८८ | ८ | भेदस्यती | भेत्स्यते |
| १९२ | २४ | पूजेयति | पूजेति |
| १९७ | १० | भूते: | ह्यूते: |
| २०० | २ | प्रदर्शया | प्रदर्शय |
| २०१ | २१ | कृति | कृतिं |
| २०४ | १६ | 'अनना | आनना |
| २०५ | २० | आरभत् | आरभत |
| २०७ | १५ | कालजंघ | तालजंघ |
| २१० | १० | प्रयोक्ति | प्रयोक्तौ |
| २११ | १६ | दुसमर्थः | असमर्थः |
| २११ | २१ | ब्रह्मं | ब्राह्मं |
| २१९ | २१ | प्राल्पत् | प्राल्पात् |
| २२२ | ७ | धिरा | धिग् |
| २२४ | ६ | वेध | वेधन |
| २३४ | २३ | दिष्यन्तौ | विष्यन्तौ |
| २५० | ७ | वुद्दतं | गुद्दतं |
| २५२ | २० | द्भ्रव | द्रव्भ्र |
| २५५ | १३ | चभवत् | चाभवत् |
| २५६ | १५ | मित्र: | मित्रं |
| २६४ | २१ | प्रयोक्ति | प्रयोक्तौ |
| २६७ | १६ | विरा | वीरा |
| २७२ | १६ | जगत्म् | जगत्सु |
| २७३ | १४ | मित्सः | मिक्षु: |
| २७३ | १८ | भिनत् | भिनत्तु |
| २७४ | २३ | सौन्दर्थ्य | सौन्दर्य्यं |
| २८० | २१ | घातीनां | घातिनां |
| २८० | २१ | प्रव्,णां | प्रव्ृणां |
| २८७ | २ | स्थूल | स्तूल |
| २९१ | १८ | स्पृष्ट | स्पृष्ट |
| २९२ | २० | प्रभव: | प्रव: |

| पृष्ठा | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २६८ | ११ | धृताः | धुताः |
| ३०४ | १३ | भुवेन | भवेन |
| ३१० | २ | न्तयामि | न्तरयामि |
| ३१६ | १४ | उदितानि | उदिता |
| ३१६ | १५ | जातानि | जाता |
| ३१६ | १५ | कणानि | कणा |
| ३१७ | १६ | क्रुद्धा | क्रुधा |
| ३२७ | २३ | सुहृदं | सुहृदं |
| ३२७ | २५ | दार | दारु |
| ३३१ | ३ | भेके | भेको |
| ३३१ | १७ | नकिन्तु | किन्तु |
| ३३८ | ११ | अङ्गशास्य | अङ्गशस्य |
| ३३८ | २२ | उत्तरोष्ठ | निम्नोष्ठ |
| ३३९ | ६ | प्रपुर्णानि | प्रपूर्णानि |
| ३३९ | १८ | उदश्य | उदस्य |
| ३४० | ६ | सुतं | सूतं |
| ३४१ | ४ | जटिति | झटिति |
| ३४१ | १७ | राज्ञा | राज्ञां |
| ३४२ | ६ | तव्याम्बुमुक्त | नव्याम्बुमुक |
| ३४३ | १८ | सह्वार | सह्वाय |
| ३४४ | १ | झणात् | भझणात् |
| ३४६ | ६ | फणौ | पणौ |
| ३५२ | १५ | स्वक्रजं | स्वकज |
| ३५६ | ७ | पति | प्रति |
| ३५८ | ८ | दवर्त्तयतां | भवर्त्तयतां |
| ३५९ | १६ | विषया | विषया |
| ३६० | ७ | भवन्ताः | भवन्तः |
| ३६० | २० | दुर्यिषुः | दृषुः |
| ३७२ | १२ | स्वस्थाय | स्वास्थाय |

| पृष्ठा | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३७३ | २२ | वृत्तिः | वृतिः |
| ३७३ | २४ | जीतं | जातं |
| ३७७ | १६ | स्तालवन्ता | स्तालवृन्ता |
| ३७६ | २३ | द्विपकाः | द्वीपकाः |
| ३८२ | १६ | चन्द्राश्च | चन्द्राश्र |
| ३८३ | १५ | स्वरसेत्र | स्वरसेत्र |
| ३८४ | १८ | स्वं | सं |
| ३६२ | १ | मत्यङ्गं | मत्यग्रं |
| ३६२ | ८ | परिद्वाभा | परिद्वासभा |
| ३६२ | १२ | मत्यङ्गं | मत्यग्रं |
| ३६३ | १७ | वेश्मेने | वेश्मेन |
| ३६५ | २१ | भ्रमन्त्यन्ति | भ्रमन्त्यन्त |
| ३६८ | १ | सकल | शकल |
| ३६८ | १६ | लषितता | लषिता |
| ४०० | १ | लोचना: | लोचन: |
| ४०० | ८ | त्कटत् | नटत् |
| ४०० | ४ | जलदोऽर्कि | घनमार्कि |
| ४०० | १५ | जलदो | घनो |
| ४०० | १५ | अर्कैः | आर्कैः |
| ४०४ | ७ | रङ्कवा | राङ्कवा |
| ४०५ | १६ | समुदोघ | समुदोघ्र |
| ४०८ | १० | वसरे | वसर |

---

